समस्त स्वत्व रजिष्टरी करके स्वाधीन रखा गया है ।

॥ श्रीः ॥

# परपक्षगिरिवज्रः ।

श्रीमन्निम्बार्कमतानुयायिसुप्रसिद्ध पदवाक्यप्रमाण-
पारावारीणश्रीमत्त्रय्यन्तपथप्रतिष्ठापनदेशिक
श्रीमन्माधवमुकुन्दचरणैर्विरचितः ।

॥ सच ॥

परमहंस परिव्राजकाचार्य्य श्रीश्रीमत् स्वामि
प्रकाशानन्दसरस्वती पूज्यपादशिष्य ।

श्रीनित्यस्वरूपब्रह्मचारिणा ।

सम्पादितं प्रकाशितञ्च ।

॥ सोऽयम् ॥

॥ श्रीवृन्दावनधाम्नि ॥

श्रीनित्यस्वरूपब्रह्मचारिणास्वकीये ॥

॥ श्रीदेवकीनन्दनाख्यमुद्रणालये ॥
॥ मुद्रितः ॥

॥ श्रीविक्रमादित्यराज्यतोगताब्दाः सम्वत् १९६९ ॥

प्रथमावृत्तिः १०००　　　　मूल्य ५) रु०

# भूमिका ।



हे श्रीब्रह्मसूत्ररसमिलिन्दाः !

अयतामवतंसतां तत्रभवतं भवतां सम्प्रत्यसौ सुप्रवृत्तिः प्रवृत्तिः विहायेमां वाचंयमतां कलयन्तु चातिहर्षगुञ्जितानि जितशेतर-ध्वनीनि इह खलु जगति पुरा किल श्रीब्रह्मसूत्रकल्पद्रुमतया परि-णतं यत्त्रिभुवनसौभाग्यं निखिलब्रह्मर्षिदेवर्षिराजर्षि विहितानुष्ठान-फलं वा तात्कालिकपरमभक्तजनेतरदुष्करानवकरचिरसुकृतसुकृत-पटलं वा श्रवणमननिदिध्यासनद्वारा कलियुगजन्तूद्धरणायानु-कम्पावशम्वदाचिन्त्यानन्तशक्तिसम्पन्नजगन्महानाटकसूत्रधारभग-वन्नन्दनन्दनप्रेरितभक्तिज्ञानादिस्वरूपमेव वा यस्य च वीजं परमकृपा-लुभिर्निसर्गधीरैरपि लोकनिस्तितारयिषितोत्तरलितैर्नित्ययुक्तैरपि नित्यमुक्तैर्महर्षिश्रीकृष्णद्वैपायनचरणैर्विज्ञानप्रदीपेन सततमतिगहने निगमकोषे ऽद्वितीयतया केनापि चतुरशिरोमणिना गोपायितमिव प्रसह्यान्विष्य मवादृक्षाणां हि कृते शब्दब्रह्मणि प्ररोपितम् यदुद्भूतो ऽयं द्रुमः सिक्तोऽपि तथैतन्महर्षिसम्भवया भगवत्या भारत्या विभू-षितो ऽविरतमद्यावधि वर्द्धमानो विविधावतारोत्साहीश्वर इवाने-करूपतां दधद्दर्शनपथमेति विपश्चिताम् तथाहि यमिमं ब्रह्मसूत्र-कदम्बं भवमहापारावारपारप्रापणपरानौमचर्चिकेति मत्वा श्रीकलि-मलपावनसुदर्शनावतारनिम्बादित्याचार्य्यरत्नचरणनलिनचञ्चरीक-पदवाक्यप्रमाणपारीणमहामहोपाध्यायवङ्गदेशान्तर्गतारुणघटा-नामकग्रामवास्तव्यश्रीमन्माधवमुकुन्दचरणैतिसमाख्यां दधानैश्शा-रीरकहार्दसञ्चयनामको तदुद्व्याख्यानभूतो ग्रन्थो ऽरचि इममेव के-चित् परपक्षगिरिवज्रम् अथच अध्यासगिरिवज्रमपि ब्रुवन्ति अस्मिश्च ग्रन्थे पञ्चाशतोऽपि किञ्चिदधिकानि प्रकरणानि सन्तितराम् तत्तत् प्रकरणेषु च अन्यमतनिराकरणपूर्वकस्वीयमतेनैव सूत्राणां सामञ्जस्यं कृतम् एतद्ग्रन्थरत्नस्य ग्रन्थकर्त्तुश्च प्रशस्यतामेतद्ग्रन्थाव-

लोकनेनैव ज्ञास्यन्ति मनीषिणः किं प्रशंसालेखनेन एतद्ग्रन्थाव-
लोकनेनैव सर्वशास्त्रराद्धान्तज्ञानं झटित्येवोद्भवतीति विज्ञेयं शास्त्र-
रसिकैः एतद्ग्रन्थावलोकनेन विबुधा आनन्दवारिधिस्तरङ्गित इव
भवतीति पर्य्यालोच्य श्रीनित्यस्वरूपब्रह्मचारिणा एतन्मुद्रणे ऽति-
प्रयत्नं कृत्वा मुद्रितः तेनैव एतद्ग्रन्थसंशोधनादिसंस्कारे श्रीत्रिवेदि
कुलावतंस शास्त्रि चण्डिकाप्रसाद तनूज दुलारेप्रसादशास्त्र्यह-
मुदयोजि तदत्र चित्तासेचनकं गुणानुरागेण वा ग्रन्थकर्त्तुर्गौरवेण
वा साधारणजनोत्साहविवर्द्धिषया वा ऽङ्गीकुर्वन्तु नयनार्पणायासम्
अनुभवन्तु परमानन्दपरम्परां क्षाम्यन्तु लोहाक्षरयोजकादिदोषेण
मदीयशेमुषीदोषेण वा सुलभानि स्खलितानि विवर्द्धयन्त्वाशीरा-
शिभिर्ग्रन्थप्रकाशकमनुषङ्गतो माञ्च गुणैकपक्षपातिनः सहृदयधुरी-
णा उदाराशया धीरवरा इति सप्रश्रयमभ्यर्थयते कानपुरीयपाठ-
शालाऽध्यापको दुलारेप्रसादशर्म्मा ॥

---

ॐ तत्सत् ।

श्रीराधाकृष्णाख्यमहसे नमः ।

श्रीमते भगवन्नियमानंदाय नमः ।

# परपक्षगिरिवज्रः ।

## प्रथमोऽध्यायः ।

——::*::——

पराभिमत विषय सम्बन्धगिरिनिपातः ।

वेदान्तवेद्यं जगताञ्च हेतुम् ।
मुक्तोपसृप्यं द्रुहिणेशवन्द्यम् ॥
श्रीमन्मुकुन्दं व्रजलोकप्रेष्टम् ।
मुमुक्षुमृग्यं शरणं व्रजामि ॥ १ ॥
ज्ञानप्रदं विश्वगुरुं हयास्यम् ।
विज्ञानवात्सल्यदयादिसिन्धुम् ॥
प्रपन्नरक्षार्थनिबद्धकक्षम् ।
सर्वेश्वरं नित्यमहं स्मरामि ॥ २ ॥
नियामको यो भवकारणेभ्यः ।
स्वपादकञ्जं भजतां स्वकानाम् ॥
यस्मात्परानन्दमपास्तदोषम् ।
लब्ध्वा जनो याति भवाब्धिपारम् ॥ ३ ॥
तन्नामधेयं मनुजावतारम् ।

देवर्षिशिष्यप्रवरं गुणाब्धिम् ॥
श्रुत्यर्थवक्तारम-चिन्त्यशक्तिम् ।
ह्याचार्यमाद्यं तमहं प्रपद्ये ॥ ४ ॥

इह खलु ब्रह्मेशादिकिरीटकोटीडितपादपीठोऽनन्ता चिन्त्यस्वाभाविकशक्तिवैभवः सच्चिदानन्दस्वरूपो ऽनन्ताचिन्त्यस्वाभाविकज्ञानैश्वर्यादिकारुण्यवात्सल्य दयातितिक्षादिकल्याणगुणालयो जगज्जन्मादिहेतु वेदान्तैकज्ञेयो मुक्तगम्यो मुमुक्षुध्येयो रमानिवासो विश्वभूतान्तरात्मा सर्वेश्वरो मुकुन्दः परब्रह्माख्यः श्रीभगवान् वासुदेवः श्रीपाराशर्यरूपेण सत्यवत्या-मवतीर्य सर्वेषां तत्तत्पुरुषार्थसिद्धये स्वनिःश्वसितान् वेदानृग्यजुः सामादिरूपेण विभज्य स्त्रीशूद्र-जनोद्दिधीर्षया भारतादीन्विधाय मुमुक्षुजनानु-कम्पया च शारीरकमीमांसाख्यं वेदान्तशास्त्रं सूत्रयामास तस्य च कालावुच्छिन्नसंप्रदायत्वापत्त्या तत्प्रवर्त्तयितुकामो । नियमानन्दाचार्याख्यस्तद् व्याख्यानं वाक्यार्थरूपेण संगृहीतवान् तच्च शास्त्रं शङ्खावतारो भगवाञ्छ्री श्रीनिवासाचार्यो निगदं बभाषे तस्य च सौकर्येण तात्पर्यजिग्राहयिषया स्वसाम्प्रदायिकानामाचार्याणां श्रीहरेश्च प्रीणनाय

विदुषां कौतुकाय मुमुक्षूणां चोपकाराय परपक्ष-
गिरिवज्राख्यः शारीरकहार्दसञ्चयो नाम ग्रन्थो
निर्मीयते अथ शास्त्रमात्रारम्भस्यानुबन्धचतुष्टय-
सापेक्षत्वात् वेदान्तस्यापि शास्त्रत्वाविशेषात्तदनु
बन्धास्तावत्समस्यन्ते तत्राधिकारिलक्षणम् यद्यपि
"अर्थी समर्थो विद्वानधिकारी"ति सूत्रितं भगवता
जैनिमिना तथापि तस्य सर्वतन्त्रसामान्यात् अस्य
शास्त्रस्य तु सर्वविलक्षणतया ऽधिकारिणाऽपि केन
चिद्विलक्षणेनैव भाव्यम् तदुपायानां फलस्य च
विलक्षणत्वश्रवणात् अयंभावः सूत्रितलक्षणस्या-
धिकारित्वावच्छिन्नमेव लक्ष्यं न तु कश्चिद्विशेषः
शास्त्रमात्रस्याधिकारिमत्त्वात् यथा "स्वर्गकामो
यजेते"त्यत्र काम्यधर्माधिकारिणः स्वर्गार्थित्वं तदिष्ट
साधनभूतयागादिसम्पादनसामर्थ्यं तत्तत्साङ्गोपाङ्ग-
धर्मस्वरूपादेर्विद्वत्त्वञ्च श्रूयते एवमत्रापि तदितर-
शास्त्राधिकारिभ्यो ऽत्यन्तविविक्तार्थित्वादिविशेषण
सम्पन्नेनाधिकारिणा ऽवश्यं भवितव्यम् "आत्मा-
वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः
सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादिभिस्तस्य
साधनानां "परमं साम्यमुपैति तन्माहिमानमिति

ब्रह्मणः सायुज्यमाप्नोति जुष्टस्ततस्तेनामृतत्व-मेती"त्यादिभिः फलस्य च वैलक्षण्यश्रवणात् कोवात्राधिकारीत्यपेक्षायाम् "मुमुक्षुर्भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति श्रुतिर्मुमुक्षामेवास्यशास्त्रस्याधिकारितां बोधयति तथा च भगवद्भावापत्तिलक्षणमोक्षेच्छावत्त्वमेवास्यार्थित्वम् तद्वत्त्वेऽपि तत्प्राप्ति साधनसंपादनशक्त्यभावेऽर्थित्वस्याकिञ्चित्करत्वात् सामर्थ्यवत्त्वेन भाव्यमिति "अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते तमात्मस्थं येऽनु पश्यन्ति धीरास्तेषा सुखं शाश्वतं नेतरेषां तेषां सिद्धिः शाश्वती नेतरेषा"मित्यन्वयव्यतिरेकश्रुतिभ्यः सामर्थ्यविद्वत्त्वयोः श्रवणात् अधिकारित्वसिद्धिः तथाच भगवद्भावापत्तिलक्षणमोक्षकामो दर्शनश्रवणादीष्टसाधनसम्पादनसमर्थोऽभीष्टफलसाधनविषयकविद्वत्त्वाश्रयो वेदान्तशास्त्रस्याधिकारी तथाभूताधिकारसिद्धये श्रद्धोपसत्तिपूर्विका गुरूपसत्तिः वस्तुयाथात्म्यविवेकः विरागो भगवत्प्रपत्ति स्तदनुग्रहप्रार्थनादीनि साधनानीति विवेकः "श्रद्धा वित्तो भव आचार्यदेवो भव स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ यस्य देवे परा

भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः ॥ यो वै भूमा तदमृतं ततोऽन्यदार्त्तम् नास्त्यकृतः कृतेन प्लवा ह्येते अदृढा यज्ञरूपाः यथेहकर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् मुमुक्षुर्वैशरणमहं प्रपद्ये तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् यमेवैष वृणुते तेन लभ्यः ॥ श्रीकृष्ण रुक्मिणीकान्त गोपीजनमनोहर ! संसारसागरे मग्नं मामुद्धर जगद्गुरो ॥ केशव क्लेशहरण नारायण जनार्दन ! । गोविन्द परमानन्द मां समुद्धर माधव" ॥ इत्यादिश्रुतिभ्यः वेदाध्ययन कर्मजिज्ञासानित्यनैमित्तिकादीनाम् । विवेकादि संपत्त्यर्थकत्वान्न स्वातन्त्र्येणाधिकारिसिद्धौ विनियोगः "तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने" तिश्रुतेः ननु सांप्रदायिकैरधीतषडङ्गवेदेनेत्यादिना वेदान्ताधिकारिणोऽन्यथैव प्रतिपादनात्कथमुक्तलक्षणाधिकारिसिद्धिः तथात्वे चाचार्य्योक्तिविरोधेन कामचारापत्त्याऽपसिद्धान्तप्रसङ्गादितिचेन्न । संप्रदायोक्तविशेषणाकदम्बस्य

विवेकादिसिद्ध्यर्थकत्वमेव कर्मजिज्ञासादिकं विना ऽपि तत्फलभूतेषु विवेकविरागादिषु सत्सु कर्मज्ञानाद्यपेक्षाभावस्यैव विवक्षितत्वात् अत आचार्योक्तिविरोधाभावान्नोक्तदोषावकाशः एतदुक्तं भवति साम्प्रदायिकचरणैरधिकारिविशेषणान्यन्यान्यपि प्रतिपादितानीति सत्यम् तथापि कर्मणां तज्ज्ञानादेश्च परम्परयैव साधनत्वाभ्युपगमात् एवं चात्रापि कर्मतज्ज्ञानादेश्च विवेकज्ञानादिकरणत्वमेव निरूपितं नतु कर्मविवेकादीनां समुच्चयः तथाचोक्तम् श्री भगवच्चरणैराद्याचार्यैर्जिज्ञासाधिकरणे । अतएव जिज्ञासितकर्ममीमांसाविवेकनिश्चितकर्मतत्प्रकारक तत्फलविषयकज्ञानवता कर्मब्रह्मज्ञानफलं सान्तत्वानन्तत्वसातिशयत्व निरतिशयत्वविषयकव्यवसाय जातनिर्वेदेनेत्यधिकारिविशेषणाभ्याम् तदुक्तेरेवात्र नियामकत्वात् तथैव समन्वयाधिकरणेऽपि कृत्वङ्गं ब्रह्मेत्यपि बालभाषितम् तस्य सर्वकर्मकर्त्रादिकारक नियन्तृत्वेन स्वातन्त्र्यात् फलप्रदातृत्वाच्च प्रत्युत कर्मण एव विविदिषोत्पादनेन परम्परया तत्प्राप्तिसाधनीभूतज्ञानोत्पत्त्युपकारत्वेन समन्वय इति निश्चीयते विविदिषाश्रुतेरित्यादिना एतेनविवरण

विरोधशङ्का अपि निरस्ता तत्रापि तथैव प्रतिपादनात्
विधिप्राप्तोपनयनादि संस्कृताधीतषडङ्गश्रुतिजिज्ञा-
सितधर्ममीमांसा निरस्तकर्मफलादिविषयसन्देहक-
तत्फल निर्विण्णाभगवद्दिदृक्षालम्पटगुरुभक्तिसम्पन्न
मुमुक्ष्वधिकारिकत्वेनेत्यादिना साधनप्रक्रियायाश्च
मुमुक्षायां सत्यां तत्साधने यतते ततः कर्मज्ञानादि-
साधनेनाप्याराधितःश्री पुरुषोत्तमः प्रसीदति पर-
भक्तिज्ञानयोरेकतरं व्याजीकृत्यात्मानं दर्शयति
तस्मै मुमुक्षवे ततः श्रीभगवत्साक्षात्कारा ऽनुभवेन
तद्भावापन्नो भवतीत्यादिना एवञ्च न को ऽपि कथ-
मपि केनाप्यंशेन विरोधावकाश इति भावः किञ्च-
यस्य विवेकविरागादयो न सन्ति तस्य तदर्थं धर्म
जिज्ञासाद्यपेक्षा तदभावे धर्माधर्मानुष्ठानादिकं विना
बुद्धिशुद्ध्यभावेन विवेकादीनां दुर्घटत्वात् यस्य तु
विवेकादयो जातास्तस्य न तेषामपेक्षा फलप्राप्तौ
सत्यां साधनानामप्रयोजकत्वात् तत्रप्रवृत्त्यनुपपत्तेश्च
तथाभूताधिकारिणा मुमुक्षुणा जन्मान्तरेषु धर्मा-
चरितत्वेन तस्यसंस्कारात्मनासत्त्वेनेदानीं तन्निर-
पेक्षत्वात् अन्यथा विवेकादयो न स्युरित्यनुमीयते
कारणाभावे कार्याभावनियमात् परमते जनकादि-

संन्यासवदिति संप्रदायाशयः उपनयनस्वाध्याया-
देरपि सामान्यधर्मत्वेनाश्रमादिसम्पादनेनैव नैरा-
काङ्क्ष्यान्नाधिकारिविशेषसंपादने तस्य स्वातन्त्र्यं
साक्षादनन्वयात् । तस्मात्पूर्वसम्प्रदायिसिद्धान्ता-
विरोधादुक्तलक्षण एव वेदान्तशास्त्रस्याधिकारीति
सिद्धान्तः यदि मुमुक्षामात्रस्यैवाधिकारित्वसंपाद-
कत्वं तर्हि तस्या देवादिष्वपिसम्भवात्तेषामपि
शास्त्राधिकारित्वप्रसङ्ग इतिचेत्तथात्वस्येष्टत्वात् "यो
यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा
मनुष्याणा" मितिश्रुतेः ननु पूर्वकाण्डे ऽपि षष्ठे
ऽधिकारिलक्षणे मनुष्यस्यैव श्रौतस्मार्त्तकर्मस्व-
धिकारित्वनिर्णयात् "स्वर्गकामो यजेते"त्यत्र स्वर्ग
कामत्वश्रुतेःसामान्यात् तिर्यगादेरपि स्वर्गकामत्वे
तत्राधिकारः सम्भवतीति प्राप्ते अर्थित्वाद्यधिकारित्व
हेतूनां तिर्यगादावसंभवान्मनुष्यमात्रे स्वर्गकाम-
पदस्य संकोचं विधाय "वसन्ते ब्राह्मणोऽग्नीना-
दधीत ग्रीष्मे राजन्यः शरदिवैश्य" इति तेष्वपि
त्रयाणामेव अग्न्याधानश्रवणात्तेषामेवाधिकारइति
स्थापितम् किञ्चोत्तरकाण्डे ऽपि "हृदपेक्षयामनुष्या-
धिकारित्वात् ॥ १ ॥ ४ ॥ १४ ॥ इतिसूत्रेण

मनुष्यस्यैव शास्त्राधिकारित्वं निर्णीतम् तथात्वे
चोभयकाण्डविरोधात् कथं देवादीनामधिकार इति
चेन्न आपातोक्तेः तथाहि न तावत्पूर्वकाण्डोक्तनिर्णय-
विरोधः तस्याग्निसम्बन्धि कर्ममात्रविषयकत्वात्
अग्न्याधानश्रुतेरेवात्रानियामकत्वाच्च नाप्युत्तरत्रोक्त-
सूत्रविरोधः तस्य मनुष्याधिकारविधानमात्र एव
प्रामाण्यात् नेतरानिषेधेऽपीति एतदुक्तम्भवति देवा-
दीनामनधिकारो निषेधाद्वा विधायकप्रमाणाभावाद्वा
नाद्यः निषेधादर्शनात् न "चासावादित्यो देवानां
मध्वि"ति मधुविद्याया मादित्यवस्वादीनां देवानाम्
अधिकारित्वनिषेधात् ब्रह्मविद्याया अपि विद्यात्वा-
विशेषेण तद्वदस्यामपि निषेधानुमानात् "मध्वादिष्व
सम्भवादनधिकारं जैमिनि" । रिति सूत्रादिति
वाच्यम् तस्य मधुविद्यामात्रनिषेधेनैव नैराकांक्ष्यात्
नह्येकत्रानधिकारात्सर्वत्रानधिकारोऽनुमातुं शक्यो
व्यभिचारात् तथाहि क्षत्रियवैश्ययोर्याजनाद्यन-
धिकाराद्यजनादावप्यनधिकारप्रसङ्ग इत्यर्थः नापि
द्वितीयः तेषामधिकारविधायकप्रमाणस्य सद्भावात्
"यो यो देवाना" मित्यादिश्रुतेरित्यभिप्रायवानाह
सूत्रकृत् " तदुपर्य्यपि वादरायणः सम्भवात् "

इति मनुष्याणामुपरि वर्त्तमानानां देवानाम-धिकारम्मन्यते भगवान् वादरायणः तत्र हेतुः सम्भवात् तेष्वप्यर्थित्वादीनामधिकारसम्पत्तिहेतून सम्भवात् तत्र स्वर्गादिभोगानामनित्यत्वसातिशयत्व परमानन्दत्वशाश्वतत्वश्रवणेन । तदर्थित्वसम्भवः "यथेह कर्मचितो लोकः तन्महिमानामिति वीतशोकः नारायणो सायुज्यमाप्नोती" त्यादिश्रुतेः । किञ्च मंत्रार्थवादेतिहासपुराणादिभ्यस्तेषां विग्रहवत्त्वा-ऽवगमाच्च समर्थत्वसम्भवः नच मंत्रादिजन्यज्ञानस्य मिथ्यात्वं वक्तुं शक्यम् वाधकप्रत्यक्षादिप्रमाणा-न्तराभावात् मंत्रादेः कारणस्य श्रौतत्वेन दोषवत्त्वा-योगात् किञ्च "विश्वानि देव वयुनानि विद्वानि" त्यादिमंत्रै स्तेषु विद्वत्त्वसंभव इति विवेकः अथ प्रजापतिविद्यायाम् । इन्द्रविरोचनयोर्जिज्ञासुत्व-श्रवणादपि देवादीनां ब्रह्मविद्यायामधिकारनिश्चयः "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतं त्वेव ते भूयोऽनु व्याख्यास्यामि य एष स्वप्नेम हीयमानश्चरत्येष आत्मेति तद्यत्रैतत्सुप्तः समस्तः सम्पन्नः स्वप्नं न विजानात्येष आत्मेति एतदमृत मभयमेतद्ब्रह्मेति नाहं खल्वयमेवं सम्प्रत्यात्मानं

जानात्ययमहमस्तीति नो एवेमानि भूतानि एवं त्वेव ते भूयोऽनुव्याख्यास्यामि एष सम्प्रसादोऽस्मा-च्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि निष्पद्यते सउत्तमः पुरुष"इति श्रुतेरिति तात्पर्यमादायाह भगवान् सूत्रकारः "भावं तु वादरायणोऽस्तिहीं" ति तुशब्दो जैमिन्युक्तपक्ष-निरासार्थः ब्रह्मविद्यायां देवानामधिकारस्यासद्भावं भगवान् वादरायणो मन्यते हि यस्मादुपनिषत्सु तदधिकारविधायकं वचनमस्तीति सूत्राक्षरार्थः "यो यो देवाना"मित्यादिश्रुतिरिति संक्षेपः नन्वेवं चेत्तर्हिं शूद्रस्यापि मुमुक्षायाः सम्भवात् सोऽप्यत्रा-धिकारी स्यादिति चेन्न तस्याग्निसम्बन्धोपनयन-संस्काराद्ययोगेन एकजातित्वनिश्चयान्निषेधदर्शनाच्च नात्राधिकारः "शूद्रश्चतुर्थोवर्णा एकजातिर्न च संस्कारमर्हति अथास्य वेदमुपशृणवतस्त्रपुजतुभ्यां श्रोत्रं परिपूर्णं यद्युह वा एतत् श्मशानं यच्छूद्रः तस्माच्छूद्रसमीपे नाध्येतव्यः" न शूद्राय मतिं दद्या"दित्यादि शास्त्रात् संस्कारपरामर्शात्तदभावा-भिलापाच्च" श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्चे"ति सूत्रात् नच विदुरधर्मव्याधादीनामेकजातित्वेऽपि

विद्यासद्भावा ऽव्यभिचारइतिवाच्यम् तेषां पूर्वजन्म-
कृत श्रवणादिभिरन्यस्मिन् जन्मन्यपि ज्ञानोद-
यस्यानुमानान्नोक्तदोषावकाशः विदुरादेः पूर्वजन्म
वृत्ति ज्ञानं भारतादौ सुप्रसिद्धम् तस्मादुक्तलक्षणो
ब्राह्मणादित्रिक एव वेदान्तशास्त्रस्याधिकारीति
सिद्धम् अथ सार्वज्ञ्यसर्वशक्त्यादि कारुण्यवात्स-
ल्याद्यनन्तकल्याणधर्मनिलयो दोषलेशास्पृष्टसीमा
भिन्नाभिन्नत्वाश्रयो भगवान् परब्रह्माख्यो ऽस्य
विषयः "सर्वज्ञः सर्ववित् स्वाभाविकी ज्ञानबलक्रिया
च य आत्मा ऽपहतपाप्मा विजरो विमृत्युर्विशोको
विजिघत्सो ऽपिपासः सत्यकामः सत्यसङ्कल्प"
इत्यादिश्रुतेः "विवक्षितगुणोपपत्तेश्च सर्वोपेता च"
त्यादिसूत्रेभ्य इति संक्षेपः "सर्वे वेदा यत्पदमामनन्ति
तं त्वौपनिषदं पुरुषं पृच्छामी" त्यादिश्रुतेर्विषयत्वे
प्रमाणं बोध्यम् अथ परमते विषयस्य दुर्निरूपत्वेन
शास्त्रारम्भो ऽसम्भव एव विकल्पासहत्वात् तथाहि
तन्मते जीवब्रह्मैक्यं विषयः तच्चैक्यमध्यस्तमनध्यस्तं
वा नाद्यः अध्यस्तस्यावश्यं बाध्यत्वेन भेदस्य तात्त्विक-
त्वापत्तेः द्वितीये ऐक्यप्रतियोगिकभेदस्य पारमार्थिकत्व-
प्रसङ्गात् नन्वैक्यस्य ब्रह्मभेदो नाभ्युपगम्यते इति चेन्न

ऐक्यस्य निर्विशेषब्रह्माभिन्नत्वे तत्त्वं पदार्थपराणाम्
"सत्यं ज्ञानमनन्तं विज्ञानमानन्दं विज्ञानघन"
मित्यादीना मैक्यपरमहावाक्यैकवाक्यत्वाभावेन
वैयर्थ्यं स्यात् नचैक्यस्य स्वप्रकाशब्रह्मभिन्नत्वेन
स्थितिप्रवृत्त्यादौ निरपेक्षत्वे ऽपि लक्षितार्थभेदभ्रम-
निवर्त्तकवृत्तिजनने पदार्थसापेक्षत्वेन स्वरूपपरवाक्या-
नामेकवाक्यतायाः सत्त्वात् । भेदरूपप्रतियोगि-
सापेक्षत्वेन तत्र सापेक्षत्व व्यवहार इति वाच्यम् नि-
र्विशेषब्रह्मभिन्नैक्यस्य कुत्रापि सापेक्षत्वासम्भवात्
अभावसादृश्यादेः सप्रतियोगिकत्ववत् ऐक्यस्य
सापेक्षतायाः स्वाभाविकत्वात् एतेन मन्मतेऽविद्या-
निवृत्त्यद्वैतयोः सापेक्षयोरपि ब्रह्मैक्यमस्तु तत्रा
भावत्वसापेक्षत्वादे र्मायिकत्वेन विरोधाभावात् तव
तु सापेक्षत्वानिरपेक्षत्वयोस्तात्त्विकत्वेन विरोधस्य
दुःपरिहरत्वादिति निरस्तम् त्वदभिमताद्वैतश्रुतिवो-
ध्यस्या भावत्वादेः कल्पितत्वायोगात् अन्यथा श्रुतेर-
प्रामाण्यापत्त्या द्वैतनिवृत्त्यादेरसिद्ध्यापत्तेः ज्ञानस्य
ज्ञानत्वेन दण्डादेः करणत्वेनाभावसादृश्यच्छादे-
स्तत्त्वेन सापेक्षत्वे ऽपि प्रमेयत्वदण्डत्वादिना
निरपेक्षत्ववद्भेदत्वेन सापेक्षत्वेऽपि घटत्वादिना

निरपेक्षत्वोपपत्तेः नह्यस्माकम् एकरूपेणाङ्गीकार इत्यर्थः ननु तवाभिमते सार्वज्ञ्याद्यनन्तविशेषाश्रये भिन्ना भिन्ने च ब्रह्मण्यपि भेदस्य सत्त्वात्तथात्वे च तत्स्वरूपादयो वक्तव्याः तस्यतु विकल्यासहत्वेन वक्तुमशक्यत्वात् तथाहि भेदः किमधिकरणा-स्वरूपस्तद्भिन्नो वा नाद्यः सापेक्षस्य भेदस्य निर-पेक्षाधिकरणानैक्यासम्भवात् न द्वितीयः भेदोऽपि भिन्नस्तद्भेदोऽपि भिन्नइत्यनवस्थाप्रसङ्गात् कुम्भस्य स्तम्भाद्भेदप्रतीतौ प्रतियोगित्वेन तज्ज्ञानं तज्ज्ञाने च स्तम्भस्यकुम्भाद्भेदप्रत्यय इत्यन्योऽन्याश्रयाच्चेति चेन्न भूतलत्वादिना निरपेक्षत्वेऽपि अधिकरणात्मकत्वेन सापेक्षत्वे क्षतेरभावात् नच भेदत्वभेदमादायानवस्था-प्रयोगः तद्भेदस्याप्यधिकरणरूपत्वात् नचैवं भेद-मादायानवस्था भूतलादौ घटत्वावच्छिन्ननिरूपित-मेकं भेदत्वावच्छिन्ननिरूपितं चैकं भेदत्वमिति अन-वस्थाप्रसङ्गभावात् भूतलनिष्ठघटनिरूपित भेदत्वस्य स्वनिरूपितभेदत्त्वेनाप्युपपत्तेश्च तार्किकवत् समवाय-निरूपकभेदेन भेदस्याभिन्नत्वात् नाप्यन्योऽन्याश्रयः भेदप्रत्यक्षे प्रतियोगितावच्छेदकस्तम्भत्वादिप्रकारक-ज्ञानस्यैव हेतुत्वात् न तावद्भेदप्रत्यक्षे भेदाश्रया-

द्भिन्नत्वेन प्रतियोगिज्ञानं हेतुः अन्यथा जीवस्य ब्रह्मैक्यप्रतीतौ ब्रह्मणो जीवैक्यधीरिति अन्योऽन्याश्रयापत्तेः किञ्चान्योऽन्याश्रय उत्पत्तौ बाधकः ज्ञप्तौ वा नाद्यः भेदस्याजन्यत्वात् न द्वितीयः भेदप्रतीतेस्तवाप्यावश्यकत्वात् अन्यथा भ्रमभेदनिरासाय श्रवणाद्ययोगात् भेदाप्रतीतौ बहुयत्नैस्तन्निरासायोगाच्च स्वपरपक्षदूषणभूषणादिसर्वविप्लवापत्तेः ब्रह्मण्यनृतजडपरिच्छिन्नादिभेदस्यासिद्ध्यापत्तेश्च नित्यानित्यवस्तुविवेकासिद्धेश्च अपि च बाधकज्ञानं किम्विषयकम् निर्विषयकज्ञानासम्भवात् भेदमेव विषयीकरोति अभेदं वा यत्किञ्चिद्वेति वक्तव्यम् नाद्यः भेदावगाहिनो भेदबाधकत्वायोगात् प्रत्युत भेदसाधकत्वात् न द्वितीयः तत्राभेदशब्दवाच्यस्य नञा को वाऽर्थोऽभिप्रेतः तदन्यस्तद्विरोधी वा तदभावो वा आद्ये तद्विरुद्धतदभावत्वायोगात् न द्वितीयःभेदाभावग्राहिणाऽपि स्वस्मात् प्रतियोगिनश्च भिन्नतयैव स्वविषयस्य ग्राह्यत्वाच्च औदासीन्येन प्रवृत्तस्येदमितिज्ञानवदबाधकत्वात् । अतएव न तृतीयः पक्षत्रये ऽपि भेदस्यापरिहार्यत्वात् किञ्च बाधज्ञानं त्रिविधं नायं भेद इति वा नास्त्यत्र भेद

इति वा अन्यदेव भेदात्मनाऽभादिति वा तत्र नेदं रजतं नास्त्यत्र रजतम् अन्यदेव रजतात्मनाऽभादिति वत्तदेतत्सर्वथा भेदावगाहीति कथं भेदमात्रबाधकम् किञ्च बाधज्ञानं भेदाद्भिन्नतया स्वार्थावगाहि नवेति आद्ये भेदस्थितिः द्वितीये भेदबाधासम्भवः तस्मात् क्लृप्तविषयत्वान्नान्योऽन्यत्वादेरुत्थानम् उत्थितस्य च भेदाभावत्वम् नच निर्वचनीयो भेदोऽङ्गीक्रियते तत्र स्वरूपान्तर्भावबहिर्भावाभ्यां सदसत्त्वाभ्यां वाऽन्येनापि धर्मेण वा निर्वचनीयत्वमिष्टमेवेति वाच्यम् तर्कबाध्यत्वमात्रेण अनिर्वाच्यस्य त्वदभिमतैक्यस्यानिर्वचनीयत्वम् सुशकम् वक्तुम् नन्वैक्यस्य ब्रह्मस्वरूपत्वात्तद्बाधे शून्यत्वापत्तिरितिचेन्न भेदस्याप्यधिकरणात्मतया तन्मात्रबाधे शून्यत्वापत्तेस्तुल्यत्वात् ननु भेदस्य घटस्वरूपत्वे तन्निरूपकप्रतियोगिनोऽपि तत्स्वरूपताऽऽपत्तिः नहि भेदरूपमात्रं घटः किंतु पटप्रतियोगिकभेदरूपं इति चेन्न भेदप्रतियोगिन उपलक्षणत्वेन स्वरूपतायाम् अनन्वयात् अन्यथा दुःखनिवृत्तेः पुमर्थतया दुःखस्यापि पुमर्थत्वम् अन्टतव्यावृत्त्यज्ञाननिवृत्योर्ब्रह्मस्वरूपत्वे अन्टतादीनामपि तद्रूपत्वम्

अज्ञाननिवृत्तेर्मोक्षत्वे अज्ञानस्य मोक्षत्वञ्च स्यात् किञ्च स्वरूपस्याज्ञानाधिष्ठानतया सदैव भानात् उपदेशवैयर्थ्याच्च स्वरूपज्ञानस्य भेदादिज्ञाना-विरोधित्वाच्च नहिभूतलमिति ज्ञानं घटवत्त्वस्य घटवद्भेदस्य वा धियो बाधकमिति भावः किञ्च त्वन्मते ब्रह्मण्यनृतादिभेदो ब्रह्मज्ञानाबाध्यो वक्तव्यः शून्याद्य-नात्मकघटादौ शून्यादितःस्वज्ञानाबाध्यभेददर्शनात् ननु अविचारितमिदं दृष्टान्तं वैषम्यात् ब्रह्मणः स्वेतरसर्वाधिष्ठानत्वेनानृतादिभेदस्तज्ज्ञानबाध्य एव घटस्य त्वनधिष्ठानत्वान्न तज्ज्ञानं भेदबाधकमिति चेन्न यत्र तादात्म्येन यदध्यस्तम् तत्र तत्प्रतियोगिक-भेदं प्रति तस्याधिष्ठानतया व्याहृतत्वात् कल्पित-घटप्रतियोगिकभेदस्य वास्तवघटे वास्तवत्वात् नचास्मन्मते भेदमात्रस्य कल्पितत्वेनाभेदस्यैव वास्तवत्वमिति वाच्यम् भेदाभावे गुरुशिष्यादि-व्यवस्थाऽनुपपत्तेः ननु तात्विकभेदाभावेऽपि गुरु-शिष्यस्वपरपक्षदूषणभूषणसत्यानृतादीनां कल्पित-भेदगतत्वेन व्यवस्था सुगमेति चेन्न कल्पितभेदे-नाकल्पिताभेदकार्यप्रतिबन्धासम्भवात् ननु नायं नियमः कल्पितकान्तया विश्लेषकार्यमिव कल्पिता-

ज्ञानेन स्वप्रकाशरूपब्रह्मकार्यं प्रतिवध्यत इति चेन्न दृष्टान्तवैकल्यात् परमार्थसद्रूपस्याकल्पितकान्ता-ज्ञानस्यैव विश्लेषकार्यं प्रति हेतुत्वान्न कल्पितकान्ताया इति बोध्यम् किञ्च भेदस्य व्यावहारिकसत्त्वार्थं त्वया ऽप्यन्योन्याश्रयादिदोष उद्धरणीयः परस्पर-सापेक्षेण व्यवहारस्याप्यसम्भवात् नहि व्यावहा-रिकमृदादेःस्वजन्यघटादिसापेक्षत्वम् ननु ममाविद्या-सामर्थ्यात् सर्वानुपपत्तिपरिहार इति चेन्न अविद्या-सहितप्रपञ्चं प्रत्यविद्या एवाधिष्ठानत्वापत्तेस्तथात्वे चात्माश्रयो दुर्वारः दोषस्याविद्यासामर्थ्येनैव निरा-सात् नन्वविद्यादिद्वितीय निवृत्त्यत्यन्ताभावब्रह्मै-क्यादेःसापेक्षस्य निरपेक्षब्रह्मात्मकत्वं यथातथा सापे-क्षस्यभेदस्य निरपेक्षघटादिरूपत्वं युक्तम् अविद्यानि वृत्त्यादेः सापेक्षस्याविद्यकतया वास्तवनिरपेक्षत्त्वा-विरोधित्वादिति चेन्न निवृत्त्यादिसापेक्षत्वस्य बाधका-भावेनाविद्यकत्वे मानाभावात् नहि निवृत्त्यादिकं प्राक् सापेक्षमिदानीं नेति बाधधीः कदाप्यस्ति नापि बाधं विनाऽविद्यकत्वे मानं दृश्यते अन्यथा त्वद-भिमतं ब्रह्माप्यसत् श्रुत्युक्तं सत्त्वं च तस्याविद्यक-मिति स्यात् अपरं चाविद्यादिनिवृत्त्यादिद्वितीयात्य

न्ताभावादिनिष्ठसापेक्षत्वस्याविद्यकत्वे ऽप्यविद्या-
निवृत्तिद्वितीयाभावादेर्व्याघातः तस्यैवाद्वितीयत्वात्
आविद्यकत्वाच्च अविद्यानिवृत्तिद्वितीयाभावादेर्ब्रह्मा
भिन्नत्वे ब्रह्मस्फुरणे तस्यापिस्फुरणा त्तद्विरोधिप्रपञ्च-
स्फुरणानुपपत्तेश्च नहि रजताभावाभिन्नशुक्तिस्फुरणे
रजतस्फुरणं घटते दृश्यते वानच तद्गृहीतुर्भ्रान्तत्वं
न च भ्रमकाले प्रपञ्चाभावब्रह्मणोर्न तत्त्वेन स्फुरणम्
किंतु इदन्त्वेनेति वाच्यम् तत्त्वेदन्त्वयोर्भासमानब्रह्मा-
भिन्नत्वे भानासम्भवादिति विद्वद्भिर्विचारणीयम्
अपि च यत्र यदध्यस्तं तत्र तद्विरोधितज्ज्ञानावाध्यम्
यथाशुक्तावरूप्यत्वं यत्र यदैक्येनाध्यस्तं तत्र तद्भे-
दस्तज्ज्ञानावाध्यः यथा दूरस्थवृक्षयोर्भेदः यत्र यद-
ध्यस्तं तत्र तद्विरोधि तात्त्विकं यथा ब्रह्मण्यनृतस्या-
ध्यस्तत्वे सत्यत्वं तात्त्विकमिति व्याप्तेरत्र मानत्वात्
ननु यदुक्तं भेदस्याधिकरणात्म कत्वं तदयुक्तम् तथात्वे
संशयासम्भवः धर्मिज्ञाने भेदाज्ञानाभावात् भेद-
ज्ञाने धर्मिज्ञानस्यैव संशयवीजस्याभावेन सुतरां
संशयाभाव इति चेन्न भेदत्वेनाज्ञातेऽपि घटत्व-
दण्डत्वादिना ज्ञानात् संशयानुपपत्त्यभावात्
प्रत्युत चैतन्ये स्वप्रकाशे सदाभासमाने तदभिन्नस्य

जीवैक्यद्वितीयाभावानवच्छिन्नानन्दादेरप्रकाशस्य निर्विशेषवादेऽनुपपत्तेः नचैक्यादीनां स्वप्रकाशब्रह्माभिन्नत्वे तस्याज्ञानतत्कार्यविप्रतिपत्त्यादीन् प्रति-विरोधाभावेन तद्गोचरवृत्तेरेव विरोधित्वादिति वाच्यम् अज्ञानाधिष्ठानस्य शुद्धस्य वृत्तेरपि सत्वात् तत्तदैंद्रियकाधिष्ठानं विना तत्तदिन्द्रियजन्याध्यस्तज्ञानाभावात् ननु भेदस्याधिकरणात्मकत्वे घटभेदयोरेकतरपरिशेषापत्तिस्तथात्वे घट इति विलक्षणव्यवहारो न स्यादिति चेन्न घटत्वभेदत्वादीनां प्रवृत्तिनिमित्तानां भेदादेकपरिशेषाभाव विलक्षणव्यवहारादुपपत्तेः ननु भेदत्वं नाम किं जातिर्वा तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वादिरूपोपाधिर्वा तन्निष्ठासाधारणधर्मरूपं वा नाद्यः सामान्यादिसाधारणत्वात् न द्वितीयतृतीयौ तादात्म्यस्याभेदरूपत्वेऽन्योन्याश्रयापत्तेः तन्निष्ठासाधारणधर्मरूपत्वे तादात्म्यावच्छिन्नप्रतियोगिताकात्यन्ताभावेऽतिव्याप्तेः तस्यापि स्वरूपत्वे नुगऽतव्यवहारानुपपत्तेरिति चेन्न भेदत्वादेरखण्डोपाधित्वात् अथनिर्विशेषवादे "सत्यं ज्ञानम्" इत्यादिविलक्षणव्यवहारानुपपत्तेः नच कल्पितधर्माङ्गीकारेऽपि विलक्षणव्यवहारसिद्धिरिति वाच्यम्

श्रुतिबोध्यानां कल्पितत्त्वासम्भवात् श्रुतेरखण्डार्थ-
कत्त्वनाशाच्च नहि ब्रह्म सत्त्यादिरूपं नेति बाधक-
मस्ति येन सत्यत्त्वादेः कल्पितत्त्वं नाप्यारोपे बाधं
विना ऽन्यत्प्रमाणमस्ति श्रुतेस्तत्रतात्पर्याभावः
व्यावहारिकस्यासत्त्यत्त्वादेरसिद्धिप्रसङ्गात् नहि
"यजमानःप्रस्तर" इति वाक्यतात्पर्याविषयो यज-
मानप्रस्तरभेदो व्यावहारिकः सिद्ध्यति ननु भेद-
प्रतीते रिदमस्माद भिन्नमिति वा ऽस्यामुष्माद्भेद
इति वा धर्मिप्रतियोगिघटितत्त्वेनैव भाव्यम् तथात्त्वे
चान्योन्याश्रयस्यावश्यकत्त्वात् धर्मिप्रतियोगिज्ञाने
भेदज्ञाने तस्मिंश्च धर्मिप्रतियोगिज्ञानमिति घटपटौ
भिन्नावितिघटपटविशेषणतया तयोर्भेद इति तत्
विशेष्यतया वा ग्रहणे पीऽतरेतराश्रय एव घटपट-
प्रतीतौ तद्विशेष्यत्वादिना भेदग्रहः भेदग्रहे च द्वित्वा-
वछिन्नघटपटयोःप्रतीतिरितिचेन्न व्यावहारिकभेद
प्रतीतौ त्वया प्यङ्गीकारात् अपिच अस्तीदं जानामि
सर्वं खल्विदं ब्रह्मे"त्यादिषु साक्षिसिद्धकालविषय
सर्वैः सह वस्त्वज्ञानाभेदानामिवेहापि साक्षिसिद्धेन
प्रतियोगिना सहैव व्यावृत्तिप्रतीतेः नान्योन्याश्रयः
अन्यथा तवापि दोषस्य तुल्यत्वात् इदमनेन भिन्नं

अस्यामुष्मादभेद इमे अभिन्ने एतयोरभेद इति जीवब्रह्मणोरैक्यप्रतीतौ धर्मिप्रतियोगित्वज्ञानं द्वित्वा-वच्छिन्नज्ञानञ्च भेदज्ञानपरतन्त्रमिति तद्विरुद्धा-भेदज्ञानासम्भवापत्तेः नच कल्पितभेदज्ञानस्य धर्मि-प्रतियोगिभावद्वित्त्वावच्छिन्ननिर्वाहकस्य तात्त्विका-भेदज्ञानप्रतिवन्धकत्वं नास्तीति वाच्यम् विषमस-त्ताकभेदज्ञानाभेदज्ञानयोर्विरोधाभावेन भेदज्ञान-स्यानुच्छेदप्रसङ्गात् भेदमिथ्यात्वसिद्धौ वाधकाभावा-ज्जीवब्रह्मणोर्वास्तवैक्यासिद्धिस्तात्सिद्धौ भेदरूपमि-थ्यात्वसिद्धिरित्यन्योन्याश्रयात् ननु नाभेदज्ञाने धर्मि प्रतियोगिज्ञानापेक्षा तस्य निःप्रतियोगिकवस्तुरूप-त्वात् सप्रतियोगित्वव्यवहारनिरूपकभेदस्य प्रति-योगिसाध्यत्वादिति चेन्न निःप्रतियोगिकस्याभावा-भावत्वेनभाने सप्रतियोगिकत्वात् अन्यथा महा-वाक्यार्थभेद प्रतियोगिसमर्पकसत्यादिवाक्यस्य वैयर्थ्यापत्तेःनिरपेक्षवस्त्वभिन्नस्य भेदस्य निरपेक्षत्वं सापेक्षत्वव्यवहारस्त्वभेदरूपप्रतियोगिसापेक्षत्वा-दित्यापत्तेश्च ब्रह्मस्वरूपमात्रैक्यज्ञानस्य भेदज्ञानाद्य विरोधित्वापत्तेश्च ननु भेदः किंभिन्ने वर्त्तत उताभिन्ने आद्ये आत्माश्रयोऽन्योन्याश्रयो वा द्वितीये विरोध

इति चेन्न तव मतेऽपि साम्यात् अभेदोऽभिन्ने वर्त्तते भिन्ने वा आद्ये आत्माश्रयादिदोषात् द्वितीये विरोधात् एवमनिर्वाच्यत्वं तद्वति वर्त्तते तदभाववति वा आद्ये आत्माश्रयादिप्रसक्तेः द्वितीये विरोधात् नचाभेदे विकल्पावकाशाभावस्तस्य स्वरूपत्वात् अनिर्वाच्यत्वादावश्यकविकल्पस्यानिर्वाच्यत्वप्रयोजकस्य ममाप्यनुकूलत्त्वादिति वाच्यम् भेदस्याप्यधिकरणरूपत्त्वादिकल्पनावकाशसाम्यम् उक्तविकल्पप्रतिघातेन व्यावहारिकानिर्वाच्यत्वासिद्धिप्रसङ्गात् तथात्वे च मिथ्यात्वोपपादकतर्कहततत्त्ववतामीक्षणानन्तत्वादीनामसम्भवेनेक्षत्याद्यधिकरणानामुच्छेदप्रसङ्गात् अथ च निर्विशेषस्य सन्मात्रस्य वस्तुनः घटः सन्नित्यादिना सर्वप्रत्यक्षत्वाभ्युपगमादधिकस्यानभ्युपगमाच्च परमते विषयासम्भव एव महावाक्यार्थो निर्विशेषसन्मात्रादधिकपरो न वा आद्ये सखण्डार्थलापत्तेः द्वितीये शास्त्रारम्भस्य वैयर्थ्यादिति भावः तस्मादुक्तलक्षणः श्रीपुरुषोत्तम एव वेदान्तशास्त्रस्य विषय इति संक्षेपः एतेनैव सम्बन्धाऽनुपपत्तिरपि सिद्धा विषयाभावे संबन्धस्य सुतरामभाव इति भावः इति माधवमुकुन्दचरणेन

विरचिते परपक्षगिरिवज्राख्ये शारीरकहार्दलक्षये
पराभिमतविषयसम्बन्धगिरिनिपातः ॥ १ ॥
अथश्रीभगवद्भावापत्तिलक्षणो मोक्षो ऽस्यशास्त्रस्य
साम्थप्रयोजनं "मद्भक्त एतद् विज्ञाय मद्भावायो-
पपद्यते वहवो ज्ञानतपसा पूता मद्भावमागता"
इति श्रीमुखोक्तेः भावपदं च स्वयमेव व्याख्यातं
श्रीमुखेन "इदं ज्ञानमुपाश्रित्य मम साधर्म्य-
मागता" इति श्लोकेन स एव सायुज्यब्रह्मामृत-
महिमादिशब्दैरभिधीयते" निरंजनः परमं साम्य-
मुपैति ॥ नारायणो सायुज्यमाप्नोति ॥ ब्रह्म वेद
ब्रह्मैव भवति ॥ जुष्टस्ततस्तेनामृतत्वमेति ॥
तन्महिमानमिति वीतशोक" इत्यादिश्रुतिभ्यः पर
मते प्रयोजनं दुर्निरूपमसम्भवात् तथाहि यस्मै
ब्रह्मभावापत्तिलक्षणो मोक्षः प्रयोजनत्वेनाभ्युप-
गम्यते तस्यचैतन्यस्यैकत्वमनेकत्वं वा नाद्यः चैत्र
मैत्रादीनां भोगसाङ्कर्यप्रसङ्गात् नचौपाधिकभेदस्य
तन्नियामकत्वान्नोक्तदोषावकाश इति वाच्यं हस्तपादा
द्युपाधिभेदे ऽप्यनुसन्धानदर्शनात् नचांतः करण-
भेदो ऽविद्याभेदो वा तन्नियामकइति वाच्यं चैतन्यैक्ये
चतुरादिभेदवदंतःकरणभेदस्याप्यनुसन्धानप्रयोज-

कत्वासम्भवात् नन्वन्यकरणभेदस्याप्रयोजकत्वे ऽपि तदैक्याध्यासापन्नान्तःकरणभेदस्याननुसन्धाने प्रयोजकताङ्गीकारान्नोक्तदोषयोग इति चेन्न निर्विशेषस्वप्रकाशे ज्ञाताज्ञातविभागहीने चेतने ऽन्तःकरणादेस्तादात्म्यारोपासम्भवात् उपरिष्टादध्यासस्य विस्तरेण निराकरिष्यमाणत्वाच्च अविद्याद्यारोपेणावस्थादिदोषाणां वक्ष्यमाणत्वाच्च किञ्च प्रतिदिनं सुषुप्तावन्तःकरणस्य लयः तस्य तु सुषुप्तावन्यथा ऽनुपपत्त्या ऽकामेना ऽपि त्वया स्वीकार्यत्वात्तथात्वे च पूर्वदिनानुभूतस्याननुसन्धानप्रसङ्गात् ननु संस्कारात्मनावस्थितस्यैव पुनरुद्बोधेन तत्रान्तः करणस्य भेदाभावान्नोक्तदोष इति चेन्न संस्कारात्मना ऽवस्थितस्यानुभवस्मृत्याद्यनुपयोगात् अन्यथा सुषुप्तावपि तद्वत्युत्पत्तिः स्यात् अथ चानेका विद्या सम्बन्धस्य दुःखाद्यनुसन्धानरूपस्यानर्थस्य च विशिष्टवृत्तित्वं शुद्धगतत्वं वा नाद्यः बन्धमोक्षयोर्वैयधिकरण्यात् अन्त्ये च यच्छुद्धं चैत्रीयदुःखानुसन्धातृ तदेव मैत्रीयदुःखानुसन्धात्रिति साङ्कर्यस्य तादवस्थ्यात् नन्वविद्यानिवृत्तिरूपबंधनिवृत्त्यात्मकमोक्षस्य शुद्धगतत्वे ऽपि

दुःखाद्यनुसन्धातृत्वस्योपहितगतत्वान्नशुद्धे तदा-
पादकत्वमिति चेन्न दुःखाद्यनुसन्धानरूपानर्थस्यो-
पहितनिष्ठत्वेन बन्धमोक्षवैयधिकरण्यस्य ताद-
वस्थ्यात् बद्धस्य निवृत्तिरेव नतु मोक्ष इत्यापत्तेश्च
ननूपाधेः कल्पितत्वात् निवृत्तावपि उपधेयस्या-
कल्पितत्त्वेन निवृत्त्ययोगात् मोक्षान्वयित्वमिति चेन्न
शुद्धभिन्नतया भवदभिमतस्य विशिष्टस्य मृषात्वेन
मोक्षान्वयासम्भवात् विशिष्टस्य सत्त्वे तत्र दृश्यत्वा-
देर्व्यभिचारापत्तेः ननु दुःखाद्यनुसन्धानमुपहित-
गतमपि अविद्यारूपबन्धस्य शुद्धवृत्तित्वात्तत्रैव मोक्ष
इति तयोर्वैयधिकरण्याभाव इति चेन्न दुःखाद्यनु-
भवद्वारेणैवाविद्याया अनर्थत्वात् यत्रदुःखानु-
सन्धानं सएवबद्धस्तस्यैव मोक्षौचित्यात् नाप्यविद्या-
वच्छिन्नद्वाराऽवस्थात्रयातीते शुद्धेऽप्यनुसधानमिष्ट-
मिति वाच्यं दुःखानुसन्धातुरवस्थात्रयातीतत्वा-
सम्भवात् अथ चोपहितस्योपाधिकृतत्वेनोपाधेः
शुद्धगतत्वमेव वक्तव्यं तथात्वे च किमेकैकोपाध्य-
पगमे मोक्ष उत सर्वोपाध्यपगमे आद्ये सदामुक्तिरेव
नतु बन्ध इत्यापातात् द्वितीये अधुना बन्ध एव न
कस्यापि मुक्तिरित्यङ्गीकृतं स्यात् नच जीवानामने-

कत्वात् येनोपाधिना यस्य परिच्छिन्नत्वं तस्मिंश्चेतने तदुपाध्यपगमे मोक्ष इति वाच्यं विकल्पासहत्वात् तथाहि जीवनानात्ववादे चेतनभेदो वास्तव औपाधिको वा आद्ये ऽद्वैतवादो दत्ततिलाञ्जलिः स्यात् तवानङ्गीकाराच्च अस्मत्पक्षप्रवेशाच्च द्वितीये एकोपाधिविनिर्मुक्तस्यापि शुद्धस्योपाध्यन्तरावच्छिन्नत्वेन कदाऽपि मुक्तेरसम्भवात् भग्नोपाधेश्चेतनस्योपाध्यन्तरोपहितेभ्यो भिन्नत्वाभावात् ननु माभूदनेकजीववादे मुक्तेः सामञ्जस्यं एकजीववादे तु सर्वोपाध्यपगमान्मोक्ष इति चेन्न शुकादि मोक्षविधायकशास्त्रस्य वाधापत्त्या तन्मतस्यैवाप्रामाणिकत्वात् दुःखाद्यनुसन्धानस्याऽव्यवस्थापकत्वाच्च किञ्चोपाधिरेकदेशेन सम्बन्धः कृत्स्नेन वा आद्ये त्वन्मते स्वाभाविकांशाभावेनौपाधिकत्वमेव वाच्यं तथात्वे चानवस्थाप्रसङ्गः अन्त्ये न भेदकता कृत्स्नस्यैकोपाधिनैव ग्रस्तत्वात् गगनादावपि स्वाभाविकांशाभावे घटाद्युपाधिसम्बन्धो न स्यादेव न च सर्वविकल्पासहत्वेन मिथ्याभूतस्यैवोपाधेर्मिथ्याभेदप्रयोजकत्वमिति वाच्यम् उत्तरास्फूर्त्तौ प्रधानसम्वृत्त्योर्विकल्पाद्यसहत्वम् इतिसांख्यबौद्धाभ्या-

मपि वक्तव्यत्वेन तन्निरासासम्भवात् मृषाभूतस्या ऽपि व्यावहारिकस्य त्वया ऽवस्थाङ्गीकारात् अन्यथा जीवजडयोर्विश्वकर्तृत्वान्तर्यामित्वादिकं निरस्येश्वरे तत्समर्थयतः समन्वयाध्यायस्योच्छेदापत्तेः तव मते परमेश्वरकर्तृत्वस्यापि व्यावहारिकत्वात् तस्माद्-बद्धमुक्तदुःखाद्यनुसन्धानानुपपत्त्या चितो वास्तवो भेदो ऽवश्यमभ्युपगन्तव्य इति सिद्धं भेदस्यापि पार-मार्थिकत्वम् ननु बन्धमोक्षादिव्यवस्थायाः स्वप्न-वद्यावदविद्यमुपपद्यमानत्वमेवेति चेन्न तस्मिन्ने-कस्मिन्नपि सुप्ते सर्वजगदप्रतीत्यापत्तेः ननु समष्ट्य-भिमानिनो ऽस्वापान्नोक्तदोष इति चेन्न सृष्टिमारभ्या-प्रलयमप्रसुप्तस्य जीवे ऽसम्भवात् जीवैक्याङ्गीकारे अहंत्वमयमिति प्रत्युक्तपराक्प्रत्ययानामुच्छेदा-पत्तेश्च नहि देवदत्तं प्रति त्वमिति धीविषयस्य तमेव प्रत्यहमिति धीविषयत्वं युक्तमित्यर्थः ननु नायं दोषः भिन्नभिन्नान्तःकरणाभेदाध्यासेन तत्तदन्तःकरणमा-दायाहं त्वमादिप्रत्ययानां सविषयत्वव्यवस्थोपपत्ते रितिचेन्न योगिनः कायव्यूहे नानान्तःकरणता-दात्म्यारोपे ऽप्यहम् इत्येव प्रतीतेः नच तत्रान्तः-करणत्वमेवेति वाच्यं वाह्यकरणानामप्यैक्यापत्त्या

कायव्यूहस्यैवासम्भवात् किञ्च त्वन्मते एकस्यैव चितः सर्वान्तःकरणैरभेदाध्यासेन चैत्रस्य शुक्तिसाक्षात्कारेण रूप्यभ्रमनिवृत्तावन्येषामपि निवृत्त्यापत्तेः अन्तःकरणस्य भेदाद्यव्यवस्थापकत्वात् अन्यथा योगिकायव्यूहे देहोऽपि भोक्तृभेदकः स्यात् अथ चैकजीवः सर्वकल्पकस्तेनैव सर्वमिदं कल्पितमिति चेन्न जीवस्य कारणतां निषिध्य परमेश्वरकारणत्व बोधकानां श्रुतीनां बाधापत्तेः सार्वज्ञ्यबोधकश्रुतीनां निर्विषयत्वापत्तेश्च जीवभिन्नेशाभावात् जीवसार्वज्ञ्यस्यानुभवविरोधाच्च नच समष्ट्यभिमानिनो जीवस्यैव सार्वज्ञ्यादियोगोऽभ्युपगम्यत इति वाच्यम् लोके जीवत्वेन प्रसिद्धेषु सार्वज्ञ्यादेः प्रत्यक्षादिना बाधितत्वात् प्रसिद्धभिन्नस्य सार्वज्ञ्यस्वीकारे तस्येश्वरत्वेनेष्टापत्तेः नचान्तःकरणभेदाध्यासात्तदनुभव विपरीतानुभवयोरुपपत्तिरिति वाच्यं सर्वज्ञस्याधिष्ठानत्वं जानतस्तदध्यासासम्भवात् भ्रान्तिसार्वज्ञ्ययोरेकत्रव्याहतत्वाच्च "तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तपे"ति स्मृत्या जीवानभिमानिनः सर्वज्ञताविधानाच्च अलं विस्तरेण द्वितीये चेतनानेकत्वपक्षे तदभेदस्यै-

पाधिकत्वे उक्तदोषाणां योगः किञ्चौपाधिकभेदाङ्गी-
कारे उपाधिगमनकाले तदवच्छिन्नस्य कौटस्थ्यात्
गत्यभावेन पदे पदे बन्धमोक्षौ स्यातां अनादि-
बद्धस्याकस्मात् साधनं विनैव मोक्षः कूटस्थ
नित्यशुद्धबद्धमुक्तस्वभावस्याकस्मान्निः कारणमेव
बन्ध इत्यर्थःकृतनाशाकृतागमप्रसङ्गाच्च स्वाभावि-
कत्वे चास्मत्पक्षप्रवेशो ऽद्वैतभङ्गश्च ननु माभूदु-
पाध्यवच्छिन्नस्योक्तदोषकर्दंवाज्जीवत्वं किन्तु चेतन
प्रतिबिम्ब एव जीवस्तस्याविद्याया अन्तःकरणस्य
वोपाधेः कल्पितत्वेन तन्नाशे जीवब्रह्मैक्यसिद्धिरिति
चेन्न प्रतिबिम्बभावे उपाधेर्बिम्बस्य च सावयवत्व-
रूपवत्त्वप्रमाणविषयत्वादीनां तत्कारणानाम-
भावात् तथाहि बिम्बरूपो रूपी प्रत्यक्षविषयो
ऽवयववान् वा निष्प्रमाणविषयो निरवयवो वा
नाद्यः अनङ्गीकारात् अन्यथा निर्विशेषाद्वितीयवाद-
भङ्गापत्तेः न द्वितीयः असम्भवात् नीरूपस्य च रूपस्य
प्रत्यक्षगोचरस्याश्रयद्रव्यविशिष्टस्यैव सावयवे
प्रत्यक्षगोचरे एव द्रव्ये प्रतिबिम्बभावापत्तिदर्शनान्न
केवलस्यातो न तत्र व्यभिचारः शङ्कनीयः नचा-
काशस्य निरवयवनीरूपस्यापि प्रतिबिम्बदर्शनाद

व्यभिचार इति वाच्यम् पञ्चीकृतस्याकाशस्य सावयवत्वरूपित्वचाक्षुषत्वादीनां सत्त्वेन प्रतिबिम्बनस्याविरुद्धत्वात् अपञ्चीकृतस्य केवलस्य तु प्रत्यक्षगोचरत्वाभावेन प्रतिबिम्बकल्पनाया अप्रामाण्यात् अन्यथा कालधर्मादीनां शब्दस्पर्शादौ वायुपिशाचादीनां चाचाक्षुषाणां कालादौ प्रतिबिम्बनापत्तेः तच्च दृष्टिश्रुत्यगोचरत्वादनुपपन्नत्वाच्च किञ्च सूर्यचन्द्रादि प्रभामण्डलयुक्तस्यैवाकाशस्य प्रतिबिम्बभावापत्तिः न केवलस्य अन्यथान्धकारेऽपि तद्दर्शनापत्तेरतो न तत्र व्यभिचारावकाशः ननु "एकधा बहुधा चैव दृश्यते जलचन्द्रवत् उपमा सूर्यकादिव" दिति श्रुतिसूत्रमानात् प्रतिबिम्बवादो ऽवश्यमभ्युपगन्तव्य इति चेन्न उक्तशास्त्रस्यान्तर्यामिनिर्लेपप्रतिपादनपरत्वात् किञ्चोपाधिसम्बन्धो जीवे स्वाभाविक औपाधिको वा नाद्यः त्वन्मतेऽनिर्मोक्षप्रसङ्गात् न द्वितीयः अनवस्थानात् अन्योऽन्याश्रयाच्च न चोपाधिरेव स्वसम्बन्धहेतुरिति वाच्यम् आत्माश्रयात् वस्तुतस्तु बिम्बान्यूनसत्ताके एवोपाधौ लोके प्रतिबिम्बदर्शनात् प्रकृतेऽविद्याद्युपाधीनां ब्रह्मान्यूनसत्ताकत्वान्नेष्टसिद्धिः अन्यथा मृगमरीचिकाजले

ऽपि सूर्यादिप्रतिबिम्बदर्शनापत्तेः न च दर्पणस्य नेत्रप्रतिफलितमुखादिदर्शने व्यभिचारः सोपाधिकारोपे दृष्टस्य स्वबाध्यौपाधिकत्वस्य तत्रासत्त्वेन नेत्रदेशावच्छेदेन तन्मुखप्रतिफलनमित्यङ्गीकारात् तत्राप्युभयोःप्रतिविम्बयोःप्रतिबिम्बभावेन स्थितत्वे ऽपि बिम्बसमसत्ताकोपाध्युपहितत्वस्य नियामकत्वान्न व्यभिचारः किञ्चोपाधेर्बिम्बान्यदेशावस्थाने एव प्रतिबिम्बभावः नत्वेकत्रैव प्रकृते तदभावादिष्टासिद्धिः अयंभावः उपाधिर्ब्रह्मैकदेशवृत्तिः व्याप्यवृतिर्वा नाद्यः ब्रह्मणः सदेशत्वापत्तेर्निर्विशेषत्वहानिः द्वितीये सर्वस्यापि उपाधिमत्त्वे प्रतिबिम्बनासिद्धेः सुतरां सिद्धत्वहानेश्च इतरथा जलनिमग्नानामपि जलौकसां प्रतिविम्बो दृश्येत नतु तदस्ति तथा प्रकृते ऽपि बोध्यं तस्माद्बिम्बप्रतिबिम्बवज्जीवब्रह्मैक्यं वक्तुमशक्यत्वात् सर्वथाऽप्यनुपपन्नमिति सिद्धम् अथ च "आचार्यवान् पुरुषो वेद" इतिश्रुतेरेकजीववादे ह्युपदेष्टव्यादन्यस्य चेतनस्याभावात् उपदेष्टुरभावे तत्वज्ञानाऽसम्भवः तदसम्भवे च मोक्षासम्भवः ननु सत इवोपदेष्टुः कल्पितस्योपदेष्टृत्वघटनादिति चेन्न आपातरमणीयत्वात्

न ह्युपदेष्टृत्वं कल्पितमात्रस्य किन्तु शास्त्रोक्तलक्षणा-वत्त्वेन लक्षितस्यैव तथात्वश्रवणात् "स गुरुमेवाभि गच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ" मित्यादि-श्रुतेः न च स्वाप्नस्य गुरोरिवोपदेष्टृत्वे ऽपि क्षत्य-भावेन तथात्वोपपत्तिरिति वाच्यं स्वाप्नस्य गुरोर-ज्ञाननिवर्त्तकत्वादर्शनात् अन्यथा "यदेव भगवान् वेद तदेव मे ब्रूही"ति श्रुतेः "तद्विद्धिप्रणिपातेन परिप्रश्नेन सेवया उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्व-दर्शिन" इति स्मृतेश्च व्याकोपात् अस्मन्मते तु शास्त्रप्रमितस्यैवोक्तलक्षणसम्पन्नस्य गुरोरुपदेष्टृ-त्वावगमात् गुरुत्वाज्ञाननिवर्त्तकत्वयोः सुसामञ्ज-स्यात् न किञ्चिद्विरोधलेशशङ्कावकाशः त्वन्मते तु शिष्येण गुरौ सार्वज्ञ्यारोपे ऽपि वास्तवसार्वज्ञ्याभावेन शिष्यं स्वाज्ञानकल्पितं कल्पकं वा जानतो गुरोरुप-देशप्रवृत्त्यनुपपत्तेः स्वप्ने तु तथा ऽज्ञानादुपदेशे प्रवृत्त्युपपत्तेः प्रकृते गुरुशिष्ययोः कल्पितत्वस्यापि-तत्त्वान्तर्गतत्वेन तत्त्वविदः तज्ज्ञानावश्यकत्वात् अथ कल्पको निश्चिताद्वैततत्त्वो न वा आद्ये शास्त्रप्रणयनवैयर्थ्येन तत्र प्रवृत्त्यसम्भवात् द्वितीये तत्प्रणीतशास्त्रस्याप्रमामूलकत्वापत्तेः ननु शास्त्रस्य

प्रमामूलकत्वाभावे ऽपि अबाधितविषयकत्वेन प्रामाण्योपपत्तिरिति चेन्न पौरुषेयवाक्यानां प्रमामूलकत्वाभाव ऽबाधितार्थकत्वासम्भवात् सो ऽमुक्त इति निश्चयाभावे बह्वायाससाध्यमोक्षप्रवृत्त्यनुपपत्तेश्च अपि चोपदेशकाभावेन मोक्षार्थप्रयत्नासम्भवात् किञ्चानादिसंसारे कस्यचित्तत्वज्ञानं मोक्षश्चाभून्न वा आद्ये जीवस्यैकत्वेनेदानीं संसारानुपलब्धिप्रसङ्गात् द्वितीये सम्प्रदायाभावेन तत्वज्ञानस्य मोक्षस्य चासम्भवात् ननु ज्ञानसामग्र्येव ज्ञानहेतुर्न संप्रदायः तस्यापि तात्पर्यजन्यतत्त्ववित्त्वेन सामग्र्यन्तर्भूतत्वादिति चेन्न तत्ववित्त्वेन श्रुत्यादिसिद्धानां शुकवामदेवादीनां त्वदभिमतगौडपादादीनां च मुक्तिर्नाभून्मम तु कथं भविष्यतीति शङ्कया वेदान्तश्रवणादौ प्रवृत्त्यनुपपत्तेः नच शास्त्रप्रामाण्यदार्ढ्यात् प्रवृत्त्युपपत्तिः श्रुतिप्रामाण्यदार्ढ्यादेव सदासिद्धो जीवभेदः श्रुतिप्रमिता केषांचिन्मुक्तिश्च कुतो नाङ्गीक्रियते "यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां अजो ह्येको जुषमाणो ऽनुशेते जहात्येनां भुक्तभोगामजो ऽन्यः नित्योनित्याना"

मित्यादिश्रुतिभ्यः "बहवो ज्ञानतपसा पूता मद्भाव-
मागताः इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः
अतीतानागताश्चैव तावन्तः सहिता क्षणाः ततो
ऽप्यनन्तगुणिता जीवानां राशयः पृथक्" इत्यादि-
स्मृतिभ्यश्च परमते तु श्रुतस्वाभाविकभेदस्य
मोक्षादिव्यवस्थायाश्च त्यागस्य अश्रुतमोक्षा-
भावादिकपोलकल्पनायाश्च प्रसङ्गो महद्दूषणापातात्
प्रयोजनासिद्धिः अस्माकं तु भेदस्य स्वाभाविकत्वं
जीवानां प्रतिदेहभिन्नत्वेनासङ्ख्येयत्वं श्रुत्यादि
प्रमाणसिद्धं न कोऽपि बन्धमोक्षादिव्यवस्थानुपपत्ति-
कलङ्कगन्धावकाशः "अविद्यायामन्तरेवर्त्तमाना"
इत्यादावनादिसंसृतिमूलभूतकर्मात्मकाज्ञानं ज्ञाना
भावो वा "रमणीयाम्" इत्यादौ कर्मसम्बन्धः "सति
सम्पद्य न विदुः सति सम्पद्यामह" इत्यादिषु सुषुप्तिः
"वेदान्तविज्ञानसुनिश्चितार्था" इत्यादिना तत्त्वज्ञानं
"परामृतात्परिमुच्यन्ती"त्यादिना मुक्तिश्चेतनधर्म-
त्वेन प्रतिपाद्यते इति सर्वं समञ्जसमित्यलं विस्तरेण
ननु "अविनाशी वा अरे आत्मा! देही नित्यमवध्यो
ऽय" मित्यादिश्रुतिस्मृतिभिरेकत्वस्यापि दर्शनात्कथ-
मविरोध इति चेन्न तासां "ब्राह्मणो न हन्तव्य" इति

वत्सामान्यपरत्वेन नैराकांक्ष्यात् नोक्तबाधशङ्कावकाशः "नित्यो नित्यानां द्वा सुपर्णा अंशो ह्येषः परस्य अंशो नाना व्यपदेशात् न त्वेवाहं जातु नासं नत्वं नेमे जनाधिपाः मम साधर्म्यमागताः पूता मद्भावमागता" इति कण्ठरवेण सर्वावस्थागतभेदविधायकशास्त्रकदम्बात् एवं च भगवद्भावापत्तिलक्षणपरमनिःश्रेयःसिद्धौ न को ऽपि विरोधः तस्मात् शास्त्रारम्भो युक्त एव परमते तु मोक्षस्य स्वरूपत्वेन सदैव स्वत एव प्राप्तत्वात् बन्धस्य चाविद्यकत्वेन मृगतृष्णाकल्पितोदकेन स्वभाव शुष्कमरुभूमिवत् कदाप्यस्पृष्टत्वात् तन्निवृत्तये शास्त्रप्रणायनस्य श्लेषविलोडनमात्रत्वेन सुतरां वैयर्थ्यात् शुद्धस्य नित्यमुक्तत्वात् बद्धस्य च तुच्छत्वात् कस्य मुक्तये प्रयासविशेषः मुमुक्षोरेवासिद्धेः तस्मात्प्रयोजनासिद्धेः शास्त्रारम्भो व्यर्थ एवेति संक्षेपः ननु पूर्वोक्तवाक्यानां सर्वलोकभ्रमसिद्धभेदानुवादपराणां भ्रमगृहीतग्राहित्वात् स्वार्थे प्रमाणाभाव इति चेन्न बाधकाभावेन भेदधियो भ्रमत्वायोगात् न च भेदनिषेधवाक्यस्यैव तद्बाधकत्वादितिवाच्यं तस्य स्वतन्त्रसत्तावच्छिन्नभेद-

निषेधपरत्वेन । वस्तुस्वरूपनिषेधपरत्वाभावात् अपृथक्सिद्धतायाश्चेष्टत्वात् नाप्यभेदवाक्यानां तद्बाधकत्वं तेषां ब्रह्मतादात्म्यसम्बन्धविधायकत्वेन नैराकांक्ष्यात् नाप्यनयोरितरेतरविरोधित्वेन सामानाधिकरण्यासम्भवः शङ्कनीयः भिन्नविषयत्वात् तथाहि भेदवाक्यानां पदार्थस्वरूपादिविधानपरत्वेन नैराकांक्ष्यं स एव तेषां विषयः अभेदवाक्यानां तु पदार्थकदम्बस्य ब्रह्मतादात्म्यसम्बन्धविधायकत्वेन कृतार्थत्वं तादात्म्यसम्बन्ध एव तेषां विषयः एवं च नेतरेतरबाध्यबाधकभावस्तस्मान्नोक्तदोषावकाशः त्वन्मते तु सर्वप्रत्ययविषयभूतब्रह्मभिन्नभेदाद्यभावेनाभेदवाक्यानामेवानुवादपरत्वात् । स्वार्थासिद्धिरिति विचारणीयं पण्डितम्मन्यैरित्यलं प्रासङ्गिकेन वाक्यबलाबलविचारसमये विस्तरिष्यमाणत्वात् ननु श्रीवाचस्पतिमिश्रैः विषयादीनामाक्षेपमुखेन निपुणं निर्णीतत्वात् नोक्तदोषप्रसक्तिः सम्भावनीया तथाहि यद्यपि जीव एव ब्रह्म सचाहमिति ज्ञाने भासते एवेति सन्दिग्धत्वाभावात् न शास्त्रस्यविषयः नाप्यविद्यानिवृत्तिः प्रयोजनमुक्तरीत्याऽऽत्मनिज्ञायमानेऽपि तदनिवृत्तेः तथापि

वेदान्तवाक्यैर्ज्ञानानन्दैकरसाद्वितीयोदासीनत्वभाव आत्मोपक्रमादिभिः प्रतिपाद्यते प्रत्यक्षेण तु प्रादेशिको ऽनेकविधशोकदुःखादिप्रपञ्चापप्लुतो गृह्यते ऽत आरभ्यो विचारः न चाक्षविरोधादप्रामाण्यं श्रुतेः प्रत्यक्षसम्भावितदोषमपौरुषेयेणागमेन बाध्यते ऽतोवेदान्तवेद्यः शुद्धो नाहं प्रत्यये भातीति विषयादिसिद्धिरित्यादिना तथात्वे च शास्त्रमारभणीयमेवेति चेन्न निर्विशेषे भाताभातविभागस्यासम्भवात् आभासमानत्वेन देहात्मनोर्भेदस्य कर्तृत्वभोक्तृत्वाद्यभावस्य जीवब्रह्माभेदस्य द्वितीयमात्राभावस्य वा त्वदभिमतस्यात्मनो भिन्नत्वं सत्यमसत्यं वेति विवेचनीयं नाद्यः अद्वैतहानिप्रसङ्गात् द्वितीये तद्बोधकश्रुतेरप्रामाण्येन बाधापत्तेः शरीरभेदादेः सत्यत्वापत्तेश्च न चाभावो द्वितीयो मया ऽङ्गीक्रियते न तु भावो येनोक्तदोषप्रसङ्ग इति वाच्यम् अभाववत्त्वाधेयत्वाधारत्वादीनामपि सत्यत्वापत्तेः सप्रतियोगिकस्याभावापेक्षयातिशयेनाद्वैतविरोधित्वात् द्वितीयमात्रनिषेधकर्तुरद्वितीयपदस्य भावमात्रनिषेधपरत्वसङ्कोचे स्वतन्त्रद्वैतनिषेधपरत्वेनैव सङ्कोचापत्तेः अखण्डार्थेन वेदान्तेन ब्रह्माभावयोर्द्वै-

योरसिद्धेश्च देहादीनां भासमानात्माभिन्नत्वे माना-
सम्भवात् नच मिथ्याभूतेन द्वितीयाभावादिनोप-
लक्षित आत्मा शास्त्रवेद्यः स च सत्य इति वाच्यं
स्वप्रकाशत्वेन नित्यसिद्धात्मनो ऽवबोधार्थमुप-
लक्षणोक्त्ययोगात् गृहे काकोत्थाप्योत्तृणत्वादि-
वत्तदुत्थाप्यधर्मस्य ब्रह्मण्यसत्त्वेन धर्मान्तरमुत्थाप्य-
व्यावर्तकत्वरूपोपलक्षणत्वासम्भवाच्च स्वप्रकाश-
स्याप्यविद्यावशादभानाङ्गीकारे जगदान्ध्यापत्तेः "त
मेव भान्त मनुभाति सर्व"मिति व्याकुर्वता त्वया
जगद्भानस्य ब्रह्मप्रकाशत्वाङ्गीकारात् शुद्धस्यैव
ब्रह्मणो व्यावहारिकप्रपञ्चाधिष्ठानत्वाङ्गीकारेण
तद्भानं बिना ऽध्यस्तविश्वस्य भानायोगाच्च न च
स्वरूपचितः प्रकाशे ऽपि तस्याज्ञानविरोधित्वात्
विरोधिन्यावृत्तेरभावेनाविद्यावृतत्वात् सन्दिग्धत्व-
मिति वाच्यं स्वरूपचितो ज्ञानाविरोधित्वे तद्वद्ये
दुःखादावज्ञानप्रसङ्गात् दुःखाद्याकारवृत्त्यङ्गीकारे
चेतनस्य ज्ञानत्वे मानाभावापत्तेः सुखादेः क्षणम-
ज्ञातत्वापत्तेश्च नचाहं प्रत्यये विशिष्टमेव भाति न
शुद्धमिति वाच्यं विशिष्टभाने विशेष्यभानावश्य-
कत्वेनात्मनो ऽसन्दिग्धत्वेन विषयत्वासम्भवात् ननु

यथा षड्जादयो गान्धर्वशास्त्राभ्यासात् प्रागविस्फुरन्तस्तद्रूपेणानुल्लिखिता न श्रोत्रेण व्यज्यन्ते व्यज्यन्ते तु शास्त्रवासितेन तेन एवं वेदान्तवाक्यजन्यब्रह्मैक्याकारवासितान्तःकरणे तद्भावाभिव्यक्तिः न तु ततः प्रागिति चेन्न तत्र प्रागस्फुरतः पश्चाच्च स्फुरतः षड्जादिजातिविशेषस्यैव प्रकृते तदभावात् अत एव प्रयोजनस्याप्यसम्भवः न च कण्ठस्थनित्यप्राप्तस्य विस्मृतस्य मणेरुपदेशवन्नित्यप्राप्तस्वरूपोपदेशः सार्थक इति वाच्यं मण्युपदेशस्य हि सुखं दुःखाद्यभावश्च फलं नच त्वन्मते स्वरूपभिन्नं प्राप्यं किञ्चिदस्ति स्वप्रकाशात्मकस्य नित्यप्राप्तत्वात् किञ्च मणेर्देहादिभिन्नत्वेनाहंतानास्पदत्वाद्धिस्मरणविषयत्वं वक्तुं शक्यं ब्रह्मणस्तुस्वरूपत्वेनविस्मरणासम्भवान्नोक्तदृष्टान्तसिद्धिः किञ्च मणेः स्वल्पपदार्थस्य देहैकदेशवृत्तित्वेन ताटस्थ्ययोगेन विस्मृत्यर्हत्वं भवेत् आत्मनस्तु सर्वगतत्वेन स्वरूपत्वेन च तत्तासम्भवात् दृष्टान्तस्यात्यन्तवैषम्यमेव किञ्च सर्वो ह्यात्मास्तित्वं प्रत्येति न नाहमस्मीति यदि हि नात्मास्तित्वंप्रसिद्धः स्यात् सर्वोऽपि लोको नाहमस्मीति प्रतीयादित्यन्वयव्यतिरेकि-

पूर्वकभाष्योक्तिविरोधात् एतेनाधिकार्युपपत्तिरपि निरस्ता प्रयोजनाऽभावे ऽर्थित्वाभावस्तदभावे च सामर्थ्यविद्वत्त्वयोरकिञ्चित्करत्वादप्रयोजकत्वमिति संक्षेपः ॥

इति श्रीपराभिमतप्रयोजनाधिकारि
गिरिनिपातः ॥ २ ॥

नन्वस्मिन् सिद्धान्ते सर्वस्याधिकार्यादिकथनस्याज्ञानप्रयुक्ताध्यासपूर्वकप्रमाणप्रमेयादिव्यवहारान्तर्गतत्वान्नोक्तदोषावकाशो ऽध्यासमाहात्म्येनाखिलविरोधस्य परिहरणीयत्वादिति चेन्न अधिष्ठानारोप्यलक्षणप्रमाणसामग्र्याद्यभावेन दृग्दृश्ययोराध्यासिकसम्बन्धानुपपत्तेश्चाध्यासस्यैवासम्भवात् तथाहि इदं विश्वं यद्यध्यस्तं स्यात्तर्हि साधिष्ठानं स्यात् न तु तथा ऽस्ति सामान्यतो ज्ञातत्वे सति विशेषेणाज्ञातत्वस्याधिष्ठानत्वे प्रयोजकतया ज्ञातविशेषवत्त्वस्य तत्प्रयोजकत्वासम्भवात् पुरुषो नवेति संशयधर्मिणः स्थाणोरप्यन्यत्र ज्ञातस्थाणुत्वरूपविशेषत्वात् ननु तत्राज्ञातविशेषवत्त्वमप्रयोजकम् । विशेषवत्त्वेनाज्ञातत्वमेव लाघवात्प्रयोजकम् तस्मात्स्वप्रकाशत्वेन ज्ञातात्पूर्णानन्दत्वादिना ज्ञातादधि-

ष्ठानत्वं सूपपन्नमिति चेन्न स्वरूपतो ज्ञातस्य निर्वि-
शेषस्य विशेषणाज्ञानत्वासम्भवात् स्वरूपतो ज्ञात-
स्य धर्मविषयकमेवाज्ञानं । स्थाणुत्वादेर्व्यक्त्यन्तरे
ज्ञातत्वे ऽपि भ्रमस्य विशेषव्यक्तिनिष्ठत्वेन ज्ञात-
त्वात् स्थाणौ पुरुषत्वोपपत्तिः स्वरूपेतरस्वप्रकाशत्वा-
देस्तव पक्षे ब्रह्मण्यसत्त्वात् ननु सत्त्वादिकं कल्पित-
व्यक्तिभेदेन सामान्यपूर्णानन्दत्वादिर्विशेष इति चेन्न
अज्ञानकल्पितस्याज्ञानतत्वज्ञानयोरविषयत्वात् ।
बाधकज्ञानेन विषयीकर्तव्यस्याज्ञातधर्मस्यैवाधिष्ठा-
नत्वे प्रयोजकत्वाच्च स्वप्रकाशत्वाद्यारोपं प्रति स्व-
प्रकाशत्वाद्यन्तरस्य प्रयोजकत्वेऽनवस्थाप्रसङ्गाच्च
पूर्वपूर्वाज्ञानकल्पितं ब्रह्मोत्तरोत्तराज्ञानाश्रयो विषय-
श्चेति ब्रह्मणो ऽपि कल्पितत्वानित्यत्वादिप्रसङ्गाच्च
ननु पूर्णानन्दत्वेनाज्ञातं स्वरूपेण ज्ञातमिति चेन्न
अज्ञानकल्पितपूर्णानन्दत्वादेस्तु वास्तवत्वात् नच
भ्रमविरोधिज्ञानाभावएवावच्छेदकधर्मदर्शनादेश्च ।
व्यावृत्ताकारस्यैव भ्रमविरोधित्वात् न हि बाधकधी-
विषयो भ्रमकाले अज्ञातो धर्मो ब्रह्मणि तवास्ति
तत्रासद्विशेषज्ञानाभावस्य बाधकालेऽपि सत्वात्
तस्मादधिष्ठानस्य दुर्निरूपतया तत्प्रयोज्याध्यासस्य

सर्वथा ऽसिद्धिरेवेत्यर्थः ॥ ३ ॥

इति श्रीपराभिमताध्यासगिरेरधिष्ठान
शिखरनिपातः ॥ ३ ॥

अथारोप्यासिध्या ऽप्यध्यासासिद्धिः यद्यदारोपितं तत्तत्सप्रधानं दृष्टं शुक्तिरूप्यादिवत् यन्नैवं तन्नैवम् । शशशृङ्गादिवदित्यन्वयव्यतिरेकव्याप्तेः सर्ववादिसंमतत्वात् ननु प्रधानसजातीयमस्त्येव पूर्वप्रपञ्चसजातीयस्योत्तरप्रपञ्चस्याध्यासाङ्गीकारात् अध्यासो हि स्वकारणतया संस्कारमपेक्षते नतु संस्कारविषयस्य सत्यत्वमनुपयोगात् नहि प्रमाणजन्यस्यैव संस्कारस्याध्यासहेतुत्वमिति नियम इति चेन्न अनाद्यविद्यादेरध्यस्तत्वासम्भवेन तात्विकत्वप्रसङ्गात् नचाविद्याद्यध्यासस्य प्रधानादि विनैवाङ्गीकारान्नोक्तदोष इतिवाच्यं ब्रह्मणो ऽपि प्रवाहानाद्यारोपापत्तेः नच विश्वाधिष्ठानत्वेन ब्रह्मणः सत्यत्वमितिवाच्यं आरोपे ऽधिष्ठानस्यैव हेतुत्वान्नतु तस्याऽपि येन सत्त्वमपेक्षेत अन्यथा शुक्त्यादेरपि सत्वापत्तेः नचाधिष्ठानस्य ज्ञानद्वारा भ्रमाहेतुत्वे ऽप्यज्ञानद्वारा भ्रमत्वेन सत्त्वसिद्धिः भ्रमोपादानाज्ञानविषयो ह्यधिष्ठानं अज्ञानेन तु स्वकल्पितं सत्त्व-

मेव विषयीक्रियते इति वाच्यं स्वकल्पितस्य स्वेन विषयीकरणासम्भवे ऽपि पूर्वपूर्वाज्ञानकल्पितस्य ब्रह्मणो ह्युत्तरोत्तराज्ञानेन विषयीकरणासम्भवात् अपि च असतआरोपासम्भवात् । एकत्र सत एवान्यत्रारोपनियमात् नहि स्वरूपेणासतः शशशृङ्गादेरारोपः अदृष्टश्रुतत्वात् नचारोपे तद्विषयकप्रतीतिमात्रमेवापेक्षितं नतु तद्विषयस्य सत्यत्वमपीति वाच्यं असतः प्रतीतेरेवासम्भवात् नच रज्जौ सर्पप्रतीतेरिव प्रपञ्चप्रतीतेरपि दोषमात्रमेव कारणमपेक्षितं नतु विषयसत्वमपीति वाच्यं दोषात्मककारणस्याप्यसत्त्वसाम्येन तव पक्षे प्रतीतिलक्षणकार्य्योत्पत्तेरसम्भवात् कार्यस्य कारणसत्तासापेक्षत्वनियमात् कुत्राप्यसतः कारणत्वासम्भवाच्च न चासतो ऽपि सर्पस्य भयकम्पादि कार्यजनकत्वदर्शनात् कार्यस्य कारणसत्तासापेक्षत्वनियमव्यभिचार इति वाच्यं स्वरूपेणासतः कार्योत्पत्यनुकूलशक्तिमत्त्वलक्षणकारणत्वासम्भवात् भ्रमस्थले ऽपि कल्पितसर्पविषयकज्ञानस्यैव भयादिहेतुत्वं न विषयस्येति सर्पज्ञानाभाववतो बालस्य सत्सर्पदर्शने ऽपि भयाद्यदर्शनात् प्रत्युत सत्सर्पग्रहणे प्रवृत्ति-

दर्शनाच्च अन्यथा कारणमात्रस्यासत्वाङ्गीकारे कार्योत्पत्तिकथाया एवानवसरात् नन्वसतो रज्जुसर्पादेस्तज्ज्ञानकारणत्वोत्पत्तिरपि सुकरा भिन्नकारणाङ्गीकारे गौरवादिति चेन्न तत्रापि दोषस्यैवासद्विषयकज्ञानकारणत्वेन भ्रमस्थलेऽप्यसद्विषयस्य कारणत्वाभावात् तस्मात्तव मते आरोप्यासिद्ध्याऽध्यासासम्भवस्यावश्यकत्वात् इति संक्षेपः ॥

इति पराभिमताध्यासगिरेरारोप्योपपत्तिशृङ्गनिपातः ॥ ४ ॥

अथाध्याससामग्र्यभावादपि तदसिद्धिः संस्कारसादृश्यसम्प्रयोगादीनामध्यासे ह्यावश्यकानामभावेन कथमध्यासोपपत्तिरिति भावः तत्र संस्कारस्यानादित्वे ऽधिष्ठानसमसत्ताकत्वेन तस्य तात्विकापत्तेर्दुर्वारत्वात् नच स्वेनाध्यस्त एव स्वारोपहेतुरिति वाच्यं भ्रमात्पूर्वं स्वस्य कार्य्यानुमेयसंस्कारस्याध्यासकारणत्वासम्भवात् नच संस्कारो ज्ञातो व्यावहारिकः स्वेनारोपितः स्वाध्यासहेतुरस्त्येवेति वाच्यं अज्ञातस्याध्यस्तत्वे मानाभावेन पारमार्थिकत्वप्रसङ्गात् किञ्च को वा संस्काराश्रयः शुद्धं ब्रह्म वा जीवो वा नाद्यः शुद्धत्वभङ्गात् न द्वितीयः

तस्याध्यासकार्यत्वेनाध्यासोत्तरभावित्वात् । किञ्च स्मर्यमाणारोपे सादृश्यज्ञानस्यापि हेतुत्वात्प्रकृते तु निर्विशेषस्याधिष्ठानस्य सादृश्याभावात्कथमध्यासः "न संदृशे तिष्ठति रुपमस्य न तस्य प्रतिमा ऽस्ती हे"ति निषेधश्रवणात् नच कल्पितधर्मेण सादृश्यमिति वाच्यं निर्धर्मके ब्रह्मणि तस्याध्यासाधीनत्वेनान्योन्याश्रयाद्यापत्तेः न चानाद्यविद्यारोपेण सादृश्यापेक्षेति वाच्यं ज्ञानाज्ञानद्वारा ऽधिष्ठानस्याप्यनपेक्षापत्त्या तस्य सत्यत्वापत्तेः नच पीतः शङ्ख इति सादृश्यं विना ऽपि भ्रमः प्रतीयते इति वाच्यं द्रव्यत्वादिना तत्रापि धियः सत्वात् नच प्रधानमात्रवृत्तितया प्रागवगतमध्यासकाल एवाधिष्ठानवति तया गृहीतं यत्तदेव सादृश्यं तत्र हेतुः न तु प्रागेव प्रधानाधिष्ठान उभयवृत्तितया गृहीतं तस्य सांशयिकत्वात् द्रव्यत्वं तूभयवृत्तितया प्रागेवावगतमिति वाच्यं चाकचिक्यादेः शुक्तिरुप्योभयवृत्तितया प्रागेवावगतत्वे ऽपि शुक्तौ रुप्यत्वाद्यारोपस्य दर्शनात् आरोप्यविरोधिकोट्यन्तरोपास्थित्यभावेन सांशयिकत्वासम्भवात् नच सादृश्यज्ञानस्य न संस्कारोद्बोधकतया भ्रमहेतुत्वनियमः तद्भावे ऽपि

तददृष्टादिना तदुद्बोधसम्भवादिति वाच्यं" फला-नुमेयस्याज्ञातस्यादृष्टस्यारोपात्प्राक् सत्वे माना-भावात् अनाद्यविद्याध्यासस्य दोषानपेक्षत्वप्रामा-ण्यस्य सत्त्वापत्तेः दोषानपेक्षावदधिष्ठानस्याप्य-नपेक्षत्वापत्तेश्च नच जनकत्वेनापेक्षत्वे ऽप्यध्यासन-मात्रस्य साश्रयत्वदर्शनाद् तदाश्रयतया तदपेक्षेति वाच्यं अध्यासमात्रस्य दोषजन्यत्वदर्शनादविद्या-ध्यासस्याप्यनादित्वासम्भवात् किञ्च यत्राध्यासत्वं तत्र सादित्वं शुक्तिरूप्यादिवत् यत्रानादित्वं तत्र नाध्यासत्वमात्मवदित्यन्वयव्यतिरेकव्याप्तिवदनाद्य-ध्यासे व्याप्त्यदर्शनात् अपिच पुरोवर्त्तिनीन्द्रिय-संयुक्ते एव विषये विषयान्तराध्यासदर्शनाद् कथम-विषये चेतने ऽध्यासः सम्भवतीति ननु न तावदय-मेकान्तेनाविषयो ऽस्मत्प्रत्ययगोचरत्वात् तत्वं च अस्मत्प्रत्ययो ऽहमित्यध्यासः तत्रभासमानत्वं अस्मदर्थश्चिदात्मा प्रतिविम्बत्वेन यत्र प्रतीयते सोस्मत्प्रत्ययो ऽहङ्कारस्तत्र भासभानत्वमिति चेन्न अध्यासे सति भासमानत्वं तस्मिंश्च सत्यध्यास इत्यन्योन्याश्रयत्वापत्तेः। नचानादित्वान्नोक्तदोष इति वाच्यं अनादित्वस्य हेतोर्निरस्तत्वात् किञ्चा-

स्मत्प्रत्ययस्याहङ्काराध्यासोत्तरभावित्वेनाद्याध्यासे कथं प्रतीतिरित्याशङ्कायां निरूढत्वात् भासमानत्वस्याहङ्काराध्यासजन्यत्वेनाध्याससमये भासमानतायां मानाभावादित्यर्थः किञ्चात्मनो विषयत्वाङ्गीकारे "न चक्षुषा गृह्यते नापि वाचे" त्यादिश्रुतीनामात्माविषयत्वरूपव्याख्यानस्य भवतां सिद्धान्तस्य भङ्गात् भवतां सिद्धान्ते विषयस्य मिथ्यात्वाङ्गीकारेणात्मनो मिथ्यात्वस्यावश्यंभावाच्च आत्मा मिथ्या अस्मत्प्रत्ययगोचरत्वात्तव मते ऽहङ्कारादिवदित्यनुमानात् किञ्च शुक्तिरूप्यादिभ्रमस्थले सर्वत्र दोषसम्प्रयोगसंस्कारादीनामधिष्ठानसमसत्ताकत्वस्याध्यस्ताधिकसत्ताकत्वस्य च दर्शनात् कथमध्यासः ननु पुरोवर्त्तिनि इन्द्रियसंयुक्ते एव विषये विषयान्तराध्यास इति नास्ति नियमः अप्रत्यक्षे ऽप्याकाशे बालानां तलमलिनताद्यध्यासदर्शनात्तथा प्रकृते ऽपि युक्तो ऽध्यासइति चेन्न असिद्धत्वाद्धेतुदृष्टान्तयोः आकाशस्य पञ्चीकृतत्वेन रूपादिमत्त्वस्याविरोधात् तत्र नीलादिप्रत्ययस्य यथार्थत्वेनाध्यस्तत्वाभावात् प्रत्यक्षयोग्यत्वाच्च तस्मादनेन हेत्वाभासेन नोक्तदोषादुद्धारः अतो ऽध्याससामग्र्यभावान्नाध्यास-

सम्भवः कारणाभावे कार्य्याभावनियमादिति संक्षेपः

इति पराभिमताध्याससामग्र्युपपत्ति
शिखरनिपातः ॥ ५ ॥

अथ चिदचितोः सम्बन्धस्याऽपि दुर्निरूपत्वा-दध्यासासिद्धिः ननु सर्वस्या ऽपि दृश्यस्य दृशि ह्यध्यस्तत्वात्तयोस्त्वाध्यासिकसम्बन्धयोगे ऽन्यत-रस्य मिथ्यात्वं भाव्यं दृशो मिथ्यात्वासम्भवेन दृश्य-स्यैव मिथ्यात्वं तस्मादाध्यासिकसम्बन्धस्यैवोप-पत्तिरिति चेन्न तव पक्षे दृश्यस्य ब्रह्मरूपदृगध्य-स्तत्वे ऽपि कस्यचित् कदाचित् प्रतिप्रकाशाय त्वया ऽपि तत्सन्निकृष्टेन्द्रियजन्यवृत्तिद्वारकसम्बन्ध-स्यानावृतदृशि स्वीकारात् तस्य च सत्वे ऽप्यर्थे वृत्तिद्वारा सम्भवेनाध्यासिकसम्बन्धस्याप्रयोजक-त्वात् नहि तव विज्ञानवादिनामिव तत्तज्ज्ञाने तत्तदर्थाध्यासस्वीकारः शुद्धदृशः स्वतो भेदाभावात् उपाधिविशिष्टायाश्च चितो भेदे ऽपि घटादिवत्तस्या-मिथ्यात्वेनाधिष्ठानत्वासम्भवात् नच वृत्तेः पूर्व-माध्यासिकसम्बन्धे सत्यपि न प्रकाशः वृत्त्या भग्नावरणाचित एव प्रकाशत्वादिति वाच्यं चरम-साक्षात्कारात् प्राक् शुद्धस्यानभिव्यक्तत्वात्

अभिव्यक्तस्य च घटावच्छिन्नस्य मिथ्यात्वादात्मा-
श्रयापत्त्या चानधिष्ठानत्वात् नच शुद्धविषय-
कमूलाज्ञानानिवृत्तावपि घटाकारवृत्त्या मूला-
ज्ञाननिवृत्त्या घटप्रकाशोपपत्तिरिति वाच्यं घटाकार-
वृत्त्या विषयीकृतस्य चेतनस्य सत्यत्वे दृश्यत्वस्य
व्यभिचारापत्तेः मिथ्यात्वे चाध्यस्ताधिकसत्ताकत्वा-
भावेनाधिष्ठानत्वासम्भवात् क्षुद्राज्ञाननिवृत्तावपि
महाज्ञानावृतस्याप्रकाशकत्वाच्च किञ्च चितो दृशः
प्रमात्वमप्रमात्वं वा आद्ये तस्या दोषाजन्यत्वेन
तद्विषयस्य सत्यत्वापत्त्या सत्यं प्रत्यधिष्ठानत्वा-
योगात् द्वितीये दोषजन्यत्वेन सुतरामधिष्ठानत्वा-
योगाच्च ननु दोषाजन्यत्वस्य न प्रमात्वे प्रयोजकत्वं
चितः सर्वत्र दोषाजन्यत्वात् किन्तु दोषाजन्यवृत्त्य-
वच्छिन्नत्वं प्रकृते तदभावान्न विषयस्य सत्यत्वमिति
चेन्न दोषाजन्यवृत्त्यवच्छिन्ने मृषाभूते घटाध्यासा-
सम्भवेन तस्य घटाद्यप्रकाशकत्वात् ननु ज्ञानज्ञेययोः
क्लृप्तसंयोगसमवायादिसम्बन्धाभावात् कल्पित एव
कश्चित् सम्बन्धः स्वीकार्यः सचाध्यासिक एवेति
चेन्न ध्वंसादेरतीतादिना मिथ्यालक्षणान्तर्गतस्य
प्रतियोगिना शक्तेः शक्येनाज्ञानस्याज्ञेयेनेच्छाया-

इष्यमाणेन व्यवहारस्य व्यवहर्त्तव्येन वाक्यस्यार्थेन वृत्तिरूपज्ञानस्य ज्ञेयेनैव ज्ञानज्ञेययोः सम्बन्धो नेति त्वद्वाक्योक्तसम्बन्धाभावस्य वाक्येनाध्यासिक सम्बन्धाभावे ऽपि सम्बन्धान्तरवज्ज्ञानज्ञेययोरपि सम्बन्धान्तरसम्भवात् नच मिथ्या जगदन्तर्गतत्वात् उक्तसम्बन्धानामपि मिथ्यात्वमिति वाच्यं जगन्मिथ्यात्वसिद्ध्या सम्बन्धमिथ्यात्वसिद्धिः तन्मिथ्यात्वसिद्धौ जगतो मिथ्यात्वसिद्धिरित्यन्योऽन्याश्रयापत्तेः चरमवृत्तौ ब्रह्मणोऽध्यासासम्भवेन ज्ञेयाध्यासनियमाभावाच्च नच तत्रज्ञानमेव ज्ञेयेऽध्यस्तं ज्ञानज्ञेययोरन्यतरस्मिन्नन्यतराध्यासानियमादिति वाच्यं विकल्पासहत्वात् ब्रह्मण्यध्यस्तधियो ब्रह्मत्वमङ्गीक्रियते न वा आद्ये घटधियो ऽपि तत्राध्यस्ताया ब्रह्मधीत्वापत्त्या तत एव मोक्षापत्तेः द्वितीये चानिर्मोक्षप्रसङ्गात् नचाध्यासविशेषः शुद्धब्रह्मविषयतायाः प्रयोजको घटादिबुद्धौ नास्तीति वाच्यं करणविषययोः सम्बन्धविशेषस्यैव ज्ञानज्ञेययोर्विषयतानियामकत्वेन ज्ञानज्ञेयसम्बन्धस्य विषयतासमानयोगक्षेमस्य विषयत्वानियामकत्वात् अथ चरमज्ञानस्यान्तःकरणावच्छिन्न एवाध्यासो न

शुद्धचिन्मात्रे ऽहं जानामीति प्रतीतेः शुद्धं जानातीत्यप्रतीतेश्च परोक्षज्ञाने स्मृतौ प्रातीतिकज्ञाने च विषयाध्यासाभावेन ज्ञानज्ञेययोराध्यासिकसम्बन्धनियमभङ्गाच्च प्रातीतिकज्ञानस्य त्वया मिथ्यात्वाङ्गीकारात् नच नित्यपरोक्षस्थले स्मृतिस्थले च वृत्तावनध्यासेऽप्यधिष्ठानविषयकवृत्त्यभिव्यक्तं चैतन्य एवाध्यास इति न का ऽप्यनुपपत्तिरिति वाच्यं अभिव्यक्तचैतन्यस्य परोक्षस्थले ज्ञानत्वाभावात् ज्ञानभिन्ने ज्ञेयाध्यासे मानाभावात् त्वयानङ्गीकारात् ज्ञानज्ञेययोराध्यासिकसम्बन्धाभावे ऽपि विषयप्रकाशे आध्यासिकसम्बन्धस्यातन्त्रत्वापाताच्च परोक्षइवापरोक्षज्ञाने ऽपि विषयानध्यासापाताच्च परोक्षस्थले ऽभिव्यक्तापरोक्षैकरसचैतन्यस्य ज्ञानत्वे विषयापरोक्षापाताच्च रूप्यादिकमिदमंशावच्छिन्ने ऽध्यस्तं भास्यते चाविद्याप्रतिविम्बितेन तेनेति विषयिणि ज्ञाने विषयाध्यासाभावाच्च रूप्यादेः स्वज्ञाने ऽध्यासे रूप्यज्ञानस्याज्ञाने भ्रमोत्पत्तिस्तज्ज्ञाने तन्निवृत्तिरित्यापत्तेश्च अधिष्ठानतत्त्वज्ञानाज्ञानाभ्यामध्यासजन्मनिवृत्त्योर्नियतत्वात् नन्विदमंशावच्छिन्नचैतन्यं रूप्याद्यधिष्ठानं तच्च दैवाद्रूप्या-

कारवृत्त्यवच्छिन्नमपि नैतावता भ्रमाधिष्ठानत्वेन तदपेक्षा तस्य भ्रमविरोधिशुक्त्याद्याकारेणाज्ञानं भ्रमहेतुः तेनाकारेण ज्ञानं भ्रमविरोधीति चेन्न उपाधिभेदेनोपहितभेदावश्यकत्वेनेदमंशावच्छिन्न-भिन्ने रूप्याकाराविद्यावृत्त्यवच्छिन्ने रूप्यज्ञाने रूप्या-ध्यासासिद्धेः अपिच वृत्त्युदयात्प्रागाध्यासिकसम्ब-न्धस्य सत्वेऽपि विषयप्रकाशाभावादन्वयव्यतिरेका-भ्याम् वृत्तिरेव ज्ञानं तत्राध्यासिकसम्बन्धाभावा-दन्य एव सत्यः सम्बन्धो वक्तव्यः नच वृत्त्युदया-त्प्रागज्ञानार्थसिद्ध्यर्थं वृत्तिभिन्नज्ञानमवश्यमभ्यु-पेयं इतरथा मानाभावे तस्य तुच्छतया सन्निकर्ष-तज्ज्ञानहेतुत्वेन प्राक् सत्वकल्पनाप्रामाणिकी न स्यादिति वाच्यं तत्पुरुषस्य तज्ज्ञाने तं प्रति तस्या-ज्ञातत्वासम्भवात् किञ्चाध्यासिकसम्बन्धो नाम-अध्यस्तःसम्बन्धो वा अध्यस्तत्वमेव वा आद्ये सम्बन्धस्य मिथ्यात्वे ऽपि सम्बन्धिनो दृश इवा-मिथ्यात्वापत्तेः द्वितीये ज्ञानस्याप्यध्यस्तत्वेन तत्रेतराध्यासानुपपत्तेः न च वृत्त्यवच्छिन्नं ज्ञानं तत्रावच्छेदिकाया वृत्तेर्जडाया अध्यस्तत्वे ऽपि अवच्छेद्यस्य चैतन्यस्यानध्यस्तत्वेन तत्र दृश्या-

ध्यासापत्तिरिति वाच्यं वृत्यवच्छिन्नस्य मिथ्यात्वेन तत्र व्यावहारिकघटाद्यध्यासासम्भवात् तस्य सत्त्वे दृश्यत्वादेस्तत्र व्यभिचारापत्तेः नच सम्बन्धस्य सम्बन्धिभ्याम् भिन्नत्वे अनवस्थापत्तिरभिन्नत्वे सम्बन्धत्वहानिरिति वाच्यम् उक्तदोषस्याध्यासिक-सम्बन्धे ऽपि साम्यात् नच तस्य मायिकत्वेन नोक्तदोष इति वाच्यं मायायाश्च घटादिभ्यो घटादेर्मृदादेश्चोत्पत्त्यापत्तेः व्यावहारिकमर्यादा-यास्त्वज्ज्येष्ठेन सौगतेना ऽपि स्वीकार्यत्वाच्च ममाप्य-चिन्त्यातर्क्याघटघटनापटीयस्येश्वरशक्त्यैव सत्य-सम्बन्धोपपत्तेः यादृशविषयत्वं तव वृत्तिं प्रति शुद्धे ब्रह्मणि तादृशविषयत्वमेव वृत्तिं प्रति घटादिष्वस्तु नच वृत्तौ ब्रह्मानध्यासे ऽपि वृत्तेरेव तत्राध्यास इति वाच्यं घटादिषु ज्ञानस्याध्यासापत्तेः अपि च दूरस्थासंयुक्तवृक्षयोः संयुक्ततया गृह्यमाणयोः संयोगस्य मिथ्यात्वे ऽपि तयोरमिथ्यात्ववत् प्रकृतेऽपि सम्बन्धस्य मिथ्यात्वे ऽपि सम्बन्धिनो-रमिथ्यात्वोपपत्तेः किञ्च सम्बन्धस्य निरुक्त्यभावेन मिथ्यात्वाङ्गीकारे ब्रह्मण आनन्दत्वज्ञानत्वसत्य-त्वस्वप्रकाशत्वादीनां खण्डनोक्तरीत्या दुर्वचत्वेन

ब्रह्मतत्त्वतो नानन्दादिरूपं एवं त्वयैव कीदृक्त्वप्रत्यगिति चेत् तादृगीदृगिति द्वयं न सरत्येतत्प्रत्यगित्यवधारयेति ब्रह्मणो दुर्वचत्त्वमुक्तमिति तस्याप्यसत्त्वं स्यात् न चानन्दत्वादिधर्मवत्तया दुर्निरूपत्वेऽपि दुःखादिप्रत्यनीकत्वाद्युपलक्षितस्वरूपत्वेन सुनिरूपमिति वाच्यं तत्र दुःखादिप्रत्यनीकत्वादीनां त्वया ऽनङ्गीकारेणोक्तदोषस्य तादवस्थ्यात् तस्मादिक्षुक्षीरमाधुर्यादिवद्दुर्वचमपि विषयत्वं सखण्डमखण्डं वा सत्यमेव सम्वन्धः प्रमाणवलात् स्वीकार्यः इतरथोक्तदोषयोगात् इति ज्ञानज्ञेययोराध्यासिकसम्वन्धानुपपत्त्या ऽप्यध्यासासिद्धिरिति सिद्धम् ॥

इति पराभिमताध्यासगिरेराध्यासिकसम्वन्धोपपत्तिशिखरनिपातः ॥ ६ ॥

अथ लक्षणासिद्ध्या ऽपि तदासिद्धिः किं तावदध्यासलक्षणमित्यपेक्षायामाहुः केचित् यत्र यस्याध्यासस्तस्यैव विपरीतस्य धर्मकल्पनमध्यासः यत्राधिष्ठाने शुक्त्यादौ तस्यैवाधिष्ठानस्य विपरीतधर्मकल्पनं विपरीतो विरुद्धो धर्मो यस्य तस्य

---

* शून्यवादिनः

रजतादेरत्यन्तासतः कल्पनमित्यर्थः असदेव रजतमभादिति प्रतीतेः अन्ये* तु असतो भानासम्भवात् अन्यत्रान्यधर्मावभासोऽध्यासः अन्यत्र शुक्त्यादौ वाह्ये ऽन्यधर्मस्य स्वावयवधर्मस्य देशान्तरस्थरूप्यादेरवभासोऽध्यास इत्यन्यथाख्यातिवादिन आचक्षते किञ्च देशान्तरस्थस्य देशान्तरभाने सम्वन्धाभावेनासम्भवात् अन्यत्र वाह्ये शुक्त्यादौ बुद्धिरूपात्मनो धर्मस्य रजतस्यावभास इत्यात्मख्यातिवादिनो† वदन्ति अख्यातिवादिनस्तु‡ यत्र यदध्यासस्तद्विवेकाग्रहणनिवन्धनो भ्रम इत्याहुः यत्र शुक्त्यादौ यस्य रूप्यादेरध्यासो लोकसिद्धस्तयोरर्थयोस्तद्धियोश्च भेदाग्रहे सति तन्मूलो भ्रम इत्यर्थः मायावादिनस्तु स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इत्याहुः एतदुक्तं भवति अत्र परत्रावभास इत्येवलक्षण-

---

* तार्किकाः

† आत्मख्यातिरसत्ख्यातिरख्यातिःख्यातिरन्यथा तथाऽनिर्वचनीयख्यातिरित्येतत्ख्यातिपञ्चकम् विज्ञानशून्यमीमांसातर्काद्वैतविदां मतम् पञ्चख्यातिनिरासेन सत्ख्यातिश्च प्रतन्यते ॥

विज्ञानवादिनः

‡ मीमांसकाः

मिष्टं पदद्वयं तु तदुपपादकं तथाहि अवभास्यते इत्यवभासो रजताद्यर्थः तस्यायोग्यमधिकरणं-परत्र पदार्थः तत्त्वंचारोप्याऽत्यन्ताभाववत्त्वं तद्वत्त्वं वा तथाचैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ता-भाववति अवभास्यत्वमध्यस्तत्वमित्यर्थः इदं च साधनाद्यध्याससाधारणं संयोगे ऽतिव्याप्ति-वारणायैकावच्छेदेनेति संयोगस्य स्वसंसृज्यमाने वृक्षे स्वात्यन्ताभाववत्यवभासमानत्वे ऽपि स्वस्वात्य-न्ताभावयोर्मूलाग्रावच्छेदकभेदान्नातिव्याप्तिः पूर्वं-स्वाभाववति भूतले पश्चादानीतो घटो भातीति घटे ऽतिव्याप्तिवारणाय स्वसंसृज्यमान इतिपदं तेन स्वाभावकालप्रतियोगिसंसर्गस्य वर्त्तमानत्वमुच्यत इति नातिव्याप्तिः भूत्वावच्छेदेनावभास्यमाने गन्धे ऽतिव्याप्तिवारणाय स्वात्यन्ताभाववतीति पदं शुक्ता विदन्तावच्छेदेन रजतसंसर्गकाले ऽत्यन्ताभावो ऽस्तीति नाव्याप्तिः ननु शुक्तौ रजतस्य सामग्र्य-भावेन संसर्गासत्त्वादसम्भवः नच स्मर्यमाणस्य सत्यरजतस्यैव तत्रावभास इतिवाच्यम् अन्यथा ख्यातिप्रसङ्गादित्याशङ्क्याह स्मृतिरूप इति स्मर्यत इति स्मृतिः सत्यरजतादिस्तस्य रूपमिव रूपम-

स्येति सः स्मर्यमाणसदृश इत्यर्थः सादृश्यपदेन स्मर्यमाणादारोप्याभेदान्नान्यथाख्यातिरित्यर्थः ॥ सादृश्यमुपपादयति पूर्वदृष्ट इति दृष्टं दर्शनं संस्कारद्वारा पूर्वदर्शनादवभास्यते इति पूर्वदृष्टावभासः तेन संस्कारजन्यज्ञानविषयत्वं स्मर्यमाणारोपयोः सादृश्यं बोध्यते प्रमाणाजन्यज्ञानविषयत्वं वा स्मृत्यारोपयोः संस्कारजन्यत्वात् प्रमाणाजन्यत्वाच्च तर्ह्यारोपस्य स्मृतित्वमेव विवक्षितमिति चेन्न दोषसम्प्रयोगजन्यत्वस्याऽपि विवक्षितत्वेन तन्मात्रजन्यत्वाभावात् अत्र सम्प्रयोगो नाम अधिष्ठानसामान्यज्ञानमुच्यते अहङ्काराध्यासे इन्द्रियसम्प्रयोगाभावात् एवं च दोषसम्प्रयोगसंस्कारवलाच्छुक्तौ रजतमुत्पन्नमस्तीति परत्रावभासस्य लक्षणत्वमुपपन्नमिति स्मृतिरूपपूर्वदृष्टपदाभ्यामुपपादितं भवतीति तत्रार्थाध्यासे स्मर्यमाणसदृशः परत्र पूर्वदर्शनादवभास्यते इति योजना ज्ञानाध्यासे तु स्मृतिसदृशः परत्र पूर्वदर्शनादवभास इति वाक्यं योजनीयमिति संक्षेपः अत्र ब्रूमः यदुक्तलक्षणं तदापातरमणीयं मूलाविद्याऽध्यासे तदसम्भवस्य दुर्वारत्वात् एकत्र सतो

ऽन्यत्रारोपत्वं भ्रमत्वं अत्यन्तासतो ऽध्यासायोगात् तत्रारोप्यनिरासे पूर्वमेव विस्तरात् प्रयुक्तं इदं रजतमिति प्रतीतिवदियमविद्येति कस्यचित् कदाचिदपि प्रतीत्यभावात् संस्कारसादृश्यसम्प्रयोगसामग्रीविरहाच्च संस्कारजन्यज्ञानविषयत्वं सादृश्यमित्युक्तमधस्तादिति वाच्यम् दुरुक्तत्वात् संस्कारस्यानुभवपूर्वकत्वेन तदभावे संस्कारासिद्धेः तदसिद्ध्या च सुतरां तज्जन्यज्ञानाभावस्तदभावे च कथं तत्सादृश्यमिति मनीषिभिश्चिन्त्यं किञ्चाविद्यासादृश्यं कस्मिन् वर्त्तते इति वक्तव्यं न तावद् शुद्धे तस्य निर्विशेषत्वात् अन्यथा शुद्धत्वहानिप्रसङ्गात् ना ऽपि जीवे तस्याध्यस्तत्वेनोत्तरभावित्वात् किञ्चाविद्यायाश्चितो ऽध्यासे ऽपि चित् सादृश्यस्य कथं वृत्तिरितिवक्तव्यम् सूर्य्यसादृश्यस्या तमस्यसम्भववत् महद्विरोधात् यदप्युक्तं स्मर्यमाणसदृश इति अध्यासविशेषणं तदप्यविचारितं प्रथमाध्यासे स्मर्यमाणस्यैव शशशृङ्गायमाणत्वात्कुतस्तत्सादृश्यसम्भावना ऽपीति किञ्च संस्कारस्याश्रयाभावेन सुतरामसिद्धिरित्यग्रे निरसिष्यमाणत्वात् यदप्युक्तं सम्प्रयोगो नामात्रा ऽधिष्ठान-

सामान्यज्ञानमेव अहङ्काराध्यासे इन्द्रियसम्प्रयोगा भावादिति तदप्यसम्यक् निर्विशेषे सामान्यविशेषत्वाभावात्कल्पितसामान्यादिधर्मस्याध्यासजन्यत्वेन तदानीमभावात् किञ्च तवाभिमताधिष्ठानसामान्यज्ञानस्याश्रयाभावेन कुत्राप्यवृत्तित्वात् ज्ञातुरभावात् ज्ञानासिद्धेः तथाच सामग्रीविरहादध्यासासम्भव इतिसिद्धं अयंभावः अध्यासमात्रस्य दोषसादृश्यसंस्कारसम्प्रयोगसामग्रीजन्यत्वनियमस्तावन्निर्विवादः कारणाभावे कार्य्याभावनियमात् तत्रेदं रजतमिति प्रतीतौ दोषसादृश्यज्ञानसंस्काराणां भ्रान्तिमत्पुरुषविशेषनिष्ठत्वात् रजत सादृश्यस्य च शुक्तिवृत्तित्वात् सम्प्रयोगस्य च सम्बन्धरूपत्वेनोभयनिष्ठत्वात् तत्सङ्घातरूपसामग्र्याध्याससिद्धिरविवादा प्रकृते तु दोषसादृश्यज्ञानादिसामग्री तदाश्रययोरभावात् जीवदोषादीनामध्यासकार्यत्वेन तदुत्तरभावित्वाच्च कथमविद्याऽध्यास इतिमीमांसनीय इति नन्वध्यासो द्विविधः सादिरनादिश्च तत्र सादावेवोक्तसामग्र्यपेक्षा नतु द्वितीये तथाच विद्याध्यासस्यानादित्वान्नोक्तदोषावकाशः एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्य-

यरूप इति श्रीभगवत्पादभाष्यकारोक्तेरिति चेन्न स्वप्राङ्गणेऽश्वधावनमात्रत्वात् न क्वाऽपि केनाऽपि कथंचिदपि कोऽप्यनादिरध्यासो दृष्टचरो युक्तिसहो वा सर्वेषामपि सादित्वदर्शनात् अनादेः सतोऽपि वस्तुनोऽध्यस्तत्वाङ्गीकारे ब्रह्मणोऽपि तथात्वस्य वक्तुंशक्यत्वात् तस्याऽपि अनादिभावत्वसाम्यात् नन्वत्रानादित्वं नामानाद्यविद्याकार्यत्वं नैसर्गिकत्वं चाध्यासात्संस्कारस्ततोऽध्यासइति प्रवाहरूपेण अनन्तत्वं च ज्ञानं विना ध्वंसायोग्यत्वं विवक्षितं तस्मान्नोक्तदोषावकाश इति चेन्न असदुत्तरत्वात् तथाहि न तावदुक्तलक्षणानादित्वं वक्तुं शक्यं अनादित्वकार्यत्वयोरेकत्र व्याघातात् प्रत्युत कार्यत्वस्य सादित्वेनैवव्याप्तिदर्शनाच्च नाऽपि नैसर्गिकत्वं वक्तुमर्हं अन्योऽन्याश्रयत्वप्रसङ्गात् नाप्युक्तलक्षणानन्तत्वं ज्ञानेन तत्सम्बन्धस्यैव ध्वंसनात् न स्वरूपस्य "गौरनाद्यन्तवती अजामेकां लोहितशुक्लकृष्णा" मित्यादिश्रुतेः अनाद्यनन्तरूपस्य निवृत्तिरेव श्रूयते नतु स्वरूपनाशः अन्यथा मुक्तानां बाहुल्यादिदानीमनुपलब्धिप्रसङ्गात् "भूयश्चान्ते विश्वमायानिवृत्तिः मामेव ये प्रपद्यन्ते मायामेतां तरन्ति

ते" इतिश्रुतिस्मृतिभ्याम् नच सर्ववादिसम्मतत्वात् कथमध्यासो निरस्यत इतिवाच्यं साद्यध्यासस्य सम्मतत्वे ऽप्यनाद्यध्यासस्य केषामप्यसम्मतत्वात् नन्वध्यस्तत्वानङ्गीकारे ज्ञाननिवर्त्त्यं न स्यादिति चेन्न सतो ऽपि निवृत्तेः सम्भवात् सत एव द्रव्यस्य दानेन निवृत्तिदर्शनात् नच तस्या ऽपि मिथ्यात्वं सम्प्रदाने तस्य द्रव्यस्य सत्त्वदर्शनात् अर्थापत्तिखण्डने विस्तरिष्यमाणत्वात् तस्मात्सम्बन्धनिवृत्तिरेव ज्ञानजन्या नस्वरूपनाश इत्यकामेनाप्यभ्युपगन्तव्या अतो ऽध्यासलक्षणासिद्ध्या ऽप्यध्यासासिद्धिरित्यलं विस्तरेण ॥

इतिपराभिमतो ऽध्यासलक्षण-
शिखरनिपातः ॥ ७ ॥

अथप्रमाणाभावादप्यध्यासानुपपत्तिः ॥

ननु द्रष्टा ऽनुमाता श्रोता ऽहमित्यादिप्रत्यक्षस्य देवदत्तादिकर्त्तृकः सर्वो ऽपि व्यवहारःतदीयदेहादिष्वहंममाध्यासमूलकः तदन्वयव्यतिरेकानुसारित्वात् यदेवं तदेवं मृन्मूलघटवदित्यनुमानस्य यद्यध्यस्तः प्रमाता न स्यात्तर्हि प्रमाणादिव्यवहारो न स्यात् सर्वस्या ऽपि व्यवहारजातस्याविद्यावद्विषय-

कत्वादित्यर्थापत्तेश्चात्र मानत्वात् तथा चाह भग-
वान्भाष्यकारः तमेतमविद्याख्यमात्मानात्मनोरि-
तरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा
लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि
विधिनिषेधमोक्षपराणीत्युक्त्वा कथं पुनरविद्या-
वद्विषयाणि प्रत्यक्षादिप्रमाणानि शास्त्राणि चेत्या-
क्षिप्य समादधे उच्यते देहेन्द्रियादिष्वहं ममाभि-
मानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुप-
पत्तेरित्यादिनेति कथं प्रमाणाभाव इति चेन्न उक्त-
प्रत्यक्षानुमानादेराभासमात्रत्वात् तथाहि उक्तप्र-
त्यक्षादीनां शरीरेन्द्रियादियुक्तात्मपरत्वेनाध्यस्त-
विषयकत्वाभावात् "आत्मेन्द्रियमनोयुक्तो भोक्तेत्या
हुर्मनीषिण" इतिश्रुतेः अन्यथा युक्तस्थाने अध्यस्त
इतिप्रयोगः श्रुतौ स्यात् श्रुतिगृहीतत्वादुक्तार्थस्यैव
सम्यक्त्वेनोक्तमानानामध्यासपरत्वाभावात् किञ्चा-
ध्यासस्याद्याप्यसिद्ध्या तदनुमाने साध्यासिद्धेः
अध्यासप्रयुक्तो व्यवहारस्तत्प्रयुक्तश्चाध्यास इत्य-
न्योऽन्याश्रयाच्च किञ्च हेतोरपि स्वरूपासिद्धत्वात्
अध्यासाऽसिद्ध्या तदन्वयव्यतिरेकस्य सुतराम-
सिद्धेः घटादीनां मृत्परिणामत्वेन दृष्टान्तवैष-

न्याच्च तथैव व्यवहारस्य देहादियुक्तात्मकर्तृकत्वेना-
न्यथासिद्धत्वादर्थापत्तेरपि निर्मूलत्वात् आभास-
मात्रत्वमिति ननु माऽस्तु प्रत्यक्षादीनामत्रप्रामाण्यं
"ब्राह्मणो यजेत आत्मा वा रे द्रष्टव्य" इत्यादि
श्रुतीनामेव वर्णाश्रमवयोवस्थाद्यध्यासवन्तमेवा-
धिकृत्य प्रवृत्तिदर्शनात् तथोक्तं भगवत्पादैर्भाष्य-
कारैः "ब्राह्मणोयजेते" त्यादीनि शास्त्राणि आ-
त्मनि वर्णाश्रमवयोऽवस्थाविशेषाद्यध्यासमाश्रित्य
प्रवर्त्तन्ते इति तस्माच्छ्रुतिप्रमाणकत्वादध्यासोऽव-
श्यं माननीय इति चेन्न उक्तश्रुतीनामपि वर्णा-
श्रमवयोऽवस्थादिमच्छरीरसंयुक्ताधिकारिविषयक-
त्वाविशेषात् आसामपि निर्णायस्य तयैक्यवाक्य-
त्वाच्च तन्निष्ठानाममनीषित्वयोगं श्रावयन्ती भग-
वती श्रुतिस्तद्विपरीतवादिनां कुमनीषित्वं सूचयति
तस्माद्येषां मते ऽध्यासो वेदादिप्रमाणविरुद्धोऽपि
कुलधर्मत्वेन ग्राह्यस्तैरेव माननीय इति मनीषि-
पदप्रयोगस्वारस्यार्थः अथ च तव मते जीवन्मुक्ता-
नामपि याज्ञवल्क्यादीनां तादृशव्यवहारस्य ताद
वस्थ्यदर्शनेन तेषामप्यध्यासवत्त्वं स्वीकार्यं अन्यथा
व्यतिरेकनियमभङ्गात् तथात्वे च तेषामज्ञत्वाविशे-

षेण तदुपदेशमूलकेदानीन्तनानां पौरुषेयशास्त्र-व्याख्यातृवाक्यजन्योपदेशानां सुतरामनाप्तत्वप्रस-ङ्गेनोपदेशसन्ततेः सुतमां वञ्चकतायोगेनानिर्मोक्ष-प्रसङ्गादिति संक्षेपः ॥

अत्रविशेषस्याग्रे भूयो वक्ष्यमाणत्वादित्यर्थः ॥

इतिपराभिमताध्यासविषयकप्रमाण-
शिखरनिपातः ॥ ८ ॥

नन्वध्यासस्यासम्भवः किमयुक्तत्वाद्वा भाना-भावाद्वा कारणाभावाद्वेति विवेचनीयं आद्ये इष्टा-पत्तिः अध्यासस्यासङ्गे स्वप्रकाशात्मन्ययुक्तत्वस्या-स्माकमलङ्कारत्वात् न द्वितीयः अज्ञः कर्त्ता मनुष्यो ऽहमिति प्रत्यक्षानुभवात् नचेदं प्रत्यक्षं देहादि संयुक्तात्मविषयकत्वात्प्रमेत्युक्तमधस्तादिति वाच्यं अपौरुषेयतया निर्दोषेणोपक्रमादिलिङ्गावधृत-तात्पर्येण तत्त्वमस्यादिवाक्येनाकर्तृब्रह्मबोधनेनास्य भ्रमत्वनिश्चयात् न च क्षणिकयागस्य श्रुतिब-लात्कालान्तरभाविफलहेतुत्ववत् "तथा विद्वान्नाम-रूपाद्विमुक्त" इति श्रुतिबलात्सत्यस्या ऽपि ज्ञानान्नि-वृत्तिसम्भवादध्यासकल्पना व्यर्थेति वाच्यं तत्त्वज्ञान-मात्रनिवर्त्यस्य क्वा ऽपि सत्यत्वादर्शनात् सत्यस्य-

चात्मनो निवृत्त्यदर्शनाच्च अयोग्यत्वानिश्चये सति सत्यवन्धस्य ज्ञानान्निवृत्तिश्रुतेर्वाधकत्वायोगात् न च सेतुदर्शनात् सत्यस्या ऽपि पापस्य नाशदर्शनान्नायोग्यता ऽनिश्चय इतिवाच्यम् तस्यश्रद्धा नियमादिसापेक्षज्ञाननाश्यत्वात् वन्धस्य च "नान्यः पन्था अयनाय विद्यते" इति श्रुत्या ज्ञानमात्रनाश्यत्वप्रतीतेः अतः श्रुतज्ञाननिवर्त्यत्वनिर्वाहानिर्वाहार्थमध्यस्तत्वं वर्णनीयं किञ्च ज्ञानैकनिवर्त्यस्य किं नाम सत्यत्वं न तावदज्ञानाजन्यत्वं "मायां तु प्रकृतिं विद्यादि" ति विरोधात् मायाविद्ययोरैक्यात् ना ऽपि स्वाधिष्ठाने स्वाभाव शून्यत्वं अस्थूलादिश्रुतिविरोधात् ना ऽपि ब्रह्मवद्बाधायोग्यत्वज्ञाननिवृत्तिश्रुत्तिविरोधात् ना ऽपि व्यवहारकाले वाधशून्यत्वं तर्हि व्यावहारिकमेव सत्वमागतमेवाध्यस्तत्वं तच्च श्रुत्यर्थयोग्यताज्ञानार्थं वर्णनीयमेव यागस्यापूर्वद्वारत्ववदिति ना ऽपिकारणाभावादिति तृतीयः कल्पः मिथ्याज्ञानस्य तत्कारणस्य भावात् तथोक्तं भगवत्पादैर्भाष्यकारैः मिथ्याज्ञाननिमित्त इति मिथ्या च तदज्ञानं च तदेव निमित्तमुपादानं यस्य स

तथेत्यर्थ इति चेन्न आपातरमणीयत्वात् तथाहि यदुक्तमात्मन्यध्यासस्यायुक्तत्वमस्माकमलङ्कार । इति तद्गुरुक्तं तत्र युक्त्युपन्यासस्य जलताडनवद्वै-यर्थ्यप्रसङ्गात् किं चाध्यासायुक्तत्वरूपालङ्कारे तद-युक्तत्वप्रयुक्ताद्वैतसिद्धान्तबाधो ऽपि तत्प्रयुक्ता-खण्डार्थत्वादिबाधो ऽपि दूषणजातस्तस्मिन्नध्या-सायुक्तत्वालङ्कारे चूडामणिर्भूयात् किं चाध्यासा-युक्तत्वं यच्छ्रीमद्भिर्भवद्भिरलङ्कारतया स्वीकृतः सो ऽध्यासो ऽयुक्तत्वान्नातिविवक्षया स्वीकृतः शास्त्र-विरुद्धो ऽपि अस्मत्कुलधर्मत्वादवश्याङ्गीकार इति वा आद्य इष्टापत्तिः अध्यासोनास्तीति अस्मदीय-पक्षप्रवेशात् तत्प्रयुक्तः सर्वो ऽपि सिद्धान्तो दत्त-तिलाञ्जलिः स्यात् द्वितीये महाराष्ट्राणां यथा-लशुनभक्षणं शास्त्रनिषिद्धमपि कुलधर्मतया स्वीकृतं तद्वच्छास्त्रविरुद्धो ऽप्यध्यासः कुलधर्मत्वा-द्भवतां श्रेयसे भूयात् यदप्युक्तं अज्ञः कर्त्ता मनुष्यो ऽहमिति प्रत्यक्षा ऽनुभवादभानाभावस्त-दप्यसम्यक् पूर्वमेव निरस्तत्वान्निरसिष्यमाण-त्वाच्च ननूक्तप्रत्यक्षस्य देहेन्द्रियसंयुक्तात्मविष-यकत्वात्प्रमेति यद्यपि श्रुतिप्रमाणेन प्रयुक्तं तथा

ऽपि अपौरुषेयतया निर्दोषेणोपक्रमादिलिङ्गाव-
धृततात्पर्येण तत्त्वमस्यादिवाक्येन कर्तृब्रह्मबोधना-
दुक्तप्रत्यक्षस्य भ्रमत्वमेवोक्तत्वात् इति चेन्न
आपातोक्तेः तथाहि अपौरुषेयतया निर्दोषेणो-
पक्रमादिलिङ्गावधृततात्पर्येण तत्त्वमस्यादिवाक्येन
प्रतिपाद्यमानस्य "तदैक्षत बहु स्यां प्रजायेये"
तीक्षणबहुभवनसङ्कल्पवतो ब्रह्मणः "सदेव सौम्ये-
दमग्र आसी"दितिसच्छब्दवाच्यस्य "एकमेवा-
द्वितीय"मित्यतिशयसाम्यशून्यस्य "ऐतदात्म्यमिदं
सर्व"मिति तादात्म्योपदेशो ऽस्मदिष्टतम एव
तस्मिन्वाक्ये ऽकर्तृब्रह्मोपदेशस्य केना ऽपि पदेना-
नुपदिष्टत्वात् प्रत्युतेक्षणबहुभवनसङ्कल्पपूर्वकं
"तत्तेजो ऽसृजते"ति तेजःप्रभृतिजगत्कर्तृत्वश्रवणा-
च्चोक्तप्रत्यक्षस्य भ्रमत्वासिद्धेस्तादवस्थ्यात् अस्य
विशेषार्थो वाक्यार्थनिर्णयावसरे वक्ष्यते न च
सच्छब्दवाच्यस्य सार्वज्ञ्यादियोगात् कर्तृत्वादिसत्वे
ऽपि लक्षणया निर्विशेषात्कर्तृब्रह्मबोधनपरत्व-
स्वीकारान्नोक्तार्थसिद्धिरिति वाच्यं लक्षणाऽसम्भ-
वात् तथाहि गङ्गायां घोष इत्यत्र यथा गङ्गापदस्य
शक्यः प्रवाहस्तल्लक्ष्यश्च तीरस्तीरपदवाच्यः तथा

सच्छब्दवाच्यः सर्वज्ञः पुरुषोत्तम ईक्षणादिकर्तृत्वा-
श्रयस्तेजः प्रभृतिजगदभिन्ननिमित्तोपादानकारण-
रूपस्तस्य यो लक्ष्यः स पदान्तरवाच्यो न वेति विवे-
चनीयं नाद्यः वाच्यत्वस्यापरिहार्यत्वात् वाच्यत्वे
च तव मते मिथ्यात्वापत्तिरप्यवश्यंभाविनी
वाच्यमात्रस्य मिथ्यात्वाभ्युपगमात् सच्छब्दलक्ष्यो
मिथ्या पदान्तरवाच्यत्वात् तव मते तीरादिवदिति
प्रयोगात् न द्वितीयः पदमात्रावाच्यस्यावस्तुत्वा-
पत्तेः सच्छब्दलक्ष्यं तुच्छं पदमात्रावाच्यत्वात् ख-
पुष्पादिवदित्यनुमानात् ननु विषमोऽयं दृष्टान्तः
जहल्लक्षणात्वात् प्रकृते तु जहत्स्वार्थलक्षणास्वीकारः
तत्रशक्यैकदेशस्य विशेषणमात्रस्यैव त्यागेन विशे-
ष्यभागस्यात्यागान्नोक्तदोषावकाश इति चेन्न शब्दै-
कदेशवाच्यत्वस्याकामेनाऽपि त्वया ऽङ्गीकरणीय-
तया मिथ्यात्वयोगस्य दुःपरिहरत्वात् तथा चात्र
प्रयोगः भागत्यागलक्षणालक्ष्यं मिथ्या शक्यैकदेश-
त्वात् तव मते घटत्वादिवदिति एतेन यदुक्तं कैश्चित्
मा ऽस्तु लक्षणा किं तु नित्यो घट इत्यत्र यथा
घटव्यक्तिनित्यत्वयोरभेदस्य प्रत्यक्षबाधितत्वेन
घटत्वनित्यत्वयोः सामानाधिकरण्यस्याविरोधेन

शक्यत्वमेव तथा प्रकृते ऽपि शक्यत्वमविरुद्धं लक्षणाऽङ्गीकारस्य साम्प्रदायिनामाग्रहमात्रत्वा-त्तस्माच्छक्य एव शास्त्रार्थ इति तदपि निरस्तं वाच्यैकदेशसामान्येन मिथ्यात्वस्यावश्यंभावात् त्यक्तद्वितीयभागवदित्यलं प्रासङ्गिकेन तस्मात् सिद्धं पूर्वोक्तप्रत्यक्षस्य प्रमात्वमिति यदप्युक्तं ज्ञाननिवर्त्यस्य क्वा ऽपि सत्त्वादर्शनात्सत्य-स्यात्मनो निवृत्त्यदर्शनादित्यादि तत्तुच्छं सेतुदर्श-नात्सत्यस्या ऽपि ब्रह्महत्यादिपापस्य निवृत्तिदर्श-नादित्युक्तमेव ननु सत्यमुक्तं तथा ऽपि तस्य श्रद्धा नियमादिसापेक्षज्ञाननाश्यत्वात् अन्यथा तत्रत्यानां म्लेच्छानामपि पापनाशापत्तेः प्रकृते तु ज्ञानमात्र-नाश्यत्वश्रवणादित्यादिना मया ऽपि प्रयुक्तत्वादिति चेन्न साधनचतुष्टयसम्पन्नाधिकारी शास्त्रोक्तलक्षण-गुरुमुखादौपनिषदमेव वाक्यार्थं श्रवणेन गृहीत्वा मननादिनैव ज्ञानेन त्वया ऽपि बन्धनिवृत्तिः स्वीकृता अन्यथा नियमविधिबाधापत्तेः तथा च निवर्त्तकज्ञानस्याधिकार्यादिसापेक्षत्वं तवा ऽपि साम्यं अतो नोक्तदोषावकाशः अन्यथा म्लेच्छा-नामपि श्रुतभाषाप्रबन्धादिना ऽपि वाक्यार्थज्ञान-

सम्भवेन बन्धनाशापत्तेः न च नियमादीनामधिका-
रित्वसम्पादनेनैवोपक्षीणत्वेन कर्मवन्न ज्ञाने तद-
पेक्षेति वाच्यं प्रकृते ऽपि नियमादीनां ह्यधिकारि-
त्वसम्पादनपरत्वेन सेतुदर्शने तदनुपयोगान्नोक्त-
दोषावकाशस्तस्माच्छ्रुतिबलात्सत्यस्यैव बन्धस्य-
निवृत्तिसम्भवेनाध्यस्तत्ववर्णनस्य दुराग्रहमात्र-
त्वाद्वैयर्थ्यमेवेति सिद्धं यदप्युक्तं ज्ञानैकनिवर्त्यस्य
न तावदज्ञानाजन्यत्वं सत्यत्वं "मायां तु प्रकृति"
मिति श्रुतिविरोधादिति तदपि तुच्छतरं विश्वस्य
जगतः "तत्तेजो ऽसृजत ॥ तस्माद्वा एतस्मादात्मन
आकाशः सम्भूतः ॥ नारायणाज्जायते प्राणः ॥
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते इति श्रुति-
स्मृतिप्रमाणेन ब्रह्मजन्यतया ऽज्ञानजन्यत्वाभावात्
सत्यत्वमेव ना ऽपि मायां त्विति श्रुतिविरोधः तस्याः
प्रकृत्यादिपदवाच्यश्रीपुरुषोत्तमाचित्प्रकृतिप्रतिपा-
दनेनैव नैराकाङ्क्ष्यात् ज्ञानपरत्वमित्यर्थः माया-
शब्दस्याज्ञाने शक्त्यभावात् यदप्युक्तं स्वाधिष्ठाने
स्वाभावशून्यत्वमिति सत्यत्वं वक्तुमशक्यं अस्थू-
लादिश्रुतिविरोधादिति तदपि तुच्छतमं "गौर-
नाद्यन्तवती"ति श्रुतिबलाचद्भतपरतन्त्रससाया

अनाद्यनन्तत्वाभ्युपगमस्यादोषत्वात् नाप्यस्थूलादिश्रुतिविरोधः सम्भाव्यः तस्याः सर्वविलक्षणब्रह्मप्रतिपादनपरतया प्रपञ्चनिषेधपरत्वाभावात् यदप्युक्तं व्यवहारकाले बाधशून्यत्वं सत्यत्वमपि-वक्तुमशक्यमित्यादि तदपि पापिष्ठं अनाद्यनन्तत्व-विधायकश्रुत्यैव एतस्य विकल्पस्य निरासादिति-भावः यच्चोक्तं कारणाभावाद्वेति न मिथ्याज्ञानस्य तत्कारणस्य भावादिति तृतीयविकल्प इति तदपि महत्पापिष्ठं अज्ञानस्य लक्षणप्रमाणाश्रयविषयक-प्रयोजकनिवर्त्तकाद्यसिद्धेः तथाहि तत्र किं तावद-ज्ञानलक्षणं अनादिभावत्वे * सति ज्ञाननिवर्त्यत्व-मिति चेन्न सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञाने-ष्वव्याप्तिस्तेषामनादित्वायोगात् आरोपितसर्पाद्य-भावोपादानाज्ञाने भावत्वाभावादव्याप्तिश्च न च तस्य भावोपादानकत्वमिति वाच्यं असत्यस्य सत्योपादानकत्वापातात् तस्याज्ञानोपादानकत्वा-भावाङ्गीकारे ज्ञाननिवर्त्यत्वाभावप्रसङ्गात् किञ्च शुद्धं ब्रह्म वृत्तिव्याप्यमपि नेति मते तदज्ञाने चरमसाक्षात्कारानन्तरभाविजीवन्मुक्त्यनुवृत्ते ॥

---

* भावत्व अभावविलक्षणत्वमात्रं विवक्षितम्

ऽज्ञाने रक्तः स्फटिक इत्यादिसोपाधिकभ्रमोपादा-
नाज्ञाने चाव्याप्तिश्च तेषां ज्ञाननिवर्त्यत्वाभावात्
सोपाधिकाज्ञानस्योपाधिनिवृत्तिमात्रयत्वनियमात्।
जीवन्मुक्त्यनुवृत्ताज्ञानस्य प्रारब्धभोगनाश्यत्वनिय-
मात् चैतन्याविद्यासम्बन्धे ऽतिव्याप्तिश्च कल्पितत्वेन
दोषजन्यधीमात्रशरीरस्याज्ञानस्यानादित्वायोगात्
ज्ञाननिवर्त्यस्याभावविलक्षणस्य रूप्यवदनादि-
त्वायोगाच्चासम्भवश्च किं चानादेरभावविलक्षणा-
स्यात्मवदनिवर्त्यत्वप्रसङ्गात् अज्ञानं ज्ञाननिवर्त्यं
अनादिभावरूपत्वात् आत्मवदित्यनुमानात् नचा-
ज्ञानत्वाधिकरणत्वमुपाधिपक्षेतरत्वात् किंच त्वन्मते
ज्ञानस्य भावाभावविलक्षणत्वेन भावत्वायोगा-
दप्यसम्भवो वोध्यः ना ऽपि भ्रमोपादानत्वज्ञाना-
भावे अव्याप्तेः अभावस्य निरुपादानकत्वात्
सोपादनकत्वे ऽपि भावरूपाज्ञानोपादानकत्वा-
योगात् अन्यथा स्वरूपहानेः मायावच्छिन्नं ब्रह्मो-
पादानमिति पक्षे ऽसम्भवः रज्वाः सूत्रद्वयमिव
मायाब्रह्मणी जगदुपादाने इति पक्षे ऽतिव्याप्तिश्च
तयोर्भ्रमोपादानत्वात् किं चार्थाज्ञानरूपस्य भ्रमस्य
भावविलक्षणत्वेन निरुपादानत्वादसम्भवः ननु

भावविलक्षणाज्ञानोपादानकस्य भावत्वाङ्गीकारा-न्नोक्तदोषावकाश इति चेन्न उपादानोपादेययोर-भेदेन भावत्वोक्तेरयुक्तत्वात् सोपादानत्वे च भावत्वं तन्त्रं नत्वभावविलक्षणत्वं गौरवात् ना ऽपि मिथ्या-ज्ञानसंस्कारत्वं तत्त्वं संस्कारस्या ऽनुभवपूर्वकत्व-नियमात् ना ऽपि मिथ्यात्वे सति साक्षाज्ज्ञाननिव-र्त्यत्वं तत्त्वं जीवन्मुक्त्यनुवृत्ताज्ञानादावव्यक्त्या-देरत्रापि तुल्यत्वात् अनाद्युपादानत्वे सति मिथ्यात्वं तत्त्वमित्यपि तुच्छं द्वितीयलक्षणोक्तदोषस्याभावा-दावव्याप्त्यादेरत्राप्यविशेषात् मिथ्याभूतस्य स-द्विलक्षणस्य खपुष्पायमाणस्य तुच्छत्वात् उपादा-नत्वानादित्वायोगाच्चासम्भवश्च सद्विलक्षणस्य-भावत्वकल्पनायाः मनोरथमात्रत्वात् अन्यथा खपुष्पादेरपि सद्विलक्षणत्वसाम्येन भावत्वं कल्प-नीयं देवानां प्रियैः कथ "मसतः सज्जायते" ति श्रुतेः सद्विलक्षणस्योपादानत्वभावकानां मुखपिधान-सिद्धिरित्यलं विस्तरेण तस्माल्लक्षणाभावाद-ज्ञानासिद्धिः ॥

इति पराभिमताज्ञानलक्षण

गिरिनिपातः ॥ ६ ॥

प्रमाणाभावादप्यज्ञानासिद्धिः तथाहि भवदभि-
प्रेताज्ञाने किं प्रमाणमिति वक्तव्यं अहमज्ञो
मामन्यं च न जानामि त्वदुक्तमर्थं न जानामीति
प्रत्यक्षमेवात्र प्रमाणमिति चेन्न अन्यविषयकत्वेना
भासमात्रत्वात् तथाहि को वाऽत्राहमर्थः शुद्धं
ज्ञानमात्रं वा ज्ञानावच्छिन्नं ब्रह्म वा जीवो वेति
नाऽद्यः शुद्धत्वहानेः शुद्धमज्ञमिति प्रतीत्यापत्तेः
अपसिद्धान्ताच्च न द्वितीयः तदवच्छेदकाज्ञानस्या-
द्याप्यसिद्धत्वात् अन्योऽन्याश्रयाच्च अज्ञानप्रयुक्तो
ऽहमर्थस्तत्प्रयुक्तमज्ञानमिति न तृतीयः अध्यस्त-
त्वेन जीवस्याज्ञानोत्तरभावित्वात् अस्मत्पक्षे
प्रत्यगात्मपरत्वेन त्वत्पक्षे ऽहङ्कारपरत्वेनाहमज्ञ
इत्यहङ्कारस्याज्ञत्वापत्तेः जडस्य तत्कार्यत्वेनाज्ञान-
रूपत्वात्तद्वैशिष्ट्यासिद्धेः किञ्चाहंशब्दस्याज्ञानवाच-
कत्वाभावेनाज्ञाने प्रामाण्यासिद्धेः अन्यथा ब्रह्मा-
ज्ञमात्मा ज्ञो ज्ञानमज्ञमित्यादि प्रत्यक्षं स्यान्नतु तद-
स्ति उपपद्यते वा नन्वहमित्यध्यासे प्रतिविम्वतया
भासमानो ऽहमर्थ इति चेन्न अध्यासोत्तरभावेन तद-
सम्भवस्यान्योऽन्याश्रयस्य चोक्तदोषस्य साम्यात्
प्रतिविम्ववादस्य पूर्वमेव निरस्तत्वाच्च तस्माद-

ज्ञानशब्दस्य ज्ञानाभावपरत्वेन उक्तप्रत्यक्षस्येतर-
विषयतया विवक्षितविषये ऽप्रामाण्यात्तदसिद्धेः
किञ्च त्वन्मते ऽप्यहमर्थस्य भावरूपाज्ञानाश्रयत्वे-
नाहमज्ञो न जानामीत्यादिप्रत्यक्षस्य प्रामाण्यार्थं
ज्ञानाभावविषयत्वस्यावश्यंभावात् साक्षिवेद्यसुख-
दुःखाज्ञानादौ प्रातिभासिके च भावरूपाज्ञानाभावेन
सुखं न जानामि शुक्तिरूप्यं न जानामीत्यादे-
र्ज्ञानाभावविषयत्वेन वक्तव्ये सति त्वदुक्तार्थं न
जानामीत्यादेरपि तथात्वसाम्यात् त्वन्मते परोक्ष-
वृत्तेर्विषयावरकाज्ञाननिवर्त्तकत्वेन परोक्षतो ऽज्ञाते
ऽपि न जानामीत्यनुभवापाताच्च किञ्च त्वन्मते जडा-
वरकाज्ञानाभावेन त्वदुक्तमर्थं न जानामीत्यादेरपि
प्रामाण्यार्थं ज्ञानाभावविषयत्वाच्च न च जडे
आवरणरूपातिशयाभावे ऽपि विक्षेपरूपातिशयस्य
सत्वादज्ञानविषयता ऽस्तीति न जानामीत्यनुभव-
इति वाच्यम् अपरोक्षतो घटत्वेनज्ञाते ऽपि घटे
ऽयम्पटइति वाक्याभासाद्विक्षेपसद्भावे ऽपि न जाना-
मीत्यनुभवापातात् न च जडं नजानामीत्यनुभवस्य
जडावच्छिन्नचैतन्यावरकाज्ञानं विषय इति वाच्यं
वृत्तिश्चिदुपरागार्थेति मते जडावच्छिन्नचैतन्यावर-

काज्ञानस्याप्यभावात् भावरूपाज्ञानविषयत्वेनाभि-
मतस्याहमज्ञ इति ज्ञानस्य ज्ञानाभावविषयत्वे-
नाभिमतान्मयि ज्ञानं नास्तीति ज्ञानात् अघटं-
भूतलमिति ज्ञानस्य भूतले घटो नास्तीति ज्ञानादि-
विशेषणविशेष्यभावव्यत्यासं विना विषयभेदा-
प्रतीतेश्चेति उक्तहेतुभ्य उक्तप्रत्यक्षस्येतरविषयत्वे
सिद्धे तवाभिप्रेताज्ञाने प्रामाण्यासिद्धत्वादिति
संक्षेपः ननु प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त-
स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं।
अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमो-
त्पन्नप्रदीपप्रभावदिति विवरणोक्तानुमानस्यैवात्र
प्रामाण्यान्नाप्रामाण्याशङ्कावकाश इति चेन्न आभा-
समात्रत्वात् सुखादिप्रमायाः साक्षिरूपत्वेनाज्ञान-
निवर्त्तकत्वाभावाद्बाधः किञ्च सामान्यवृत्तेः पक्षत्व-
विवक्षायां परोक्षवृत्तौ बाधः तस्याः स्वविषया-
ज्ञाननिबर्तकत्वाभावात् निवर्तकत्वे च स्वरूपहानेः
अपरोक्षत्वप्रसङ्गात् अपरोक्षवृत्तेः पक्षताङ्गीकारे च
वृत्तौ बाधः तन्निवर्त्याज्ञानसद्भावे भ्रमोपादानत्व-
लक्षणस्य तत्राव्याप्तिः स्यात् नहि सदर्थरूपाधिष्ठा-
नाज्ञाने क्वचिद्भ्रमः तदन्यस्य पक्षत्वे धारावाहिकद्वि-

तीयादिप्रमायां बाधो ऽसिद्धश्च स्वानिवर्त्यप्रथमाद्यवहितायास्तस्याः द्वितीयादिप्रमायास्तमःप्रतीवाज्ञानं प्रति निवर्त्तकत्वात् सूक्ष्मतत्तत्त्वग्गानामप्रत्यक्षत्वेन प्रकाशितप्रकाशकत्वाच्च तदन्यस्य पक्षत्वे ऽपि अनात्मापरोक्षवृत्तौ बाधः त्वन्मते जडावरकाज्ञानाभावात् ननु घटोऽयमित्यादिवृत्तिरपि तदवच्छिन्नचैतन्यविषया अज्ञानमपि तथेति न बाध इति चेन्न एकाज्ञानवादिमते तदभावात् आकाशादिवत् घटाद्यवच्छिन्नस्या ऽपि चेतनस्य चाक्षुषत्वायोगाच्च अयं घटे इतिशब्देन घटमात्रविषयकाज्ञानेनायं घट इत्यपरोक्षवृत्तेर्विषयभेदाप्रतीतेश्च आत्मविषयकापरोक्षवृत्तेः पक्षत्वविवक्षायामनात्मज्ञाने व्यभिचारः आत्मविषयत्वेन हेतुविशेषणो दृष्टान्तस्य वैकल्यादितिपक्षनिरासः अथ साध्यो ऽपि दुर्निरूपः विशेषणायोगात् तत्र स्वप्रागभावव्यतिरिक्तेति प्रथमविशेषणं व्यर्थं तव पक्षे ज्ञानस्याज्ञानमात्रनिवर्त्तकत्वात् प्रागभावस्याज्ञानत्वाविवक्षितत्वात् अन्यथा परमतप्रवेशात् स्वविषयावरणेति द्वितीयमप्ययुक्तं जडे तावदज्ञानानङ्गीकृतत्वात् निर्विशेषचितश्चाज्ञानादिसाक्षितया प्रकाशमानत्वे

नाज्ञानस्यावरणत्वासम्भवात् स्वनिवर्त्त्येति तृतीय-
मप्ययुक्तं वृत्तिश्चिदुपरागार्थेतिमते घटाकारवृत्त्या
तत्प्रतिविम्बितचैतन्येन ऽवा भिव्यक्तं घटाधिष्ठान-
चैतन्यं घटप्रकाशकमितिमते च घटप्रकाशक-
ज्ञानस्य घटाज्ञानानिवर्त्तकत्वात् चरमसाक्षात्कार-
प्रतिवन्धकादृष्टस्य तदनिवर्त्यत्वेन मिथ्यात्वासिद्ध्या
स्वनिवर्त्त्यपदेन तद्व्याघातात् स्वदेशे गतेति
चतुर्थमप्ययुक्तं अज्ञानस्य चिन्मात्राश्रितत्वात् वृत्ते-
स्तत्प्रतिविम्बितचैतन्यस्य वा प्रमाणज्ञानस्य तद-
नाश्रितत्वात् त्वन्मते विषयस्याज्ञानस्यैवावरणत्वात्
अज्ञानत्वस्य तद्विषयकज्ञानाभावरूपत्वेनाद्यविशे-
षणेनैव व्यावृत्तिसिद्धेरविद्याविषयत्वरूपत्वे चावि-
द्यासिद्ध्या चतुर्थस्य वैयर्थ्यं किञ्च स्वविषयावरण-
पूर्वकमित्येतावतैवालं अन्ये सिद्ध्यर्थां न हि प्रमा-
प्रागभावः प्रमोत्पत्ति प्रतिवन्धकं वा ऽज्ञानातिरिक्त-
मन्यत् किञ्चिद्वा आवरणं तथात्वे च तेनैव स्वप्रकाश-
ब्रह्मावरणासम्भवेनान्यस्य हेतोरप्रयोजकत्वादिति
संक्षेपः अथ न हेतुत्वं असिद्धेः इन्द्रियादावति-
व्याप्तेश्च अत एव नापि साक्षात्परम्परया व्यवहार-
हेतुत्वमात्रं ना ऽपि तमोनिवर्त्तकत्वं अज्ञानान्ध-

कारानुगततमस्त्वाभावात् साध्यावैशिष्ट्याच्च अत एव नावरणानिवर्त्तकत्वं नाप्यज्ञानान्धकारान्यतर-निवर्त्तकत्वं साध्यावैशिष्ट्यादेव ना ऽपि प्रकाशक-शब्दवाच्यत्वमात्रं शब्दसाम्येनैव साध्यसाधने पृथिव्यादेरपि शृङ्गीत्वसाधनापत्तेः उक्तं च विवरणे ज्ञानप्रकाश्यत्वादज्ञानविरोधित्वादन्यदेवालोकप्रका-श्यत्वं तमोविरोधित्वं नामेति हेतोरसिद्धिश्च प्रमा-णस्य ब्रह्मज्ञानस्य चिदन्याप्रकाशकत्वात् स्वप्रकाश-चितश्चाध्यासाधिष्ठानत्वादिना सदा प्रकाशमानत्वे-नाप्रकाशितत्वाभावात् किञ्चास्यानुमितेरप्रकाशित-प्रकाशकत्वाभावेन प्रकाशितप्रकाशकत्वं वा प्रकाश-कत्वं वा स्यात् तथात्वे चोभयथा ऽपि वैयर्थ्यमेव अथ दृष्टान्ते ऽपि द्वितीयादिप्रभाया अन्धकारे ऽनुत्पन्नत्वेन प्रथमपदस्य वैयर्थ्यात् दृष्टिसृष्टिमते तूभयोः पदयोरपि वैकल्याच्च किञ्च घटादिविषय-आलोकप्रकाशस्तमोविरोधीति तन्निवर्त्तको ऽस्तु नाज्ञानविरोधी घटाद्यधिष्ठानचेतनस्याज्ञानाविरो-धित्वात् वृत्तेस्त्वनधिष्ठानत्वेन तज्ज्ञानत्वाभावात् त्वन्मते ज्ञानज्ञेययोराध्यासिकसम्बन्धाङ्गीकारात् तस्योपपत्तिः पूर्वमेव निरस्ता किञ्चानादित्वे सति

भावत्वं न निवर्त्यनिष्ठं अनादिभावमात्रवृत्तित्वात् आत्मत्ववत्। अभावविलक्षणत्वं न निवर्त्यनिष्ठम्। अनाद्यभावविलक्षणमात्रवृत्तित्वात् आत्मत्ववत् अनादित्वं नावरणनिष्ठम् अनादिमात्रवृत्तित्वात् प्रागभावत्ववदित्यादिना सत्प्रतिपक्षत्वाच्चाभासत्वं बोध्यं इत्यनुमानासम्भवः ना ऽपि "नासदासीन्नो सदासीत्तम आसी"दित्यादिश्रुतेरत्र प्रामाण्यमाशासनीयं अन्यपरत्वात् सदसच्छब्दौ पञ्चभूतपरौ "यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सद्वायुरन्तरिक्षं चास" दिति श्रुत्यन्तरात् तथैव नमःशब्दः प्रकृतिपरः "अक्षरं तमसि लीयते" इतिश्रुत्यन्तरात् प्रसिद्ध-परत्वे तु नासदासीदित्यसत्कप्रतिषेधत्वापातात् तदानीमित्यस्य वैयर्थ्यप्रसङ्गाच्च नो सदासीदित्यनेनैव सिद्धत्वेनासीद्रज इत्यादेर्वैयर्थ्याच्च न "चाविद्यायामन्तरे वर्त्तमाना इतिश्रुतेरत्र प्रमाणत्वमिति वाच्यं अविद्याशब्दस्य कर्मपरत्वात् "अविद्यया मृत्युं तीर्त्वा विद्यया ऽमृतमश्नुते इति श्रुतौ अविद्या कर्मसंज्ञा ऽन्या तृतीया शक्तिरिष्यते यया क्षेत्रज्ञ-शक्तिः सा वेष्टिते"त्यादिस्मृतौ च कर्मण्यविद्या-शब्दप्रयोगदर्शनादिति संक्षेपः ननु भ्रमस्य निरु-

पादानत्वासम्भवात्तत्सिद्धये ऽवश्यं तदुपादानमज्ञानं कल्प्यमित्यर्थापत्तेस्तत्र मानत्वमिति चेन्न तस्याऽद्वितीयाज्ञानलक्षणनिरासेनैव निरस्तत्वात् किंच शुक्तिरूप्यं सोपादानं चेत्सकर्त्तृकं भवेन्न चेशो जीवो वा तस्य कर्त्तेति युज्यते नाऽपि निर्विकारस्य ब्रह्मणः श्रौतजगदुपादानार्थं तत्कल्पनमिति वाच्यं सत्यस्य परमेश्वराधिष्ठितस्य त्रिगुणात्मकमायाद्रव्यस्य प्रकृत्यपरनामकस्यैव तदुपादानस्य श्रुत्या सिद्धत्वात् अज्ञानस्याप्यनादित्वेन निरवयवतया ब्रह्मवदेव विकारायोगाच्च किंच ब्रह्मण उपादानत्वे ऽपि नाज्ञानं कल्प्यं त्वद्रीत्या ब्रह्मण एव तात्त्विकाविकाराविरुद्धेनातात्त्विकाविकारेण शुक्त्यादिवद्विवर्त्ताधिष्ठानरूपोपादानत्वोपपत्तेः अन्यथा ज्ञानादेराश्रयसापेक्षस्य द्वितीयं तत्त्वं ततो द्वितीयात् ब्रह्मणो ऽन्यदधिकरणं कल्प्यं नच परिणामित्वेनाज्ञानकल्पनं असत्यस्य सत्यरूपान्तरापत्तिरूपपरिणामासम्भवात् नच कार्यापेक्षितस्वसत्तासमानसत्ताकोपादानत्वेन तत्कल्पनं रूप्यादेर्विवर्त्ताधिष्ठानरूपोपादानेन निवृत्तोपादानाकाङ्क्षस्या ऽपि घटादिदृष्टान्तेनोक्तोपादाने कार्यस्य स्वसमानसत्ताकोपा-

दानापेक्षत्वेनासमानसत्ताकस्य ब्रह्मणो वियदादे-
रुपादानत्वानपातात् रूप्ये स्वसमानसत्ताकनिमि-
त्तस्या ऽपि कल्पनापाताच्च न च जीवस्यानवच्छिन्न-
ब्रह्मानन्दाप्रकाशाय तत्कल्पनं भेदेनैव तदुपपत्तेः
अनवच्छिन्नानन्दस्या ऽपि प्रकाशमानप्रत्यङ्मा-
त्रत्वेनाप्रकाशानुपपत्तेश्च तस्मादुक्तार्थापत्तिरपि
मनोरथमात्रैव अपि च त्वत्पक्षे ऽज्ञानस्याप्रामाणि-
कत्वात्कथमत्र प्रमाणोक्तिः स्वोक्तिविरोधात् तथा
चोक्तं सुरेश्वराचार्येण "अविद्याया अविद्यात्वमिद-
मेव तु लक्षणं मानापातासहिष्णुत्वमसाधारण-
मिष्यत" इत्यादि नच व्यावहारिकत्वात्तत्र प्रमा-
णोक्तिरिति वाच्यं प्रातिभासिकोपादाने प्राति-
भासिके ज्ञाने तदुक्त्ययुक्तेः न व्यावहारिकं प्राति-
भासिकोपादानं ना ऽपि प्रातिभासिके किंचिन्मा-
नमस्ति नच साक्षिवेद्यत्वे ज्ञाने प्रमाणैरसद्व्या-
वृत्तिमात्रं बोध्यते इति वाच्यं नित्यनिर्दोषसाक्षि-
वेद्यत्वाङ्गीकारे सुतरां प्रामाणिकत्वाभातात् "तम
आसी" दित्यादौ सत्यस्यैव बोधनाच्च अनुमाने
तदप्रतीतेश्च ज्ञाननिवर्त्यत्वेन प्रकाशनिवर्त्यत्वाङ्गी-
कारवदनित्यत्वस्यैव बोधनात् एतेन प्रमाण-

सामान्यनिरसनेन प्रमाणान्तरदुराशाऽपि निरस्ता तस्मात्त्वदभिप्रेताज्ञाने किमपि प्रमाणं नास्तीति सिद्धम् ॥

इति पराभिमताज्ञानविषयकप्रमाणो-
पपत्तिगिरिनिपातः ॥ १० ॥

अथ तन्मतेऽज्ञानस्याश्रयोऽपि दुर्निरूपः तथाहि कस्तावत्तस्याश्रयः शुद्धं चिन्मात्रं वा सर्वज्ञो वा जीवो वेति अत्राहुः केचित् * चिन्मात्रमेवाज्ञानाश्रयः तदन्यस्याज्ञानकल्पितत्वे तदाश्रयत्वायोगात् तदुक्तं विवरणे "आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नाऽपि गोचर" इति दर्पणस्य मुखमात्रसम्बन्धेऽपि प्रतिमुखे मालिन्यवत् प्रतिविम्बे जीवे संसारः नतु विम्बे ब्रह्मणि उपाधेः प्रतिविम्बपक्षपातित्वात् इति अत्रब्रूमः शुद्धस्याज्ञानाश्रयत्वे शुद्धत्वभङ्गात् अज्ञानाश्रयत्वस्यैवाशुद्धत्वात् अज्ञत्वमेव स्यात् किञ्चाज्ञानाश्रयत्वस्याज्ञातृत्वनियमात् एकत्र ज्ञानभावरूपाज्ञानयोस्तमः प्रकाशयोरिव विरुद्धस्वभावत्वान्नाश्रयाश्रयित्वसम्भवः नहि

* अद्वैतसिद्धिकृतः ।

प्रचण्डमार्त्तण्डमण्डलस्यान्धकाराश्रयत्वं केनाप्यनुन्मत्तेन वक्तुं शक्यमितिभावः ननु सूर्यमण्डले ऽन्धकाराभावे ऽपि उलूकानुभववत्तत्र कल्पिताज्ञानाश्रयत्वस्य घटनान्नोक्तदोषयोग इति चेन्न को वा ऽत्राज्ञानकल्पकोलूकस्थानीय इति वक्तव्यं न तावज्जीवः तस्याज्ञानकल्पितत्वेनोत्तरभावित्वस्य त्वयैवोक्तत्वात् पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवतीति एतदुक्तं भवति वादिनां मध्ये न तावत् तार्किकयोगमीमांसकसांख्यानां कस्यचिदप्यज्ञानकल्पकत्वं वक्तुं शक्यं तैरज्ञानवादानङ्गीकारात् नाप्यौपनिषदानामस्माकं शास्त्रैकवेद्ये ब्रह्मण्यज्ञानमासीदस्ति भविष्यति वेति कालत्रये ऽप्यज्ञानकल्पनागन्धाङ्गीकारः परिशेषात् ये ब्रह्मण्यज्ञानं कल्पयन्ति त एवोलूकस्थानीया इति सिद्धमज्ञानाश्रयासम्भवस्य तादवस्थ्यं विशेषेणाग्रे निरसिष्यमाणत्वात् किञ्च शुद्धस्याज्ञानाविरोधित्वे ज्ञानत्वमेव न स्यात् न हि ज्ञानानिवर्त्यमज्ञानं क्वा ऽपि दृष्टं न च वृत्तिज्ञानं तन्निवर्त्तकमिति वाच्यं विवरणे ऽन्तःकरणपरिणामे ज्ञानत्वोपचार इति वाक्येनौपचारिकविरोधिनो मुख्यज्ञानत्वायोगात् अज्ञाना-

विरोधित्वे चैतन्यस्य घटादिवज्ज्ञानत्वायोगाच्च ज्ञानाज्ञाने हि ज्ञातुरर्थप्रकाशाप्रकाशौ न च तद-विरोधित्वे ऽपि व्यवहारादिहेतुज्ञानं अज्ञाननिवर्त्त-कस्यैव तद्धेतुत्वानुभवात् न च विवरणे करण-व्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानमित्युक्तत्वेनाज्ञानं ज्ञान-करणविरोध्येव नतु ज्ञप्तिविरोधीतिवाच्यं न जाना-मीति ज्ञप्तिविरोधित्वेनानुभूयमानस्य ज्ञानान्तरत्वा-पातात् साक्षिवेद्यं सुखादावज्ञानत्वादर्शनाच्च नच स्वतस्तृणतूलादिभासकस्य सौरालोकस्य सूर्य-कान्ताव च्छेदेन स्वभास्यदाहकत्ववत् स्वतो विद्या तत्कार्यभासकस्या ऽपि चैतन्यस्य वृत्त्यवच्छेदेन तद्दाहकत्वमिति वाच्यं सौरालोकसम्बन्धात्सूर्य-कान्तादावुत्पन्नस्याग्नेरेव दाहकत्वेन दृष्टान्तासिद्धेः सौरालोकसम्बन्धं विना मणेरदाहकत्वाच्च तथाहि प्रकृते ऽपि वृत्त्यवच्छिन्नचैतन्यस्यैवाज्ञानविरोधित्वं न वृत्तिमात्रस्यान्वयव्यतिरेकमानात् स्वभावतो ज्ञानाविरोधिनो ज्ञानस्वभावानुपपत्तेश्च अहमज्ञ इति धर्मिग्राहकेण साक्षिणा ऽहमर्थनिष्ठतयैवाज्ञान-सिद्धेश्च नच स्थौल्याश्रयदेहैक्याध्यासादहं स्थूल इतिवदज्ञानाश्रयचिदैक्याध्यासात् दग्धृत्वायसोरे-

काग्निसम्बन्धादयो दहतीतिवदज्ञानाहङ्कारयोरेक-
चिदध्यासाद्वा अहमज्ञ इति धीर्भ्रान्तिरेवेति वाच्यं
अद्या ऽपि चितो ज्ञानाश्रयत्वासिद्ध्या ऽन्योन्याश्रया-
पत्तेः दोषाजन्यस्याहमज्ञ इति साक्षिज्ञानस्य
भ्रान्तित्वायोगाच्च अज्ञानकल्पितस्याहमर्थस्य जीव-
स्यैवाज्ञानाश्रयत्वेन तथा प्रतीत्युपपत्त्या त्वदीय-
कुसृष्टौ मानाभावाच्च न च "मायां तु प्रकृतिं विद्या-
न्मायिनं"त्विति श्रुतिस्तत्र मानमितिवाच्यं अज्ञत्व-
महेश्वरत्वयोर्विरुद्धत्वात् मायाशब्दस्य त्रिगुण-
द्रव्यपरत्वस्योक्तत्वाच्च किञ्च शुक्त्याद्यज्ञानवत् ज्ञातु-
र्थाप्रकाशरूपमिदमप्यज्ञानं स्वकार्येण भ्रान्ति-
संसरणादिना स्वनिवर्त्तकेन तत्त्वज्ञानेन स्वसमान-
योगक्षेमेण ज्ञानप्रागभावेन सामानाधिकरण्याय
ज्ञात्रात्मनिष्ठं नतु ज्ञानमात्राश्रितं उक्तं हि विवरणे-
ऽपि जडस्य चाज्ञानाश्रयत्वे भ्रान्तिसम्यग्ज्ञानयो-
रपि तदाश्रयत्वप्रसङ्गादिति चिन्मात्रे ऽपि ज्ञातृत्वा-
ध्यासो ऽस्तीति चेन्न तस्य ज्ञातृत्वस्याज्ञानाधीनत्वे-
नान्योन्याश्रयात् चैतन्येषु बुद्धिस्थकर्त्तृत्वाध्यासेन
तन्निष्ठभोक्तृत्वाध्यासवत् बुद्धिताच्चित्स्थज्ञातृत्वा-
ध्यासेन तत्स्थज्ञातृत्वाध्यासापत्त्या बुद्धेरेव ज्ञाना-

अयत्वापत्तेश्च देहादावपि ज्ञातृत्वाध्यासद्भावाच्च बुद्ध्यवच्छिन्न एव तद्धर्माणां ज्ञातृकर्तृत्वाध्यासेन चिन्मात्रे तदभावाच्च तेषां चिन्मात्र एवाध्यासे तु ज्ञातृत्वादिमत्येवाङ्गीकारेण जीवाज्ञानवादाभ्युपगतं स्यात् नच विशेष्यनिष्ठमेवाज्ञानं विशिष्टे जीवे संसारहेतुः विशिष्टस्य तत्त्वज्ञानविरुद्धं चेति वाच्यं विशिष्टे ब्रह्मण्यपि संसारापत्तेः देहं प्रति विशेष्या-हङ्कारस्थकर्तृकत्वेन देहविशिष्टे भोक्तृत्वापाताच्च विशेष्यस्थमुक्ते विशिष्टसंसारापाताच्च न चोपाधेः प्रतिविम्बपक्षपातित्वस्वाभाव्याज्जीव एव संसार इति वाच्यं श्रुत्यादिसाम्ये ऽर्द्धजरतीययोगेन चिन्मात्र एवाज्ञानस्येव संसारस्याप्यङ्गीकार्यत्वात् प्रति-विम्बस्य छायादिवद्वस्त्वन्तरत्वाच्च अचाक्षुषस्य चैतन्यस्य गन्धरसादिवत् प्रतिविम्वानर्हत्वाच्च प्रति-विम्बत्वे जीवस्य सादित्वाद्यापत्तेश्च सूर्यस्य जल इव मरीचिकाजलेष्वप्रतिफलनेन चिदसमसत्ता-कस्याज्ञानस्य चितं प्रत्युपाधित्वायोगाच्च अस्वच्छ-द्रव्यस्याज्ञानस्य प्रतिविम्बनोपाधित्वायोगाच्च अवि-द्यायाश्चिन्मात्राभिमुख्याभावाच्च उपाधेरज्ञानस्या-काशाद्यात्मना परिणामे प्रतिविम्बापायापाताच्च

किं चोपाधेः प्रतिविम्बपक्षपातित्वमपि दुर्वचम् विकल्पासहत्वात् तथाहि तत्त्वं नाम किम् तत्र स्वधर्मप्रतिभासकत्वं वा स्वकार्यप्रतिभासकत्वं वा स्वकार्यनिष्ठधर्मप्रतिभासकत्वं वा प्रतिविम्बं प्रति स्वविषयावच्छेदकत्वं वेति विवेचनीयम् नाद्यः मालिन्यादेर्दर्पणनिष्ठत्ववत् सुषुप्त्याद्यनुवृत्तस्याविद्यारूपस्य वा विद्यावच्छिन्नत्वरूपस्य वा तत्प्रतिविम्बितत्वरूपस्य वा सुषुप्त्याद्यननुवृत्तस्य कर्त्तृत्वप्रमातृत्वादिरूपस्य वा संसारस्याज्ञाननिष्ठत्वाभावात् ज्ञानक्रियासंस्काराणां च त्वन्मते ज्ञानस्थत्वे ऽपि नित्यातीन्द्रियाणां तेषामात्मनि कदाऽप्यप्रतीतेः "अविद्याऽस्तमयो मोक्षः सा संसार उदाहृत" इति त्वन्मते ऽपि ह्यविद्यावन्धिकावन्धो वा न तु वद्धा येन स्वनिष्ठवन्धरूपधर्मसङ्क्रामकत्वं स्यात् न द्वितीयः विच्छेदादेरुपाधिकार्यस्य विम्बे महाकाशे च दर्शनात् मुखस्थविम्बनादेः ब्रह्मस्थसार्वज्ञ्यादेश्चानौपाधिकत्वापाताच्च प्रतिमुखगतस्थौल्यादेरुपाधिकार्यत्वे ऽपीह जीवगतस्य संसारस्यानादित्वेनाकार्यत्वात् न तृतीयचतुर्थौ दर्पणघटादावदृष्टेः एवं बुद्धिरूपोपाधेरपि न प्रतिविम्बपक्षपातित्वं

तस्य प्रतिविम्बापत्तपातिजपाकुसुमस्थानीयत्वेन तस्य पक्षपात्यादर्शस्थानीयत्वाभावात् ननु नोपाध्यवच्छिन्नस्तत्प्रतिविम्बितो वा जीवः किंत्वविद्यया ब्रह्मण एव जीवत्वं "राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्त्तते यथैव मात्मनो ऽज्ञस्य तत्त्वमस्यादिवाक्यत" इति वार्तिकोक्तेः कश्चित् किल राजपुत्रो व्याधगृहे सम्वर्धित इत्यादिवृहदारण्यभाष्याञ्च व्याधवर्धितराजपुत्रदृष्टान्तोक्त्या ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यत इति स्वीकारात् नित्यमुक्तश्रुतिस्तु तत्त्वतः कदा ऽपि संसाराभावविषयेति चेन्न यादृशः कल्पितो ऽप्यनर्थरूपः ज्ञानोच्छेत्तव्यो वन्धः सदा मुक्तौ शोकाभावश्रुतिरतिशोकस्य तात्त्विकत्वनिषेधपरा स्यात् असर्वज्ञत्वादिना अनुभवसिद्धाज्जीवादन्यस्य चेतनस्याभावेन सार्वज्ञ्यादिश्रुतेर्निर्विषयत्वापत्तेश्च बहुजीववादे ब्रह्मभावरूपमुक्तेरपुमर्थतापत्तेश्च एकजीववादे ऽपि जीवब्रह्मणोः संसार्यसंसार्यादिव्यवस्थाश्रुतिविरोधाच्च तयोर्व्यावहारिकभेदस्याप्यभावेन त्वन्मते ऽपि तत्पराभि"र्द्वा सुपर्णा"त्यादिश्रुतिभिः अन्यश्च परमो राजं स्तथा ऽन्यः पञ्च-

तत्रावतिष्ठते इति नान्योऽन्याश्रय इति वाच्यं निरा-
श्रयाविद्यायोगेन जीवासिद्धावविद्यासिद्धिस्तत्
सिद्धौ तदुपलक्षितजीवसिद्धिरित्यन्योऽन्याश्रयात्
त्वन्मते गगनस्यानित्यत्वनिरूपितसावयवत्वेन
स्वत एवांशत्वसम्भवाच्च न चायं दोष उत्पत्तौ ज्ञप्तौ
स्थितौ वा नाद्यः उभयोरनादित्वात् न द्वितीयः
अज्ञानस्य चिद्भास्यत्वे ऽपि चितेः स्वप्रकाशत्वेन
तद्भास्यत्वात् नान्त्यः असिद्धेरिति वाच्यं स्थिता-
वन्योऽन्याश्रयात् परस्परसापेक्षत्वाभावे ऽन्योऽन्या-
धीनत्वस्यैवापत्तेः कुत्राप्यन्योऽन्याश्रयता न स्यात्
ननु समानकालीनयोरप्यवच्छेद्यावच्छेदकभाव-
मात्रेण तदुपपत्तिः घटतदवच्छिन्नाकाशयोरिव
प्रमाणप्रमेययोरिव चेति चेन्न तदाकाशस्य घटा-
धीनत्वे ऽपि घटस्य तदाकाशाधीनत्वाभावेन दृष्टा-
न्तासिद्धेः न च चैतन्यमपि नाज्ञानाधीनमिति
वाच्यं अज्ञानानधीनचैतन्यस्य शुद्धत्वेन जीवत्वा-
भावाज्जीवाश्रिताज्ञानवादो दत्ततिलाञ्जलिः स्यात्
किञ्चाज्ञानस्याऽनादित्वे नित्यशुद्धत्वहानिप्रसक्तेः
नचाविद्यादौर्घट्यं भूषणमेवेति तत्र प्रमाणा-
द्युक्त्ययोगात् अज्ञानस्य निराश्रयत्वानिर्विषय-

त्वाङ्गीकारे ह्यात्मस्वरूपत्वापत्तेश्च प्रतीत्यनुसारेणा श्रयाद्यङ्गीकारे च घटमहं जानामीति प्रतीत्या हमर्थाश्रितत्वजडविषयत्वादिप्रसङ्गाच्च अनादित्वादिना ऽनुपपत्तिपरिहारायोगाच्च उत्तरास्फुरणे प्रकृतिसम्वृत्यादेर्दौर्घटयं भूषणमिति सुवचत्वेन साङ्ख्यबौद्धादिमतनिरासायोगाच्च एतेन "प्रश्नविभ्रान्तिहेतुत्वाच्चोद्यं तमसि नोचितं न बुद्धिमन्तः पृच्छन्ति न जानामीतिवादिन"मिति निरस्तं नह्यज्ञं प्रति प्रश्नं ज्ञानदौर्घटयात् ज्ञानमेवाज्ञानमित्याद्युक्तावपि विरोधाद्यनुद्भावनापातात् किन्तु ज्ञातुरेववक्तृत्वादलं विस्तरेण तस्मादज्ञानाश्रयासिद्ध्या तदसिद्धिरित्यर्थः ॥

इति पराभिमताज्ञानाश्रयगिरि
निपातितः ॥ ११ ॥

अथज्ञानविषयो ऽपि दुर्निरूपः तथाहि को वा ऽस्य विषयः अत्राह कश्चित् चिन्मात्र मेव विषयः तस्याकल्पितत्वेनान्यो ऽन्याश्रयादिदोषाभावात् ॥ स्वप्रकाशत्वेन प्रसक्तप्रकाशे तस्मिन्नावरणकृत्यसम्भवाच्च नान्यत् तस्याज्ञानकल्पितत्वात् जडत्वेन स्वयमेव प्रकाशहीने आवरणकृत्याभावाच्च

विंशकः॥ तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप" त्यादिस्मृतिभिश्च "शारीरश्चोभयेऽपि हि॥ भेदेनैनमधीयते॥ भेदव्यपदेशाच्चान्यः॥ अधिकं तु भेदनिर्देशा" दित्यादिसूत्रैश्च तस्माच्छारीरादन्य एवेश्वर "आत्मानौ हि तावुभौ चेतनावेकः कर्त्ता-भोक्ता ऽन्यस्तद्विपरीतो ऽपहतपाप्मत्वादिगुण" इत्यादि त्वद्भाष्येण तत्त्वज्ञानसंसरणे चावदा-तत्वश्यामत्वादिवन्नेतरेतरत्रावतिष्ठेते इत्यादि वि-वरणादिग्रन्थैश्च विरोधाच्च किञ्च चिन्मात्रस्याज्ञानं स्वाभाविकं चेदानन्दादिवन्न निवर्त्तेत औपाधिकत्वे उपाधिः स्वयमेव चेदात्माश्रयः अन्यश्चेदन्योऽन्या-श्रयश्चक्रकापत्त्यनवस्थादीति संक्षेपो विस्तरस्त्वाकरे द्रष्टव्यः तस्मान्न चिन्मात्रमज्ञानाश्रय इति सिद्धम् सर्वज्ञो ऽज्ञानाश्रय इति द्वितीयविकल्पो ऽप्यापात-रमणीयत्वादयुक्तः तथाहि त्वन्मते शुद्धब्रह्मणश्चि-दात्मत्वे ऽपि तस्य सार्वज्ञ्यात्कथमज्ञानाश्रयत्वं "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतेः सार्वज्ञ्याज्ञानयोः सामानाधिकरण्यकल्पनाया उपहासमात्रत्वात् न च सविशेषमेव सर्वज्ञमितिवाच्यं तुरीयं सर्वदृगिति शुद्धे सार्वज्ञ्यश्रवणात् एतेन सर्वज्ञत्वं हि भ्रान्त्या

वा प्रमाणतो वा स्वरूपज्ञप्त्या वा त्रिधा ऽप्यविद्या-सिद्धिः भ्रान्तेः प्रमातृत्वादेश्चाविद्यामूलत्वात् असङ्गस्वरूपज्ञप्ते श्चाविद्यां विना विषयासङ्गतेः उक्तं हि "स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितं तच्चोभयं विना विद्यासम्बन्धं नैव सिद्ध्य-ती"ति निरस्तं अविद्यारहिते तुरीये सार्वज्ञ्यश्रुतेः स्वरूपज्ञप्तेः स्वतः कालाद्यसम्बन्धे सत्यत्वपातेन स्वतः सर्वसम्बन्धाभावे ऽसर्वगत्वापातेन चाविद्ययेव स्वत एवान्येना ऽपि सम्बन्धोपपत्ते श्च एतेन ब्रह्मणो ज्ञातृत्वमुपेत्याज्ञानं वदन्तो निरस्ताः तदुक्तं "अज्ञ-ताखिलसम्बेत्तुर्घटते न कुतश्चने" ति संक्षेपः ना ऽपि * जीवो ऽज्ञानाश्रय इति तृतीयकल्पो युक्तः तथाहि तत्र को जीवपदार्थः चिन्मात्र एव वा अवि-द्यावच्छिन्न आविद्यकबुद्ध्यवच्छिन्नो वा तत्र प्रतिवि-म्बितो वा नाद्यः पूर्वमेव निरस्तत्वात् नान्त्यौ कल्पि-तभेदस्याङ्गीकारे ऽन्योऽन्याश्रयात् न च बीजाङ्कुर-न्यायेन नैष दोष इति वाच्यं तद्वदिह व्यक्तिभेदाभा-वात् नच यथा निरंशे ऽप्याकाशे घटस्तटस्थ एव तमुपलक्ष्यैकदेशं संपाद्यते न सम्बन्ध्यते तद्वदविद्या

---

* वाचस्पतिमते जीवाश्रिता ऽविद्या

ऽपि तटस्थैव चिन्मात्रमुपलक्ष्यैकदेशरूपजीवं संपाद्य "पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नाऽपि गोचर" इति पूर्वमेवोक्तत्वादिति चेन्न स्वप्रकाशे सदाभासमाने आवरणकृत्याभावात् चिन्मात्रे किं वा आवरणकृत्यं नाम सिद्धप्रकाशलोपो वा ऽसिद्धप्रकाशानुपपत्तिर्वा सतो ऽपि प्रकाशस्य विषयासम्बन्धो वा प्राकटयाख्यकार्यप्रतिबन्धो वा नाद्यः जगदान्ध्यापत्तेः तस्य तावन्मात्रस्वरूपत्वेन स्वरूपहानिप्रसङ्गात् न द्वितीयः स्वप्रकाशस्य नित्यसिद्धत्वेन तदन्यस्य च स्वप्रकाशे तस्मिन्ननपेक्षितत्वात् न तृतीयः ज्ञानस्य विषयसम्बन्धस्वभावत्वात् स्वयं ज्ञानरूपत्वेन त्वन्मते सम्बन्धानपेक्षणाञ्च न चतुर्थः त्वन्मते ऽपि चैतन्यातिरिक्तस्य तस्याभावात् न च शुद्धस्य प्रकाशमानत्वे ऽपि पूर्णत्वाद्याकारेणाप्रकाशायावरणकल्पनमिति वाच्यं निर्विशेषे आकारस्याभावात् किञ्च दीपावरकघटादिवच्चैतन्यावरकाज्ञानं चेतनस्यान्यसम्बन्धं प्रति बध्नातु अन्यं प्रति चैतन्यमाच्छादयतु नतु चैतन्यं प्रत्येव चैतन्यरूपप्रकाशविरोधीति नहि दीपो घटावृतो ऽपि स्वयं न प्रकाशते तमः सम्बन्धा-

पातात् ननु कल्पितभेदं जीवं प्रति शुद्धचैतन्य-
माच्छादयतीति चेन्न आवरणं विना भेदकल्पनस्या
सम्भवात् यो मोक्षे भावी चिन्मात्रस्य चिन्मात्रं
प्रति प्रकाशस्तदभावस्यैवेदानीमज्ञानेन साध
नीयत्वाच्च नच दीपप्रकाश आवृतो ऽपि स्व-
विषयत्वात् प्रकाशते ब्रह्मप्रकाशस्तु न तथेति न
प्रकाशत इति वाच्यं मोक्षे ऽप्यप्रकाशापत्तेः
अज्ञानवैयर्थ्याच्च ननु साक्षिणि प्रकाशमाने
ऽप्यज्ञानं युक्तं तस्य तत् स्फोरकत्वेन तदविरोधि-
त्वात् त्वदुक्तमर्थं न जानामीति प्रकाशमान
एवाज्ञानदर्शनादिति चेन्न अज्ञानावच्छेदकस्य
विषयस्याज्ञाने तदवच्छिन्नाज्ञानविषयकज्ञानायो-
गात् नच सामान्येन ज्ञातं विशेषेणाज्ञातमिति
वाच्यं सामान्यस्य ज्ञातत्वादेवाज्ञानावच्छेदकतया
तदवच्छेदकविषयस्यैव ज्ञातव्यत्वात् प्रकृते स्वरूप-
भिन्नविशेषाभावेनाज्ञानकल्पनावैयर्थ्यात् अन्यथा-
निर्विशेषत्वहानेः सामान्यस्य प्रकाशमानत्वे विशे-
षस्याभावे च कस्य ज्ञानमिति वक्तुमशक्यत्वात्
दृष्टान्ते च त्वदुक्तमिति शब्दविषयकज्ञाने सत्वे ऽपि
तदर्थविषयज्ञानाभावेनाज्ञानसम्भवात् दृष्टान्त-

विकलत्वमितिभावः किंच त्वया ऽप्यनवच्छिन्न-ब्रह्मानन्दाप्रकाशार्थमेवाज्ञानकल्पनात्कथं प्रकाश-माने ज्ञानं अपि च त्वदुक्तो ऽर्थो न प्रकाशत इत्य-नुभवबलादस्तु तत्र भासमाने ऽज्ञानं नच तथेह सुखादिस्फुरणं न प्रकाशत इत्यनुभवो ऽस्ति येन भासमाने तत्स्यात् किंच न तत्रा ऽपि भासमाने ऽज्ञानं गुहास्थं तमश्छन्नमितिवत् त्वदुक्तं न जानामीत्यनावृतसामान्यावच्छेदेनैवाज्ञानानुभवात् नहि परचित्तस्थमज्ञानं त्वया ऽपि बुभुक्षापिपा-सादिवत्प्रातिस्विकरूपेणानूद्यते एवंच तद्विशेषसं-शयं प्रति तत्सामान्यनिश्चय इव तद्विशेषावच्छिन्ना-ज्ञानज्ञानं प्रति तत्सामान्यज्ञानस्यैव हेतुत्वं बोध्यम् यदप्युक्तं साक्षी नाज्ञानविरोधी तत्स्फोरकत्वात् किन्तु वृत्तिरेव तद्विरोधिनीति तत्तुच्छं वृत्तिश्चैतन्यस्य विषयोपरागार्थेति मते तस्या अज्ञाननिवर्त्तकत्वा-भावात् अज्ञानस्य स्वविरोधिज्ञानाभावव्यापकत्वेन मोक्षे ऽप्यज्ञानापातात् न जानामीत्यज्ञानस्य ज्ञानसामान्यविरोधित्वानुभवाच्च किं चातीन्द्रियेष्व-परोक्षवृत्तौ सत्यामपि त्वन्मते ऽज्ञानानिवृत्त्या सुखादावपरोक्षवृत्त्यभावे ऽपि स्फुरणमात्रेणाज्ञाना-

दर्शनेन चान्वयव्यतिरेकाभ्यां स्फुरणस्यैवाज्ञान-विरोधित्वात् साक्षी स्वविषये ऽज्ञानविरोधी न भवेद्यदि तद्वेद्ये सुखदुःखादावज्ञानं केन वार्यत इतिवचनात् नच सुखाद्यपि वृत्तिप्रतिबिम्बित-साक्षिणैव वेद्यं नतु केवलेनेति केवलो नाज्ञान-विरोधीति वाच्यं अन्तःकरणे वृत्तेरिन्द्रियादि-व्यापारं विना ऽविद्यावृत्तेश्च दोषं विना योगात् त्वत्पक्षे ऽसतः साधकत्वभङ्गे केवलसाक्षिवेद्यत्वोप-पादनाच्च अन्यथाऽऽत्मा ऽपि वृत्तिबिम्बितेनैव स्वेन सदा प्रकाशते नतु केवलेनेति स्यात् अस्तु वा वृत्तिरेवाज्ञानविरोधिनी तथाप्यात्मविषया सेदानी-मप्यस्तीति कथं तत्राज्ञानं तथोक्तं विवरणे "जीवा-काराऽहङ्कारवृत्तिपरिणतान्तःकरणेन च जीवो ऽभिव्यज्यते ऽन्यथा सुषुप्ति" रित्यादिना अयं घट इत्याद्यपरोक्षवृत्तेरपि त्वन्मते घटावच्छिन्नचिद्विषय-त्वाच्च अन्यथा घटाद्यावरकाज्ञानाभावेनायं घट इतिवृत्तेरज्ञानाभिभावकत्वं न स्यात् नच विशिष्ट-चैतन्यरूपजीवविषया वा घटावच्छिन्नचैतन्य-विषया वा वृत्तिरज्ञानविषयीभूतकेवलचिद्विषया वा तदज्ञानविरोधिनीति वाच्यं दण्डी चैत्र इति प्रतीत्या-

चैत्राज्ञानानभिभवापातात् नच श्रवणादिजन्यैव वृत्तिरज्ञानविरोधिनीति वाच्यं भ्रमकालीनापरोक्ष-ज्ञानानधिकविषयकज्ञानेन प्रकारान्तरजन्येनाप्य-विद्यानिवृत्तावतिप्रसङ्गात् अनधिकविषयत्वे श्रव-णादिवैयर्थ्याच्च तस्मान्न शुद्धचिन्मात्राऽऽत्मा ऽज्ञा-नस्य विषयः ना ऽपि देहादिभेदो वा भोक्तृत्वाद्यभावो * वा ब्रह्माभेदो वा द्वितीयमात्राभावो † वा तद्विशिष्ट आत्मा वा ऽज्ञानविषयः विकल्पासह-त्वात् तथाच तेषामात्ममात्रत्वं वा भिन्नत्वं वा आविद्यकत्वं वा नाद्यः उक्तदोषयोगात् न द्वितीयः अद्वैतहानेः न तृतीयः अन्योऽन्याश्रयादिप्रसङ्गात् ननु ब्रह्माभेदादेः प्रकाशमानात्ममात्रत्वे ऽपि कल्पि-तभेदेनाज्ञातृत्वमिति चेन्न अधिष्ठानावरणं विना भेदकल्पनासम्भवस्योक्तत्वात् नच मिथ्याभूतेना ऽपि भेदाभावेन द्वितीयाभावेन वोपलक्षित आत्मज्ञान-विषय इतिवाच्यं तस्य समानविषयज्ञाननिवर्त्य-त्वेन वेदान्तानामप्युपलक्षणप्रकारयुक्तात्मपरत्वे-नाखण्डार्थत्वहानेः अकाकेकाकवदितिवाक्यवद-

---

* भोक्तृत्वाद्यभेदः

† द्वितीयमात्राभेदः

प्रामाण्यापाताच्च उपलक्षणस्य मिथ्यात्वात् प्रकाशमानस्यात्मनोऽज्ञानविषयत्वेऽप्रकाशमानस्य द्वितीयाद्यभावस्योपलक्षणत्वेन तदविषयत्वे च दृष्टहान्यदृष्टकल्पनापाताच्च तस्मादात्मनः प्रकाशमानत्वात् अन्यस्य चाविद्यकत्वान्नाज्ञानाविषयत्वमिति संक्षेपः ॥

इति पराभिमताज्ञानविषयोपपत्ति
गिरिनिपातः ॥ ९२ ॥

अज्ञानस्यप्रयोजकासिद्ध्याऽपि तदसिद्धिः तथाहि किं प्रयुक्तमज्ञानं स्वप्रयुक्तंचिन्मात्रप्रयुक्तमुभयप्रयुक्तमन्यप्रयुक्तं वा नाद्यः आत्माश्रयापत्तेः तस्याक्रियत्वेनासिद्धेश्च न द्वितीयः तस्य निरीहत्वेन प्रयोजकत्वायोगात् अन्यथा प्रयोजकस्य नित्यत्वेन तत्प्रयोज्यस्याऽपि नित्यत्वापत्त्या निवृत्त्यभावप्रसङ्गात् अनिर्मोक्षप्रसङ्गाच्च निरीहत्वस्वभावत्याग प्रसङ्गाच्च सविशेषत्वापत्तेश्च न तृतीयः अन्योऽन्याश्रयात् न चतुर्थः उभयेतरपदार्थाङ्गीकारात् अज्ञानान्तरकल्पनायां चक्रकापत्तिः तस्या ऽपि प्रयोजकान्तरकल्पनेऽनवस्थेति जीवेश्वरयोरेकतरस्य प्रयोजकताकल्पने तयोस्तदध्यासकार्य-

त्वेन तदानीमभावात् तयोरेवाभावेन तत्प्रयोजकतायास्तु का गाथेति भावः किञ्च कल्पकाभावादप्यज्ञानासिद्धिः तस्य किं तावत्कल्पकं शुद्धचिन्मात्रं वा उपहितं वा नाद्यः तस्य निर्दोषत्वात् प्रयोजनाभावात् निर्विशेषत्वाच्च न द्वितीयः तस्य कल्पितत्वेन कल्पकत्वासम्भवात् अन्योऽन्याश्रयाद्यापत्तेश्च अतो विशेषमात्राभावाङ्गीकारे सर्वथा कल्पकासिद्धेः नन्वनाद्यज्ञानोपधानवशेन शुद्धमेव कल्पकं कल्पकत्वं च कल्पनाप्रत्याश्रयत्वं विषयत्वं भासकत्वं वा तत् सर्वं कल्पनासमसत्ताकत्वेन न शुद्धत्वव्याघातकमिति चेन्न अनाद्यविद्योपहितस्य शुद्धत्वासम्भवात् तदुपधानस्य दोषं विनैवाङ्गीकारे स्वाभाविकत्वापत्त्या त्वन्मते निवृत्त्यभावापत्तेः निरुपाधिकस्य सत्यत्वनियमाच्च आश्रयत्वादेरसङ्गे ब्रह्मणि स्वतो दोषं विना ऽसम्भवाच्च नन्वज्ञानाध्यासस्याध्यासान्तरानपेक्षत्वात्स्वपरसाधारणसर्वनिर्वाहकत्वोपपत्तेः उपहितस्य कल्पकत्वे ऽपि नानवस्थायोगः कल्पितप्रतिबिम्बविशिष्टादर्शादेवादर्शान्तरे ऽपि प्रतिबिम्बकल्पकत्वदर्शनादिति चेन्न येनोपहितं चेतनं कल्पकं तस्यात्माश्रयदोष-

णोपहितस्य कल्पकत्वासम्भवात् उपहितस्या ऽपि त्वन्मते कल्प्यत्वेन स्वस्यैव कल्पकत्वे चात्माश्रयापत्तेः उपहितान्तरस्य कल्पकत्वे ऽनवस्थापत्तेः अज्ञानाध्यासस्याध्यासान्तरानपेक्षत्वे ऽनध्यस्तत्वापत्त्या सत्यत्वापत्तेः प्रतिविम्बस्थले तु आदिप्रतिविम्बकस्याकल्पितत्वेनानवस्थाद्यभावात् प्रतिविम्बस्य छायावत्सद्वस्त्वन्तरत्वाच्च उपाधेरनादित्वे ऽन्वयव्यतिरेकव्याप्त्या कल्पितत्वासिद्ध्या ऽद्वैतभङ्गाच्च उपहितस्यानादित्वे च निर्विशेषवादो दत्ततिलाञ्जलिः स्यादिति सङ्क्षेपः ॥

इति पराभिमताज्ञानप्रयोजकादिसिद्धि
गिरिनिपातः ॥ १३ ॥

अथाज्ञाननिवर्त्तकासिद्ध्या ऽपि तदसिद्धिः विकल्पासहत्वात् तथाहि शुद्धं चिन्मात्रं अज्ञाननिवर्त्तकं चिद्विषया वेदान्तश्रवणादिजन्या परोक्षवृत्तिर्वा नाद्यः तस्याज्ञानसाधकत्वेन तदविरोधित्वादनङ्गीकाराच्च न द्वितीयः "कथमसतः सज्जायेत ॥ असतः सम्भवः कुत" इतिश्रुतिस्मृतिभ्यामसतः सत्सिद्धेर्निरासेनासत्यया वृत्त्या सद्रूपमोक्षलक्षणाज्ञाननिवृत्त्यसिद्धेः अज्ञाने न जानामीति ज्ञप्ति-

रूपचिद्विरोधस्यैवानुभवेनाज्ञानिरूपवृत्तिविरोधस्या-
सम्भवाच्च चिता प्रकाशमाने सुखादावज्ञानादर्श-
नाच्च वृत्तेर्जातिविशेषेणैव तन्निवर्त्तकत्वे इच्छादि-
निवर्त्यदेशादिवदज्ञानस्य सत्त्वापत्तेः शुक्त्यादि-
ज्ञानवदर्थप्रकाशकत्वेन तन्निवर्त्तकत्वे चैतन्यस्या
ऽपि तत्त्वेन तन्निवर्त्तकत्वावश्यंभावाच्च किञ्च
वृत्तिरज्ञानोपादेया तन्निवर्त्तकत्वे तत्स्थित्यसहिष्णु-
स्थितिकत्वरूपविरोधस्य हेतुत्वात् कार्यस्य स्वो-
पादानेनाविरोधान्नाज्ञाननिवर्त्तकत्वं तस्याः सम्भ-
वति न चान्त्यशब्दस्य स्वोपान्त्यशब्दजन्यत्वे ऽपि
तन्नाशकत्वदर्शनादुक्तार्थे व्यभिचार इतिवाच्यं
उपान्त्यस्य तन्निमित्तकारणत्वेन तदुपादानत्वा-
भावान्न व्यभिचारः नच क्षीरोपादेयस्य दध्नस्त-
न्नाशकत्वादुक्तव्यभिचारतादवस्थ्यमिति वाच्यं
आतञ्चनातिवर्त्यक्षीरावयवानामेव दध्युपादान-
त्वान्न क्षीरस्य तस्याप्यातञ्चननाश्यत्वाच्च नोक्त-
व्यभिचारतादवस्थ्यशङ्कावकाशः तस्मान्नोपादेयरू-
पिण्या वृत्तेः स्वोपादानाज्ञाननाशकत्वसम्भावना-
ऽपीतिभावः एतेन वृत्तिप्रतिविम्बिता सती चिदे-
वाज्ञाननाशिका तदुक्तं "तृणादेर्भासिका ऽप्येषा

सूर्यदीप्तिस्तृणां दहेत् सूर्यकान्तमुपारुह्य तं न्यायं चिति योजये"दिति तदपि निरस्तं सूर्यायस्कान्तसंयोगजन्याग्नेरेव तृणादिदाहकत्वेन सूर्यस्य तदप्रयोजकत्वात् किं चाज्ञाननिवर्त्तकज्ञानस्य कोविषयो विवक्षितः शुद्धो विशिष्टो वा नाद्यः अग्न्युत्पादानमात्रेणैव तस्योपक्षीणत्वात् तच्चोक्तं पूर्वमेवचित्प्रतिविम्बनाभावे ऽप्यपरोक्षवृत्तौ सत्यामनिवृत्त्यदर्शनाच्च तस्य विषयत्वानङ्गीकारात् अन्यथा मिथ्यात्वप्रसङ्गो दुर्वारः शुद्धं मिथ्याज्ञानविषयत्वात् यदेवं तदेवं तव मते घटादिवदित्यनुमानात् न द्वितीयः तस्याध्यस्तत्वेन तज्ज्ञानस्यभ्रमत्वात् नच निवर्त्तकाज्ञानस्योपहितविषयकत्वे ऽपि उपाधेरविषयत्वादभ्रमत्त्वमिति वाच्यं उपाधिविषयतां विनोपहितविषयकत्वासम्भवात् भिन्नविषयत्वाच्च नहि पटज्ञानात् घटाद्यज्ञाननिवृत्तिर्दृष्टा श्रुता युक्ता वा विशिष्टज्ञानेन तद्विषयकाज्ञाननाशे ऽपि शुद्धविषयकाज्ञानस्यानिवृत्तेस्तादवस्थ्यमेव किञ्च चरमज्ञानस्याऽपि निवर्त्तकाभावेन तस्य सत्वं मोक्षे ऽपि दुर्वारं ननु तन्तुनाशस्य पटनाशप्रयोजकत्वदर्शनात् स्वोपादानाविद्यानाशस्यैव तन्नाश-

त्वान्नोक्तदोष इति चेन्न तन्तुपटयोर्युगपदेवाग्निना नाशने क्रमिकनाशदर्शनाभावात् त्वदीयस्य तादृशान्यस्य चाप्रामाणिकत्वाच्च नच कतकरजोन्यायेनान्त्यज्ञानस्य स्वयमेव निवर्त्तकमितिवाच्यं असम्भवात् नहि कतकरजस्तावत्पङ्कनाशकं नाऽपि स्वस्य नाशकमपि तु विश्लेषमात्रकारणमेव उभयोरपि जलस्याधोवृत्तित्वसत्वात् नापि शुद्धमात्रं तन्निवर्त्तकं तस्य किंचन प्रत्यपि तव पक्षे हेतुत्वाभावात् नापि किञ्चिदन्यस्य सर्वस्य ज्ञानेनैव नष्टत्वात् नन्वविद्यानिवृत्तेर्वृत्तिरूपत्वान्न तन्निवर्त्तकनिषेधो युक्तः वृत्तिनिवृत्तेश्चात्मरूपत्वान्न तज्ज्ञानकखण्डनावकाश इति चेन्न अविद्यानिवृत्तेर्वृत्तिरूपाया वेदान्तजन्यत्वेनाविद्याया ज्ञाननिवर्त्यत्वाभावेन सत्यत्वापत्तेः अनित्यायाश्च वृत्तिनिवृत्तेर्नित्यात्मस्वरूपत्वासम्भवाच्च तस्मात्सत्यस्यैव बन्धस्यापरोक्षीकृते श्री पुरुषोत्तमे तत्प्रसादादेव निवृत्तिरभ्युपगन्तव्या सद्रूपनिगडस्यैव राजप्रसादान्निवृत्तिवदिति सङ्क्षेपः ॥

इति पराभिमताज्ञाननिवृत्तक-
गिरिनिपातः ॥ १४ ॥

अथ मोक्षरूपा ऽविद्या निवृत्तिरपि दुर्निरूपा ऽसम्भवात्तथाहि यदुच्यते ऽविद्यानिवृत्तिर्मोक्षः तत्त्वं नाम किं आत्मस्वरूपत्वं वा तद्भिन्नत्वं वा नाद्यः असाध्यत्वप्रसङ्गात् द्वितीये ऽपि तस्य सत्यत्वमनिर्वाच्यत्वं मृषात्वं वा नाद्यः अद्वैतभङ्गात् न द्वितीयः अनिर्वाच्यत्वे ऽविद्यातत्कार्ययोरेकतरत्वं स्यात् न तृतीयः अविद्यादेः सत्यत्वापत्तेः ननु वृत्तिविशिष्ट आत्मा ऽज्ञानध्वंसः वृत्तिनिवृत्तौ मोक्षनिवृत्तिप्रसङ्गात् अपि तु चरमवृत्त्युपलक्षित आत्मा ऽज्ञाननिवृत्तिः उपलक्षणे निवृत्ते ऽपि मुक्तेरनिवृत्तत्वात् पाके निवृत्ते पाचकस्येव उक्तं च "निवृत्तिरात्ममोहस्य ज्ञातत्वेनोपलक्षितः उपलक्षणहाने ऽपि स्यान्मुक्तिः पाचकादिव" इति तथाचोपलक्षणसाध्यतयैव साध्यता ऽपीति चेन्न काकाद्युपस्थाप्यतृणादेरिव वृत्त्युपस्थाप्यधर्मस्य ब्रह्मणि त्वया ऽनभ्युपगमेनोपलक्षणत्वासम्भवात् वृत्त्युपलक्षितस्य वृत्तेः प्रागपि सत्वेनाज्ञानकाले ऽपि मोक्षापत्तेः नच पूर्वमेव सिद्धं नोपलक्षणमिति वाच्यं तथात्वे वृत्तावेव साध्यत्वपर्यवसानात् तच्चायुक्तमात्माश्रयापत्तेः सिद्धस्या ऽपि काकादेरिच्छा-

कृति विशेषोपलक्षितस्येष्टकृतिसाध्यत्वापत्तेश्च किञ्चोपलक्षणापाये उपलक्ष्यस्य मोक्षस्यापायप्रसङ्गः नच पाकापाये पाचकापायो ऽदृष्टचर इत्यादिना पूर्वोक्तत्वान्नोक्तदोष इति वाच्यं असम्भवात् किं तावत्पाचकत्वं नाम पाककर्तृत्वमिति पक्षे अपचति चैत्रे तत्प्रयोगो भूतपूर्वन्यायेनौपचारिकः भ्रष्टाधिकारे दण्डनायक इतिवत् भूतपूर्वगत्यैव यदि च पाककर्त्तृत्वावच्छेदकावच्छिन्नत्वं तत्कर्त्तृत्वात्यन्ताभावानधिकरणत्वं वा तत्त्वं तदा द्वयमपि पश्चादप्यस्ति न चैवं मुक्तावात्मातिरिक्तं योग्यत्वादिकं तवास्ति चिन्मात्रस्य तु प्रागपि सत्वात् असाध्यत्वमेव स्यात् पाकोपलक्षितत्ववत् वृत्युपलक्षितत्वस्याधिक्ये सविशेषत्वापत्तेः नचोपलक्ष्यस्वरूपस्यासाध्यत्वे ऽपि उपलक्षणगतस्य साध्यत्वेनोपलक्षितस्य साध्यत्वोपपत्तिर्घटाकाशोत्पत्तिवदिति वाच्यं वृत्तेः सुखदुःखाभावान्यतरभिन्नायाः स्वपुरुषार्थत्वाभावेन तदर्थं प्रवृत्त्यनुपपत्तेः नन्वविद्यानिवृत्तिस्तद्विरोधिवृत्तिरेव यावत्कार्योत्पत्तिविरोधि कार्यमेव हि ध्वंस इति चेन्न वृत्तौ नष्टायां विरोधिकार्यान्तरानुदये द्वैतस्योज्जीवनापत्तेः तदुदये च तेनैवाद्वैत-

भङ्गात् नच चरमवृत्तिध्वंसाधिकरण आत्मेति वाच्यं प्रागुक्तदोषात् सापेक्षनिरपेक्षयोरागन्तुकानागन्तुकयोश्चाभेदासम्भवाच्च किञ्च वृत्त्युपलक्षित आत्मा जीवन्मुक्तावप्यस्तीति तदाऽपि मोक्षापत्तिः स्यात् नच चरमवृत्त्युलक्षित आत्मा मोक्ष इति वाच्यं जीवन्मुक्तिप्रयोजकवृत्त्यपेक्षया परमुक्तिप्रयोजकवृत्तौ ह्यानन्दाभिव्यक्तिगतविशेषाभावे चरमक्षणे न चरमश्वासेन वोपलक्षित आत्मा मुक्तिरिति निगमनाभावप्रसङ्गात् ननु प्रारब्धकर्मप्रयुक्तविक्षेपाविक्षेपाभ्यामभिव्यक्तिविशेषस्याङ्गीकारान्नोक्तदोष इति चेन्न निर्विशेषे भाताभातविभागाभावेन तज्ज्ञाने विषयप्रयुक्तविशेषस्य चालीकत्वात् अविद्यानिवृत्तिवृत्तिपक्षे ऽनुभूयमानकृतिसाध्यत्वानुपपत्तेः त्वया ज्ञानस्य कृतिसाध्यत्वनिरासात् ननु पुरुषार्थस्यानन्दप्रकाशस्यासाध्यत्वे ऽपि तत्तिरोधायकाज्ञाननिवर्तकवृत्तेः साध्यत्वमात्रेण तत्साध्यत्वोपपत्तिः कण्ठगतमण्यादौ तथा दर्शनादिति चेन्न निर्विशेषस्य तिरोधाने जगदान्ध्यापत्तेः एतदुक्तं भवति वेदान्तश्रवणादिसाध्येन पुरुषार्थत्वेन भाव्यं तव मते तदभावात् मुक्त्यनुस्यूतस्य सुखज्ञप्ति-

रूपस्यात्मनः पुरुषार्थत्वेऽप्यसाध्यत्वात् चरम-वृत्त्युपलक्षितस्याप्यद्वैतभङ्गापत्त्या ऽऽत्ममात्रत्वात् वृत्तेस्तु साध्यत्वे ऽपि स्वतो पुरुषार्थत्वेन हेयत्वा-दिति नच पञ्चमप्रकाराज्ञानानिवृत्तिः तदुक्तं "न सन्नासन्न सदसन्नानिर्वाच्यश्च तत् त्वयः पक्षानु-रूपो वलि"रित्याचार्याः प्रत्यपीपदन्निति तथात्वे च नाद्वैतहानिः सतो द्वितीयस्याभावात् नाप्य-विद्याद्यन्यतरापत्तिः अनिर्वचनीयत्वाभावादिति वाच्यं तस्या असत्यतुल्यत्वात् बौद्धैरपि तदङ्गी-कारेण तत्र प्रवेशप्रसङ्गाच्च "न सन्नासन्न सदसन्न-चाप्यनुभयात्मकं चतुः कोटिविनिर्मुक्तं तत्त्वं माध्य-मिका विदुरि"ति तन्मतवादिवचनात् ततो दुरुप-पादेयं परपक्षे ऽज्ञाननिवृत्तिरूपामुक्तिरित्यलं प्रासङ्गिकेन ॥

इति प्रासङ्गिकपराभिमताज्ञाननिवृत्ति-
रूपमुक्तिगिरिनिपातः ॥ १५ ॥

अथ केयं वृत्तिर्नाम याऽज्ञाननिवर्त्तकरूपेण स्वी-क्रियते इत्यत्राहुः यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य तद्वच्चतुष्कोणाद्याद्या-कारं भवति तथा विषयेन्द्रियसम्प्रयोगादिके सति

सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारेण निर्गत्य ध्रुवादिविषयपर्यन्तं चक्षुर्वद्दीर्घं दीर्घप्रभाकारेण परिणम्य विषयं व्याप्य तदाकारं भवति सेयं वृत्तिरित्युच्यते अत्र जीवचैतन्यमविद्योपाधिकं सत् सर्वगतं अन्तःकरणोपाधिकं सत्परिच्छिन्नं चेति मतद्वयं तत्राद्ये विषयप्रकाशकं जीवं चैतन्यं द्वितीये ब्रह्मचैतन्यं सर्वगतपक्षे ऽपि जीवचैतन्यमविद्यानावृतमावृतं चेति मतद्वयं तत्रानावृतमते जीवचैतन्यस्य विषयोपरागार्था वृत्तिः द्वितीये त्वावरणाभिभवार्था परिच्छिन्नमते तु जीवचैतन्यस्य विषयप्रकाशकब्रह्मचैतन्याभेदाभिव्यक्त्यर्था अनावृतमते ऽनावृतं सर्वगतमपि जीवचैतन्यं तदाकारवृत्त्यैवोपरज्यते नतु विषयैरसङ्गत्वात् यथा गोत्वादिकं सर्वगतमपि सास्नादिमद्व्यक्त्यैवोपरज्यते नतु केशरादिमद्व्यक्त्या यथा दीपप्रभाकाशगन्धरसादिप्रदेशव्यापिन्यपि तानप्रकाशयन्ती रूपसंसर्गितया तदेव प्रकाशयति तथा केवलाग्न्यदाह्यस्याप्ययःपिण्डसमारूढाग्निदाह्यत्ववच्च केवलचैतन्याप्रकाशस्या ऽपि घटादेस्तदाकारवृत्त्युपारूढचैतन्यप्रकाश्यत्वं युक्तं एवं चानावृतत्वमते तत्तदा

कारवृत्तिद्वारा चैतन्यस्य तत्तदुपरागे तत्तत्प्रकाशः आवृतत्वपत्ते ऽपि तत्तदाकारवृत्त्या तत्तद्विषया वच्छिन्नचैतन्यावरणाभिभवे तत्तत्प्रकाशः परिच्छिन्नत्वपत्ते ऽपि तत्तज्जीवावच्छेदकान्तःकरणीय-तत्तद्विषयाकारवृत्त्या तत्तविषयावच्छिन्नब्रह्मचैतन्याभिव्यक्तौ तत्तत्प्रकाश इति नातिप्रसङ्गः विषयानुभवस्य ब्रह्मचित्त्वे ऽपि वृत्त्या जीवचैतन्येनाभेदेनाभिव्यक्तत्वात् जीवचित्त्वमविरुद्धमिति प्रतिकर्म व्यवस्थायुक्तेत्यादिना तदयुक्तं अन्तःकरणवृत्ति-भिन्नज्ञाने मानाभावात् ब्रह्माकारचरमवृत्तिस्थले ऽपि ज्ञानद्वयापत्तेश्च नच घटं जानामीत्यत्रानुभूय-मानसकर्मवृत्तितो ऽन्याकर्मिका सम्वित् घटप्रकाश-रूपा घटः प्रकाशत इत्याकारेति वाच्यं करोति यतते गच्छति चलतीत्यादावेकार्थत्वे ऽपि यथाहि सकर्मकत्वाकर्मकत्वे स्वभाववशादेव तथा ऽत्राप्ये कार्थत्वे ऽपि जानातिप्रकाशत्योः सकर्मकत्वाकर्म-कत्वे स्तः न चानुकूलो यत्नः कृञो ऽर्थः पततेस्तुयत्न-मात्रार्थः एवं गमेरुत्तरदेशसंयोगानुकूलः स्यन्देश्च लेश्च स्यन्दमात्रमित्यर्थभेदनिबन्धनमेव सकर्मकत्वा-दिकमिति वाच्यं लाघवाद्यत्नादेरेव शक्यतावच्छेद-

कत्वेनानुकूलत्वादेः संसर्गतया भानात् अविवक्षा-विरहविशिष्टत्वे सति कर्मसाकाङ्क्षत्वमेव सकर्मकत्वं अतः सकर्मकस्याऽपि वहतेः कर्माविवक्षया नदी वहतीत्यत्राकर्मत्वेऽपि न सकर्मत्वहानिः अतीतः प्रकाशते शास्त्रार्थो धर्मादिः प्रकाशते शुद्धा चित्प्रकाशते इत्यादौ चिद्रूपज्ञानाभावेऽपि प्रकाश-व्यवहाराच्च नह्यत्र वृत्तिप्रतिबिम्बितचिदस्ति परोक्षा-देरपरोक्षैकरसचिद्विषयत्वे अपरोक्षापत्तेः शुद्धचित-स्तद्विषयत्वे मिथ्यात्वापत्तेश्च अस्तु वा चितो विषयप्रकाशकत्वं तथाऽप्यन्तःकरणस्य न देहा-न्निर्गतिं कल्प्यापरोक्षादिवैलक्षण्याय विषयस्या-भिव्यक्तापरोक्षचिदुपराग एव वक्तव्यः चिदुपरागादौ चापरोक्षवृत्तेस्तदाकारत्वमेव तन्त्रं नतु प्रभायामिव वृत्तेस्तदावरणनिवर्त्तकत्वादौ तत्संश्लेषस्तन्त्रं नेत्रा-न्निर्गच्छत् ध्रुवाद्याकारवृत्त्यैव स्वसंश्लिष्टस्य चैत्रस्थ-कज्जलादेर्देहध्रुवमध्यवर्त्तिनः परमाणवादेर्ब्रह्मणश्चा-परोक्षापत्तेः द्वयोस्तन्त्रत्वे च गौरवात् नच कज्ज-लादिसंश्लेषेऽपि तदाकारत्वाभावान्न तत्प्रकाशः आवश्यकतदाकारत्वेनैवोपपत्त्या संश्लेषस्याकिञ्चि-त्करत्वात् परोक्षस्थले वृत्तिनिर्गमाभावेऽपि प्रका-

शादिवदपरोक्षस्थले ऽपि तथात्वोपपत्तेः नच प्रकाशस्य दीपादेर्विषयसंश्लिष्टस्यैव व्यवहारहेतुत्वमिति वाच्यं परोक्षस्थले वहिर्निर्गतस्यैव ज्ञानस्य व्यवहारजननात् नच तत्राज्ञाननिवृत्त्यभावः न जानामीति प्रतीत्यापत्तेः स्मृत्यनुपपत्तेश्च अज्ञाते सत्यपि व्यवहारोपपत्तावपरोक्षे तन्निवृत्त्यभावापत्तेः किञ्च वृत्तिप्रतिबिम्बितचैतन्यं तदभिव्यक्तघटाद्यधिष्ठानचैतन्यं वा ज्ञानं नाद्यः आध्यासिकसम्बन्धस्यातन्त्रत्वापत्तेः न द्वितीयः आवश्यकेन विषयसंश्लिष्टवृत्तिप्रतिबिम्बितचैतन्येनैव तदज्ञाननिवृत्तिवत्प्रकाशोपपत्तौ विषयाधिष्ठानकल्पनाया वैयर्थ्यात् घटाद्यधिष्ठानस्य चाक्षुषवृत्तिविषयीकृतस्य मिथ्यात्वे ऽधिष्ठानत्वासिद्धेः सत्यत्वे तत्र दृश्यत्वादेर्हेतोर्व्यभिचारापत्तेः किंच जीवचैतन्यं ब्रह्मचैतन्यं वा विषयदृक् नाद्यः विशिष्टे कल्पिते ऽध्यासायोगात् न द्वितीयः तस्य संसारावृतत्वेन जगदान्ध्यापत्तेः नच मूलाविद्यानिवृत्त्यभावेन सर्वत आवरणाऽभिभवाभावे घटाद्यवच्छेदेन तदभिभवेनाध्यासाभावोपपत्तिरिति वाच्यं अभिव्यक्तस्य घटाद्यवच्छिन्नस्य घटानधिष्ठानत्वात् शुद्धस्फुरणाङ्गीकारे वेदान्त-

वैयर्थ्यापत्तेः नच वेदान्तजन्यज्ञानस्य चाक्षुषघटादि ज्ञानादनधिकविषयकत्वे ऽप्युपाध्यभानार्थं तदाऽवश्यकं ज्ञाने स्वविरोधि निवृत्तावधिकभानस्याऽनपेक्षणात् नहि दरिद्रपुरुषज्ञानं पुरुषाज्ञानं न निवर्तयति विषयप्रकाशकमधिष्ठानचैतन्यं अन्तःकरणावच्छिन्नो जीवस्तयोरभेदाभिव्यक्त्यर्थं वृत्तिरिति न युक्तं अन्तःकरणाद्युपाधिभङ्गं विनोपहिताभेदासम्भवात् घटादितादात्म्यतया भासमाने त्वदभिमताधिष्ठानचैतन्ये जीवाभेदाभिव्यक्तिस्वीकारे ऽहं घट इति प्रतीत्यापत्तेः अथान्तःकरणावच्छिन्नस्य जीवत्वे त्वन्मते सुषुप्त्याद्यभावेन कृतनाशादिप्रसङ्गाच्च वृत्तेरुपरागार्थत्वपक्षे च चितः स्वतो वृत्तिमात्रोपरक्तत्वं दर्पणे मुखस्येव प्रतिबिम्बितत्वं अनुद्भूतरूपे ऽन्तःकरणे शब्दान्यप्रतिबिम्बनोपाधितायां अचाक्षुषचैतन्ये प्रतिबिम्बनस्य चायोगात् ना ऽपि मूषास्थद्रुतसुवर्णादिवत्तादात्मना विकृतत्वं चितो निर्विकारित्वात् ना ऽपि गोचरत्वादिवत् तदाश्रितत्वं तत्राभिव्यक्तत्वं वा चित आकाशवदनाश्रितत्वात् उपरागार्थत्वपक्षे चितो ऽनावृतत्वेन सर्वत्राभिव्यक्तत्वाच्च नाऽपि घटाकाशवदन्तः

स्थत्वं आकाशवत् सर्वगता सा स्वतो वृत्त्यन्तस्था नतु घटाद्यन्तःस्थेति वक्तुमशक्यत्वात् तस्माच्चितः सर्वगतत्वेन सर्वसम्बन्धात् सर्वप्रकाशो दुर्वारः "असङ्गो ह्ययं पुरुष" इति श्रुतिस्तु ईश्वरस्य तत्तत्-कृतलेपाभावपरा "स यत्तत्र किंचित्पश्यति अनन्वागतस्तेन भवती"ति पूर्ववाक्यात् "यथाऽऽकाशस्थितो नित्यं वायु"रित्यादिस्मृतेश्च किंच वृत्तितः पूर्वमाध्यासिकसम्बन्धो ऽस्त्येव अन्यस्तूपरागो न दृश्यत्वे तन्त्र मिति किं तदर्थया वृत्त्या अथावरणाभिभवार्था वृत्तिरिति पक्षो ऽप्ययुक्तः विवर्ताधिष्ठानस्य चिन्मात्रस्याज्ञानादिसाक्षित्वेन सदैव प्रकाशमानत्वादन्यस्य चाज्ञानकल्पितत्वात् नच तस्या ज्ञानादिसाक्षित्वेन प्रकाशे ऽप्यशनायाद्यतीतत्वेन प्रकाशाभावादावरणमावश्यकमिति वाच्यं अज्ञानादिसाक्षित्वाशनायाद्यतीतत्वादेः प्रकाशाप्रकाशोपपादकस्य धर्मस्य निर्विशेषे ऽसत्वात् किंचाज्ञानमेकमनन्तानि वा नाद्यः शुक्तिज्ञानेनाज्ञाननिवृत्त्या सद्य एव मोक्षप्रसङ्गात् अनिवृत्तौ रूप्यादेः सविलासाविद्यानिवृत्तिरूपबाधायोगात् नन्वस्मिन्पक्षे शुक्तिज्ञानेन रूप्यादेः सकारणे प्रलयमात्रं

क्रियते मुद्गरमहरणेन घटस्येव तत्वज्ञानं निवर्त्तते ब्रह्मज्ञानेन तु विरोधित्वादज्ञानमेव निवर्त्तत इति चेन्न ज्ञानस्याज्ञानद्वारैवात्मविरोधित्वेनाज्ञानमनिर्वर्त्यरूप्यादिनिवर्त्तकत्वायोगात् शुक्तिज्ञानेनाज्ञानानिवृत्तौ अभिव्यक्तचैतन्यासम्बन्धेन भ्रान्ताविव बाधेऽपि शुक्तेरप्रकाशापत्तेश्च नच खद्योतादिप्रकाशैर्महान्धकारस्येवाज्ञानस्यैकदेशनाशाद्वा भीरुभटवदपसरणाद्वा कटवद्वेष्टनाद्वा चैतन्यस्याप्येकदेशेन प्रकाश इति वाच्यं चक्षुरादिजन्यशुक्तिवृत्तेरूपादिहीनशब्दैकगम्यशुद्धात्मविषयतया तदावरणाशक्यप्रतिबन्धकत्वात् किंच स्वोपादानरूपाविद्यायाश्चाभिभवोऽपि विरुद्धत्वादसम्भव एव अन्यथा घटेनाऽपि स्वोपादानभूताया मृत्तिकाया अप्यभिभवापत्तेः नच वृश्चिकवृत्तादिना गोमयादेरभिभवो दृष्ट इतिवाच्यं गोमयत्वाद्यवस्थाया एव च पार्थिवावयवावृश्चिकाद्युपादानानीति न तैरुपादानस्वभावाभिभवः तस्मात् स्वनिमित्तकारणगोमयत्वावस्थाया एवाभिभवान्नोक्तव्यभिचारावकाशः नच मूलाज्ञानस्यैवावस्थाविशेषाः शक्तिविशेषा वा रजताद्युपादानानि शुक्तिज्ञानेन साध्यासं निवर्त्तन्ते इति वाच्यं विकल्पा-

सहत्वात् तथाहि ते ऽवस्थाविशेषाः शक्तिविशेषा-
श्चाज्ञानाभिन्नाः तद्भिन्ना वा नाद्यः अनेकाज्ञान-
वादापत्तेः न द्वितीयः ज्ञानेन साक्षान्निवृत्त्यनुपपत्तेः
तेषामिव रूप्यस्यैवोपादाननिवृत्तिं विना ऽनिवृत्ति-
प्रसङ्गाच्च शुक्त्यज्ञानं नष्टमित्यनुभवविरोधाच्च ज्ञान-
निवर्त्त्यत्वं मिथ्यात्वमित्यत्र दृष्टान्तासिद्धेश्च अतो
रूप्यादिनिवृत्त्यर्थं शुक्तिज्ञानेनाज्ञाननिवृत्तिरावश्य-
कीत्येकाज्ञानमते शुक्तिज्ञानादेव मोक्षो ऽप्यवश्यं-
भावीति सङ्क्षेपः न द्वितीयो ऽनेकाज्ञानवादो ऽपि
रमणीयः विकल्पासहत्वात् एकया वृत्त्या किं सर्वत-
दज्ञानानां नाशः उतैकतदज्ञानस्य नाद्यः शुक्तेः पुनः
कदा ऽप्यप्रकाशो न स्यात् नान्त्यः तदा ऽपि प्रकाशो
न स्यात् एकाज्ञाननाशे ऽप्यन्येषां सत्त्वात् अयं
दोषो ऽवस्थाविशेषपक्षे ऽपि योजनीयः समानत्वात्
किञ्च कथं सादिशुक्त्यादेस्तदवच्छिन्नचैतन्यस्य
वा ऽनाद्यज्ञानाविषयत्वं निर्विषयावरणस्यावस्थाना
सम्भवात् नच पूर्वमनवच्छिन्नावरणमिदानीम-
वच्छिन्नावरणं जातमिति वाच्यं शुक्तिज्ञानेन मोक्षा-
पत्तेः एतेन व्यक्तितः पूर्वं जातेरिव विषयात्प्रागज्ञान-
मस्तीति निरस्तं ननु सत्स्वप्यनेकाज्ञानेषु बहुजन-

सङ्कीर्णदेशे वैद्युतनिपातवत् त्रिदोषहरौषधवच्च ज्ञानमितरापसर्पणेन एकमज्ञानं नाशयति यथा तवैकं ज्ञानमेव प्रागभावं नाशयति प्रागभावान्तर-निबन्धनमज्ञानत्वादिव्यवहारं प्रतिवध्नाति तथा ममाप्येकं ज्ञानमेकमेवाज्ञानं नाशयत्यज्ञानान्तर-व्यवहारं प्रतिवध्नाति इति चेन्न अज्ञानवत्प्राग-भावस्यावरकत्वाभावेनाज्ञानस्य जवनिकावदावर-कत्वेन दृष्टान्तवैषम्यात् नहि मन्मते ज्ञानप्राग-भावा आवरणानि किन्तु दण्डप्रागभाववद्धेत्वभाव-रूपाः ना ऽपि ज्ञानं तन्निवर्त्तकत्वेन हेतुः किन्तु दण्डादिवत्स्वरूपेणैव तथाचैकदण्ड इवैकं ज्ञानं सजातीयान्तरप्रागभावे सत्यपि स्वकार्य्यं जनयेदेव कार्य्योत्पत्तौ हि कारणसत्वमेव तन्त्रं नतु कारण-जातीयसर्वप्रागभावनिवृत्तिः असम्भवात् त्वन्मते तु वृत्तेरावरणनिवर्त्तकत्वादेकस्मिन्नज्ञाने निवृत्ते ऽप्यज्ञानान्तरस्य जवनिकान्तरवत् कालान्तरवत्स-त्वात् कालान्तर इव वृत्तिकाले ऽप्यप्रकाशः स्यात् नचालोकाभावस्तम इति मते तमः कुड्यादिवदाव-रणमेवेति वाच्यं तस्या ऽपि हेत्वभावरूपत्वात् नाप्यालोकस्तन्निवर्त्तकत्वेन ज्ञानहेतुः किन्तु स्वरूपे-

णैव नाप्येकैकालोकाभावस्तमः किन्त्वालोकत्वा-
वच्छिन्नालोकाभावः नचैकस्मिन्नालोके सति सो-
ऽस्ति भाविज्ञाननिवर्त्त्यमज्ञानं त्वेतज्ज्ञानकाले
ऽप्यस्तीति वैषम्यं नचेहाप्यज्ञानसमुदाय एवावरणं
एकेनैकस्मिन्नज्ञाने निवृत्ते स नास्तीति प्रकाशो-
पपत्तेरितिवाच्यं वृत्तिनाशे ऽपि समुदायाभावस्य
सत्त्वेन सदा प्रकाशापत्तेः अमूर्त्तानामज्ञानानामा-
वरणत्वायोगाच्च किञ्च नापि वृत्तेर्विषयाकारत्वं
विकल्पासहत्वात् तथाहि विषयाकारत्वं नाम किं
तत्तद्विषयत्वं वा तस्मिंश्चैतन्योपरागयोग्यताऽऽपाद-
कत्वं वा तदज्ञानाभिभावकत्वं वा घटादिवत्पृथु-
बुध्नोदराद्याकारत्वं वा नाद्यः त्वयैव तन्निरासात्
न द्वितीयतृतीयौ तयोस्तदाकारत्वप्रयोज्यत्वेन
तत्त्वायोगात् न चतुर्थः साकारवादापातात् सं-
स्थानहीनगुणकर्मजात्यभावादिवृत्तेश्च युगपदितरे-
तरविरुद्धनानाकारत्वायोगाच्च चरमसाक्षात्कारस्य
निराकारब्रह्माकारत्वायोगाच्च तस्मात्पक्षत्रयमप्य-
युक्तमिति सङ्क्षेपः ॥

इति पराभिमतप्रतिकर्मव्यवस्था-
गिरिनिपातः ॥ १६ ॥

अथ यदुक्तं मिथ्या ऽज्ञानोपादानक इत्यज्ञानस्य मिथ्यात्वं तदप्यसम्भवं तल्लक्षणप्रमाणाभावात् तथाहि किमिदं मिथ्यात्वं सत्त्वानधिकरणत्वमिति चेन्न निर्धर्मके ब्रह्मण्यतिव्याप्तेः ना ऽपि बाधकज्ञानविषयत्वं ब्रह्मण्यतिव्याप्तेरेव "स्थूलमनणिव"त्यादिश्रुतेः ना ऽपि प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं निषेधस्तात्त्विको ऽतात्त्विको वा नाद्यः अद्वैतभङ्गात् नद्वितीयः सिद्धसाधनत्वापत्तेः नच ब्रह्मस्वरूप एव निषेधः भ्रमकालानिश्चितस्य सापेक्षस्य निषेधस्य भ्रमकालनिश्चितनिरपेक्षनिरविशेषब्रह्मस्वरूपत्वासम्भवात् नच व्यावहारिक एवायं निषेध इति वाच्यं प्रतियोगिनो ऽप्रातिभासिकस्य प्रपञ्चस्य पारमार्थिकत्त्वापत्तेः ननु स्वाप्नगजतदभावयोरुभयोर्जागरे बाधदर्शनेन तथा ऽत्र प्रतियोगितदभावयोर्निषेध्यता ऽवच्छेदकस्य सद्भिन्नत्वादेः सत्वादुभयोर्निषेध इति चेन्न स्वप्नगजस्य बाधे ऽपि तदभावस्याबाधात् स्वप्नदृष्टात्मादेरबाधाच्च किञ्च स्वाप्निकाभावस्य बाधे ऽपि गजो नास्तीति नियामकस्याभावान्तरस्य सत्त्वात् दृष्टान्तासिद्धेः किञ्च स्वरूपेण निषेधे ऽसत्त्वापत्तेः पारमार्थिकत्वेन निषेधे

निषेधप्रतियोगित्वस्य निर्धर्मके ब्रह्मण्यपि सत्त्वात् नाप्यन्त्यताभावप्रतियोगित्वं सिद्धसाधनत्वापत्तेः खपुष्पादावतिव्याप्तेश्च नाऽपि स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं अव्याप्यवृत्तिसद्रूपसंयोगादावतिव्याप्तेः नाऽपि स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्त्वं परैरपि घटवति भूतले सम्बन्धान्तरेण तदत्यन्ताभावाभ्युपगमेन सत्यत्त्वविरोधिमिथ्यात्वासिद्धेः नाप्येकावच्छेदेन प्रतियोगित्वं तेनैव सम्बन्धेन तत्त्वं विवक्षितम् एकावच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमिति वाच्यं समानसत्ताकयोः प्रतियोगितदभावयोरेकत्र स्थित्यसम्भवात् तादृशस्य लोकेऽत्यन्ताप्रसिद्धेरसम्भवः नाऽपि ज्ञाननिवर्त्यत्वं तत्त्वं उत्तरज्ञाननिवर्त्यपूर्वज्ञानादाविव सत्वेनाप्युपपत्तेः स्मृतिनिवर्त्यसंस्कारेऽतिव्याप्तेश्च नच साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं परोक्षप्रमानिवर्त्ये परोक्षभ्रमविषयेऽव्याप्तेः जीवन्मुक्त्यनुवृत्ताज्ञानलेशे चिरसंचिताद्वैतसंस्कारनिवर्त्येऽव्याप्तेश्च नापि सद्भिन्नत्वं तत्त्वं सत्त्वं च प्रमाणसिद्धं प्रमाणत्वं च दोषासहकृतप्रमाकरणत्वमिति वाच्यम् घटादेरपि कूस-

दोषहीनप्रत्यक्षादिप्रमाणासिद्धत्वात् कल्प्यदोषस्य वेदे ऽपि सम्भवात् सर्वप्रमाणागम्ये त्वदभिप्रेते शुद्धब्रह्मण्यतिव्याप्तेश्च तव मते तस्याऽपि दोषासहकृतज्ञानकरणलक्षणप्रमाणासिद्धवस्तुभिन्नत्वादिति सङ्क्षेपः ॥

इति पराभिमतमिथ्यालक्षण-
गिरिनिपातः ॥ १७ ॥

अथ मिथ्यात्वे प्रमाणमपि नास्ति तथाहि न तावत् प्रत्यक्षं वर्त्तमानमात्रग्राहिणस्तस्य त्रैकालिकवाध्यत्वग्राहकत्वायोगात् नाप्यनुमानं तस्य व्याप्तिग्राहकप्रत्यक्षमूलकत्वेन प्रत्यक्षासिद्ध्या सुतरामसम्भवात् नाप्यागमः अप्रसिद्धत्वात् न "न्वेकमेवाद्वितीय" मित्यादिश्रुतिरेवाद्वितीयादिपदैर्द्वितीयमात्रं निषेधयन्ती तन्मिथ्यात्वे मानमिति चेन्न तस्या अद्वितीयादिपदानां समानातिशयनिषेधपरत्वेन नैराकाङ्क्ष्यात् तस्मान्नात्र किञ्चिदपि मानमस्तीति सिद्धम् ॥

इति पराभिमतमिथ्यात्वप्रमाण-
गिरिनिपातः ॥ १८ ॥

अथाज्ञानस्यानिर्वचनीयत्वोक्तिरपि स्वकपोलो-

ह्यासमात्रं लक्षणाद्यभावात् तथाहि किं नामा-
निर्वचनीयत्वं सद्विलक्षणत्वमिति चेन्न असति
नृशृङ्गादावव्याप्तेः नाप्यसद्विलक्षणत्वं आत्मन्यति-
व्याप्तेः नाऽपि सदसद्भिन्नत्वं वस्तुजातस्य सदसदन्य-
तरत्वनियमेन तादृशप्रतियोग्यसिद्धासम्भवात् ना
ऽपि निर्वचनानर्हत्वं अनेनैव निरुच्यमानतया ऽसं-
भवात् नच सदसत्त्वादिना विचारासहत्वं "न
सत्तन्नासदुच्यते" इत्यात्मनो ऽपि तथात्वेन तत्राति-
व्याप्तेः अपिच सत्त्वादिना विचारासहत्वं किं
सत्त्वाद्यनधिकरणत्वं वा सत्त्वाद्यत्यन्ताभावाधि-
करणत्वं वा सद्रूपत्वाद्यभावो वा सत्वादेरित्थमिति
निर्वक्तुमशक्यत्वं वा सत्वादिना प्रमाणागोचरत्वं
वा नाद्यः असतो ऽप्यसत्त्वरूपधर्मानधिकरणत्वात्
सत्पदलक्ष्यस्य निर्धर्मकस्य ब्रह्मणो ऽपि स्वरूपाति-
रिक्तत्वात्तात्त्विकसत्त्वानधिकरणत्वाच्च अतात्त्विक-
सत्त्वाधिकरणत्वस्य त्वनिर्वाच्ये ऽपि सत्वात् धर्मि-
समसत्त्वाधिकरणत्वस्य च ब्रह्मण्यप्यभावात् अ-
निर्वाच्यत्वस्याप्यधिकरणत्वाच्च नद्वितीयः निर्धर्मके
ब्रह्मणि सत्यवत्तदत्यन्ताभावो ऽपि नास्ति तुच्छे
ऽप्यसत्त्ववत्तदत्यन्ताभावो नेति कथं चिदतिव्याप्ति-

निरासे ऽपि तुच्छब्रह्मणोर्निर्धर्मकत्वेन धर्मवत्वा-
द्देवानिर्वाच्यलक्षणातिप्रसङ्गात् निर्विशेषत्वश्रुत्या
ऽपि व्याघातेन धर्ममात्रनिषेधायोगेन ब्रह्मणि
सत्त्वराहित्ये ऽपि तदत्यन्ताभावस्य दुर्वारत्वात् न-
तृतीयः सामान्यादेरप्यबाध्यत्वेन बाध्यात्मकसद्रूप-
तया ब्रह्मणः सत्त्वाभावे सद्रूपत्वायोगात् ब्रह्मणः
सद्रूपत्वे श्रौतसत्पदस्य लाक्षणिकत्वायोगाच्च न-
चतुर्थः त्वन्मते ब्रह्मण्यपि सत्त्वस्य इतीत्थमिति
दुर्वचनत्वात् नाऽपि पञ्चमः अखण्डार्थनिष्ठवेदान्तै-
कवेद्यस्य ब्रह्मणो ऽपि सत्त्वप्रकारकप्रमाणागोचर-
त्वात् अथ च सत्वादिराहित्यं नाम किं प्राति-
भासिकं वा धर्मिसमसत्ताकं वा व्यावहारिकं वा
पारमार्थिकं वा नाद्यः शुक्तिरूप्यस्याकाशादिप्रप-
ञ्चस्य च पारमार्थिकत्वप्रसङ्गात् नद्वितीयः बाध-
बोध्यस्य भ्रान्तिसिद्धत्वेन समत्वायोगात् नतृतीयः
जगति व्यावहारिकत्वेन रूप्ये प्रातिभासिकत्वे-
नोक्तदोषात् रूप्ये व्यावहारिकत्वे च जगति पार-
मार्थिकत्वापत्त्या द्वैतहानेः अत एव न चतुर्थः
नहि स्वरूपतो दुर्निरूपस्य किञ्चिदपि रूपं वास्तव-
मस्तीति स्ववचनविरोधाच्च किंच श्रुत्या युक्त्या च

भेदं निराकुर्वता सदसद्भिन्नत्वरूपस्य तद्व्याप्तस्य वा कथमपि ह्यनिर्वाच्यत्वस्य समर्थनासम्भवात् अथ सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे सति सदसद्विलक्षणत्वमिति चेन्न परस्परविरहरूपयोरेकत्रनिषेधस्य व्याघातात् नच सत्त्वरहितत्वे सत्यसत्त्वरहितत्वे सति सत्त्वराहित्यमिति वाच्यं द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इतिन्यायेनैकतरस्य निषेधस्यान्यतरविधिरूपत्वात् माता वन्ध्येतिवत् व्याघातसाम्यात् ननु अनिर्वाच्यवादे विरोधासिद्धेरिति चेन्न अन्योऽन्याश्रयात् अन्यथा मे माता वन्ध्येति वादेऽपि विरोधासिद्धिप्रसङ्गात् ननु निषेधसमुच्चयस्यातात्त्विकत्वान्न विरोधः नच सदादिवैलक्षण्योक्तैर्वैयर्थ्यं तावतैवेष्टसिद्धेरिति वाच्यं तदुक्तेस्तत्तत्प्रतियोगिदुर्निरूपत्वमात्रप्राकट्यार्थत्वात् ॥ नहि स्वरूपतो दुर्निरूपस्य किंचिदपि रूपं वास्तवमस्तीति चेन्न सत्त्वादिराहित्यस्यातात्त्विकत्वेऽपि सत्त्वादेर्दुर्निरूपकत्वमात्रेणानिर्वाच्यत्वे पञ्चमप्रकाराऽविद्यानिवृत्तौ नानिर्वाच्यश्च तत् त्वय इत्यनिर्वाच्यत्वनिषेधायोगात् सत्त्वादिवत्तद्राहित्यस्याप्यतात्त्विकत्वे सत्त्वादौ प्रमाणानिरासेन तद्राहित्ये

तदुक्तेरयोगाच्च विधिसमुच्चयस्यैवातात्त्विकत्वान्न विरोध इति वक्तुं सुवचत्वाच्च अथ च निषेधसमुच्चयस्यातात्त्विकत्वं किमुभयातात्त्विकत्वेनैकैकातात्त्विकत्वेन वा नाद्यः उभयतात्त्विकत्ववदुभयातात्त्विकत्वस्यापि विरुद्धत्वात् विधिसमुच्चयस्य तात्त्विकत्वेन प्रतियोगिदुर्निरूपत्वस्यायोगाच्च अत एव न द्वितीयः तत्प्रतियोगेन एकस्य विधेस्तात्त्विकत्वापातात् अतात्त्विकत्वं तात्त्विकात्यन्ताभावप्रतियोगीति विवेकः अथ सत्त्वासत्त्वयोः को वा ऽर्थो विवक्षितः सत्ता जातितदाभावाविति चेन्न शुद्धात्मनि सद्वैलक्षण्यस्य प्रपञ्चे तदभावस्य चापातात् अत एव नार्थक्रियाहेतुत्वाहेतुत्वे नाऽपि बाध्यत्वाबाध्यत्वे सत्वं राहितस्यानिर्वचनीयस्य बाध्यत्वे तत्रासत्त्वराहित्यायोगात् अत एव न प्रामाणिकत्वाप्रामाणिकत्वे किंच त्वन्मते ब्रह्मण्यपिप्रामाणिकत्वाप्रामाणिकत्वयोरभावेन तत्रातिव्याप्तेः अत एव न प्रामाणिकत्वतच्छून्यत्वेनाऽपि शून्यत्वाशून्यत्वे अनिर्वाच्यस्याशून्यत्वे तद्वैलक्षण्यायोगात् नाऽपि ब्रह्मत्वशून्यत्वे प्रपञ्चे ममाऽपि तथात्वङ्गीकारेणेष्टापत्तेः किंच रूप्यादौ घटादौ प्राति-

भासिकस्य व्यावहारिकस्य च सत्त्वस्य भावात् कथं सद्वैलक्षण्यं किञ्च सत्वं नाम अस्तिशब्दाभिधेयं नास्तिशब्दाभिधेयं वा नाद्यः भावत्वापत्त्या स्वरूपासिद्धेः सद्वस्त्वन्तःपातित्वेन सन्निषेधेनैव तन्निषेधसिद्धौ सत्यां विशेषणवैयर्थ्याच्च न द्वितीयः तन्निषेधे सिद्धसाधनप्रसङ्गात् व्यावृत्तिनैष्फल्याच्च प्रतीत्यसम्भवेन तन्निषेधायोगाच्च अन्यथा माता वन्ध्येतिवद्वचनव्याघाताच्चेति संक्षेपः ॥

इति पराभिमतानिर्वचनीयलक्षण-
गिरिनिपातः ॥ १६ ॥

अथानिर्वचनीयप्रमाणकथा ऽपि मनोरथमात्रा ऽप्रसिद्धत्वात् नन्वेतावन्तं कालं शुक्तौ मिथ्यैव रजतमभात् मरीचिकायां मिथ्यैव जलमभादित्यादिप्रत्यक्षप्रतीतिरेवात्रमानम् तथाहि न तावदुक्तप्रत्ययस्य सर्वथा ऽसद्विषयकत्वं वक्तुं शक्यं शशशृङ्गादीनामपि प्रतीतिविषयतापत्तेः वाह्यमतप्रवेशाच्च नाऽपि सद्विषयकत्वं नेदं रजतमपि तु शुक्तिः नेदं जलमपि तु मरीचिकेत्यादिना वाधदर्शनात् तस्मात्सदसद्विलक्षणं तात्कालिकप्रत्ययगोचरमनिर्वचनीयमेवेति सिद्धमिति चेन्न अस-

देवेदं रजतमभादिति पूर्वोक्तप्रत्यक्षस्यासद्विषयक-त्वादिति केचित् ❀ तत्तुच्छं असत्त्वे तज्ज्ञानस्य प्रत्यक्षत्वासिद्धेः इन्द्रियसन्निकर्षाभावात् नहि शश-शृङ्गं साक्षात्करोमीत्यनुभूयते कैश्चित् किञ्चासन्नाम किञ्चिदस्ति न वा नाद्यः स्वरूपे हानेः व्याघाताच्च द्वितीये यदि नास्त्येव कुतस्तज्ज्ञानं तस्मादुक्तप्रतीति गोचररजतस्यासत्त्वमनुपपन्नं ननु विषयस्यासाम-र्थ्ययोगे ऽपि पूर्वज्ञानसामर्थ्यादुपजातं प्रकाशयते अस्यासत्प्रकाशनशक्तित्वादेवोक्तानुभवः सूपपन्न इति चेन्न शक्याभावे शक्तेरेवासम्भवात् नचास-देवास्य शक्यमिति वाच्यं विकल्पासहत्वात् अस-द्विज्ञानकार्यं वा तज्ज्ञाप्यं वा नाद्यः असतः कार्य-त्वासम्भवात् अन्यथा खपुष्पादिकमपि कस्य चित्कार्यं स्यात् द्वितीये ऽपि विज्ञानं विज्ञानान्तर-द्वारा ऽसत्प्रकाशकं उत स्वयमेव विज्ञानं तज्ज्ञा-पकं नाऽद्यः विज्ञानान्तरानुपपत्तेः अनवस्थापत्तेश्च नान्त्यः सदसतोः सम्बन्धासम्भवात् नह्यसम्बद्धं वस्तु प्रकाशयितुं विज्ञानसहस्रस्या ऽपि शक्यत्वं अन्यथा चक्षुषा ध्रुवप्रत्यक्षे तन्मध्यदेशवृत्तिवस्तु-

---

❀ असत्ख्यातिवादिनः

जातस्याऽपि युगपत्प्रत्यक्षत्वप्रसङ्गात् नचासदधीन-
निरूपकत्वं सद्रूपविज्ञानस्यासता तेन सम्बन्धाभ्यु-
पगमान्नोक्तदोष इति वाच्यं असतो ऽभावरूपस्य
निरूपकत्वासम्भवात् तस्मान्नासतः प्रतीतिविष-
यत्वमिति ननु माऽस्तु रजतादेर्विषयस्यासतो
भानं उक्तयुक्त्यसहत्वात् किन्तु सदेवास्तु इत्याहु-
रन्ये तत्तुच्छं विकल्पासहत्वात् तथा सद्रूपं रजतं
बाह्यमान्तरं वा न तावदान्तरं तस्य विज्ञानत्वे
मानाभावात् सुखादिवत् केवलसाक्षिवेद्यत्वलक्ष-
णान्तरत्वस्य विज्ञानत्वस्य तव पूर्वाचार्यानङ्गी-
कारेणापसिद्धान्तापातात् सत्त्वस्य विज्ञानाभिन्नत्वे
रजतं जानामीति भेदानुभवविरोधात् प्रतिपत्तुः
प्रत्ययाभेदेनाहं रजतमिति प्रतीतिः स्यात् नचा-
नुभवस्यैवात्र प्रमाणत्वात्कथं प्रमाणाभावत्वमिति
वाच्यं अविचारितत्वात् तथाचेदं रजतमिति
प्रत्ययस्यान्तरत्वे मानत्वमभिप्रेतं बाधरूपस्य नेदं
रजतमिति प्रत्ययस्य वा नाद्यः तस्येदन्त्वरज-
तत्वसामानाधिकरण्यबोधनमात्रेणोपक्षीणत्वान्ना-
न्यत्र मानत्वं नाऽपि द्वितीयः नहि बाधज्ञानं तस्य
ज्ञानाकारत्वमवगाहते अपितु पुरोवर्त्तिनि तद्भेद-

मात्रं इदंत्वेन निषिद्धस्य रजतस्य देशान्तरे सत्त्वे-
नाप्युपपत्तेः किञ्च रजतस्य ज्ञानाकारत्वं तत्स्व-
भावतो वा हेत्वन्तरनिरूप्यं वा नाद्यः विज्ञानत्वा-
वच्छिन्नमात्राणां सर्वविज्ञानानां रूप्याकारत्वप्रस-
ङ्गात् न द्वितीयः हेत्वन्तररूपवस्तुमात्रानङ्गीकारात्
अपि चान्तरस्य रजतस्य वाह्ये शुक्त्यादावध्यासो
ऽभिप्रेतः आन्तरे रजते वहिष्ठस्य वा नाद्यः तव
मते वाह्यस्यालीकत्वात्कथं तत्राध्यासः न द्वितीयः
रजतस्या ऽपि वाधार्हत्वेन तत्र वहिष्ठारोपायोगात्
नेदं रजतमिति वाधस्य विशिष्टरजतविषयकस्या-
नुभवासिद्धत्वेन तत्कल्पनासम्भवात् अत एव नेदं
रजतं किन्तु शुक्तिरिति वाह्याधिष्ठानवाधिको वाधः
अन्यथा नेदं रजतं किन्त्वान्तरमित्यनुभवापत्ते
स्तस्मान्नान्तररजतमत्र विषय इतिसिद्धम् नाऽपि
वाह्यं तस्याविषयः तथाचात्र पुरोवर्त्तिदेशान्तरस्थं
वा आद्ये पुरोवर्त्तिद्रव्यपरिणामो ऽविद्यापरिणामो
वा विषयो ऽभिप्रेतः नाद्यः शुक्तिपरिणामस्य रज-
तस्य शुक्तिसमसत्ताकत्वापत्त्या वाधायोगात्
द्वितीये तु क्लृप्तोपादानाभावे ऽविद्यायास्तदुत्पाद-
कत्वाभावात् तस्या दोषादिसहकारिमात्रत्वात्

देशान्तरवृत्तित्वाङ्गीकारे द्वितीये च न तावत्केवलश्चा-
क्षुषतद्विषयकं ज्ञानं जायते इति वक्तुं शक्यं तस्या-
सन्निकर्षात् इन्द्रियाणां समीचीनज्ञानजननसा-
मर्थ्यनियमात् नाऽपि दोषसहितात् चक्षुषस्तज्ज्ञा-
नोत्पत्तिः सम्भवति दोषस्य प्रकृतकार्य्योपजनन-
सामर्थ्यविघातमात्रहेतुत्वात् नच सदिदं रजतमिति
प्रत्यक्षं कथमिति वाच्यं आरोपितस्य स्वतः
सत्ताभावेऽपि तत्प्रत्यक्षस्याधिष्ठानसत्त्वविषयत्वात्
तस्माद्देशान्तरवर्त्तिरजतारोपो मनोरथमात्र एवेति
नात्मख्यातिवाद सम्भवति सिद्धं अन्येतु इदं-
रजतमिति विशिष्टज्ञानमेव नास्ति प्रमाणाभावात्
सर्वेषामपि प्रत्ययानां यथार्थत्वेन भ्रमस्यैवासिद्धेः
विमताः सर्वे प्रत्ययाः यथार्थाः प्रत्ययत्वात् अयं
घट इत्यादिप्रत्ययवदित्यनुमानात् नच प्रवृत्त्य-
ऽन्यथानुपपत्तेरेव मानत्वात्कथमप्रमाणत्वमिति
वाच्यं प्रवृत्तेरन्यथोपपन्नत्वात् तथाहि इदमिति
ग्रहणात्मकं रजतमितिस्मरणात्मकं तयोः स्वरूप-
तो विषयतश्चागृहीतसंसर्गयोर्ज्ञानयोः प्रवर्त्तकत्वात्
दुष्टकरणस्य रजतार्थिनः पुंसः पुरोवर्त्तिनि प्रवृत्तिः
सूपपन्ना अन्यथा ज्ञानस्यायथार्थत्वेन तत्र विश्वासा-

सम्भवात् ज्ञानस्य व्यभिचारित्वे विश्वासः किं निबन्धन इतिवचनात् तस्य भ्रमत्वासिद्धेरित्याहुस्तच्चिन्त्यं तत्र यदुक्तं विशिष्टज्ञाने प्रमाणाभावस्तत्साहसमात्रं पुरोवर्त्तिनि रजतार्थिनः प्रवृत्तिः विशिष्टानुभवसाध्या प्रवृत्तित्वात्सम्वादिप्रवृत्तिवदित्यनुमानस्यैव मानत्वात् सर्वप्रत्ययानां यथार्थत्वकथा ऽपि विचारशून्या तेषां स्वरूपेण यथार्थत्वे ऽपि विषयवाधावाधाभ्यां यथार्थायथार्थत्वयोरवश्यंभावेनाकामैरपि स्वीकार्यत्वात् इतरथा नेदं रजतमिति वाधो न स्यात् अप्रसक्तनिषेधासम्भवात् नच निषेधस्य व्यवहार एव विषयो न ज्ञानं नाऽपि तद्विषयो रजतादिरिति वाच्यं विषयनिषेधस्यानुभवसिद्धत्वात् नेदं रजतमित्यत्र व्यवहारोल्लेखाभावाच्च नच प्रवृत्तेरन्यथासिद्ध्या तस्याप्रयोजकत्वमितिवाच्यं तर्हि सर्वदा प्रवृत्तिप्रसङ्गात् नच स्वतन्त्रोपस्थितेष्टभेदाग्रहात्प्रवृत्तिरिति वाच्यं लाघवादिष्टोपस्थितेरेव प्रवर्त्तकत्वोपपत्तेः नच रजतस्मरणमेव प्रवर्त्तकमास्त्विति वाच्यं स्मृतिविषयस्य देशान्तरवृत्तितया पुरोवर्त्तिनि प्रवृत्त्यसम्भवात् यदप्युक्तं अगृहीतभेदयोर्ज्ञानयोः प्रवृत्तिहेतुत्वं

तदपि मनोरथमात्रं तथात्वे इदं पश्यामि रजतं स्मरामीति स्वार्थ विवेचकानुव्यवसायप्रसङ्गस्य दुर्वारत्वात् किञ्च न भेदाग्रहमात्रात्पुरुषप्रवृत्तिसम्भवः चेतनव्यवहारस्य ज्ञानपूर्वकत्वात् अन्यथा सुषुप्तावपि तत्प्रसङ्गात् उक्तानुमानस्याऽपि बाधितहेत्वाभासवत्त्वेनाप्रमाण्यं ज्ञेयं विप्रतिपत्तिज्ञानं रजतत्वप्रकारकं तत्प्रकारकप्रवृत्तिजनकत्वात् समीचीनरजतज्ञानवदित्यनुमानात् पुरोवर्त्तिरजतत्वसिद्धौ तस्य च बाधदर्शनेन मिथ्यात्वावगमात् तद्विषयकयथार्थत्वानुमानस्याऽपि बाधितत्वादयथार्थत्वसिद्धेः तस्मादख्यातिवादोऽत्यन्तासम्भवः अन्ये तु रजतमिति ज्ञानम् यथार्थमेव तद्वति तत्प्रकारकत्वाभावात् ननु तस्यायथार्थत्वे रजतार्थिनः कथं प्रवृत्तिरिति चेन्न पुरोवर्त्तिविशेष्यकरजतत्वप्रकारकरूपविशिष्टज्ञानस्य तत्प्रवर्त्तकतया क्लृप्तस्याऽत्रापि सम्भवात् भ्रमविषयस्य देशान्तरे सत्त्वेन पुरोवर्त्तीन्द्रियसंनिकर्षानन्तरं दोषवशेन देशान्तरस्थरजतात्मना पुरोवर्त्तिशुक्त्यादिद्रव्यग्रहादिदं रजतमिति प्रत्ययस्य जन्म तथा च भ्रान्त्या प्रसक्तत्वात्तद्बाधः सूपपन्न इत्याहुस्तत्तुच्छं रजतेन्द्रियसंनि-

कर्षाभावेन रजतज्ञानस्य प्रत्यक्षत्वं न स्यात् विशिष्टप्रत्यक्षे विशेषणसंनिकर्षस्य हेतुत्वात् विशेष्यसंनिकर्षवत् अन्यथा व्यवहितदण्डके ऽपि पुंसि दण्डीति प्रत्यक्षप्रसङ्गात् विशेषणसंनिकर्षस्य तत्राऽपि तुल्यत्वात् नच जन्ययथार्थप्रत्यक्ष एव विशेषणसंनिकर्षस्य कारणत्वं नतु सर्वत्रेति वाच्यं लाघवाज्जन्यप्रत्यक्षत्वावच्छिन्नं प्रत्येव तस्य कारणत्वात्सङ्कोचे मानाभावाच्च अन्यथा वह्निसंनिकर्षाभावेन संनिकृष्टे ऽपि पर्वतादौ तद्विशिष्टप्रत्यक्षभाववर्णनं तवाऽपि विरुद्धमित्यर्थः ननु विशेषणविशेष्येन्द्रियसंनिकर्षविशेषणविशेष्यासंसर्गग्रहादीनां विशिष्टप्रत्यक्षसामग्रीत्वेन रजतप्रत्यक्षसम्भवाद्रजतेन्द्रियसंनिकर्षस्याप्रयोजकत्वादुक्तविशिष्टप्रत्यक्षसामग्र्यैव रजतविशिष्टप्रत्यक्षसम्भवेन देशान्तरीयरजतत्वप्रकारकपुरोवर्त्तिविशेष्यकमिदं रजतमिति ज्ञानमन्यथाख्यातिरेव तस्मान्न भ्रमविषयस्य मिथ्यात्वमिति चेन्न भ्रमविषयरजतस्य देशान्तरसत्त्वे तत्सन्निकर्षाभावेन तज्ज्ञानस्य प्रत्यक्षत्वासम्भवात् नच विशेषणज्ञानायुक्तविशिष्टप्रत्यक्षसामग्र्या तत्प्रत्यक्षसम्भव इति वाच्यं विशे-

षणसंनिकर्षस्यैवान्वयव्यतिरेकाभ्यां क्लृप्तकरण-
त्वावगमात् नच सोऽयं देवदत्त इति प्रत्यभि-
ज्ञानस्य प्रत्यक्षत्वं न स्याद्विशेषणसंनिकर्षाभावसा-
म्यादिति वाच्यं तत्तांशे परोक्षस्येष्टत्वात् तत्तांशवि-
षयकज्ञानस्य स्मृतित्वाभ्युपगमात् नच ज्ञानद्व-
याङ्गीकारे जातिसाङ्कर्यापत्तिरिति वाच्यं अविद्या-
तिरिक्तजडजातेरनङ्गीकारात् नच तर्हिज्ञानमेव
संनिकर्षोऽभ्युपगन्तव्य इति वाच्यं अनुमित्यादौ
विशेषणज्ञानाद्युक्तविशिष्टप्रत्यक्षसामग्र्याः सत्वे-
नाग्निप्रत्यक्षमेव स्यात् तदनुमानादावतिव्याप्तिश्च
किञ्च का वा ज्ञानप्रत्यासत्तिर्नाम यदवच्छेदेन
यदनुभूतं तदवच्छेदेन तज्ज्ञानं प्रत्यासत्तिरिति
चेन्न तर्हि शुक्तित्वावच्छेदेन रजतस्य पूर्वानुभूतत्वा
त्कथं तज्ज्ञानस्य प्रत्यासत्तित्वं अन्यथा सामान्य-
प्रत्यासत्त्यङ्गीकारेऽपि प्रमाणाभावात् नच व्याप्ति-
ग्रहान्यथानुपपत्तिरेव मानमिति वाच्यं सिद्धान्ते
सन्निकृष्टधूमादिव्यक्तिविषयत्वेन सर्वधूमाविषय-
तया तस्य सामान्यप्रत्यासत्तिकल्पनायोगात् नच
धूमो वह्निव्यभिचारी नवेति संशयानुपपत्तिरिति
वाच्यं तस्य तत्तद्धूमत्वेन वह्निसामानाधिकरण्य-

निश्चयो ऽपि प्रसिद्धे धूम एवाप्रसिद्धधूमविषयत्वात् न सामान्यप्रत्यासत्तौ किञ्चिदपि मानमिति सिद्धं नच दोष एव प्रत्यासत्तिरिति वाच्यं तस्य स्वतन्त्रा-न्वयव्यतिरेकाभ्यां भ्रमकारणत्वेन क्लृप्तस्य तत्त्वे मानाभावात् किञ्च विशेष्येन्द्रियसन्निकर्षत्वेन कारणत्वे गौरवात् विषयेन्द्रियसंनिकर्षत्वेन तद्वाच्यं तत्राऽपि न किञ्चिद्विषयेन्द्रियसन्निकर्षत्वेन तथात्वे ऽतिप्रसङ्गात् किन्तु यावद्विषयेन्द्रियसंनिकर्षत्वेन प्रत्यक्षकारणत्वमवश्यं वक्तव्यं तथात्वे विशेषण-सन्निकर्षस्याऽपि कारणत्वं भवत्येव अन्यथोष्णी-षाद्युते कुण्डलिनि कुण्डलविशिष्टप्रत्यक्षत्वापत्तेः नचेष्टापत्तिरितिवाच्यं अनुभवादर्शनात् तस्माद्दे-शान्तरीयविषयस्यान्यत्र सत्वे ऽपि तदिन्द्रिय-सन्निकर्षाभावेन तज्ज्ञानस्य प्रत्यक्षत्वं सर्वथा ऽपि न सम्भवत्येव अन्यथा रजतार्थिनो ऽपि रजतदेशे एव प्रवृत्तिः स्यान्नतु पुरोवर्तिनि ज्ञानस्य स्वविषय एव प्रवर्त्तकत्वनियमात् नच रजतज्ञानं शुक्तिमपि विषयीकरोतीति पुरोवर्त्तिनि रजतार्थिप्रवृत्तिः सूपप-न्नेति वाच्यं अन्याकारज्ञानस्यान्यविषयत्वे सम्विद्वि-रोधात् ननु ज्ञानं यत्रेष्टतावच्छेदकवैशिष्ट्यं विषयी-

करोति तत्रैव पुरुषं प्रवर्त्तयतीति नियमाद्भ्रान्ति
ज्ञानमपि शुक्तौ रजतत्ववैशिष्ट्यं विषयीकुर्वत्
रजतार्थिनं प्रवर्त्तयतीत्यदोष इति चेन्न रजतत्वस्य
स्वतन्त्रोपस्थित्यभावेन शुक्तौ तदारोपानुपपत्तेः
नहि पूर्वं रजतत्वं विशेष्यत्वेनानुभूतं येन तस्य
स्वतन्त्रोपस्थितिः स्यात् अपि तु रजतविशेषण-
त्वेन तथात्वे तस्य स्वातन्त्र्येणानुपस्थिततया
तत्संसर्गारोपो ऽनुपपन्न एव नच रजतोपस्थिति-
सामग्र्यां सत्त्यां रजतत्वस्य स्वातन्त्र्येणोपस्थिति-
रिति वाच्यं रजतत्वस्य जातित्वेन तत्परतन्त्रत्वात्
तस्माच्छुक्तौ रजतत्वारोपो न सम्भवत्येव किञ्च
तन्मते आरोप्यस्य देशान्तरस्थत्वेन वाधो ऽपि न
स्यात् ज्ञानस्य स्वरूपेण वाधानर्हतया विषयवाधा-
त्तस्य वक्तव्यतया विषयस्यान्यत्र सत्त्वेन तद्बाधानु-
पपत्तेः नच तद्वैशिष्ट्यस्यैव वाधइति वाच्यं तस्यास-
द्रूपतया ख्यातिवाधयोरसम्भवात् अन्यथा खपुष्पा-
देरपि ख्यातिवाधौ तर्ककुशलैः सम्भावनीया-
वित्यर्थः परिशेषाद्भ्रमविषयभूतं रजतं भ्रमकाल
एव तत्रैवानिर्वचनीयं जायते इति स्वीकर्त्तव्यं नच
तज्जन्मसामग्र्यभावात्कथं रजतोत्पत्तिरिति वाच्यं

तस्या लोकप्रसिद्धरजतोत्पत्तिसामग्रीविलक्षणायाः सत्त्वात् का सेति चेत् श्रूयतां अधिष्ठानेन्द्रियसन्निकर्षानन्तरमिदमाद्याकारवृत्तौ सत्यां इदमवच्छिन्नचैतन्यनिष्ठाशुक्तित्वप्रकारकाविद्यासादृश्यदर्शनसमुद्बुद्धसंस्कारसहकृता रजताकारेण तज्ज्ञानाकारेण परिणमते तदेव तस्य जन्म अज्ञानोपादेयत्वादेवाधिष्ठानतत्त्वज्ञानेन तन्नाशः अनिर्वचनीयत्वादेव रजतस्यामिथ्यात्वं तस्मादनिर्वचनीयमेव रजतमस्याः प्रत्यक्षप्रतीतेर्विषय इतिसिद्धम् अत्र ब्रूमः एतावन्तं कालमसदेव रजतमभादित्यसत्यस्यैव तत्रानुभवात् नचानिर्वाच्यत्वैकदेशसत्त्वाभावविषयत्वेनासद्बुद्ध्युपपत्तिः सुकरेति वाच्यं असद्भेदमादाय सदेव रूप्यमभादित्यादिप्रतीत्यापत्तेः सत्यं ज्ञानमित्यत्र सत्यमित्यस्यासद्भेदविषयत्वापत्त्या ब्रह्मणः सद्रूपत्वासिद्धिप्रसङ्गाच्च अपिचेदं रजतमित्यादिप्रतीतेः प्रत्यक्षत्वाङ्गीकारे विषयस्य प्रमितत्वेन सत्यत्वप्रसङ्गात् किञ्चेदं रजतमित्यादिप्रतीतेरिन्द्रियसन्निकर्षादिरूपप्रत्यक्षसामग्रीजन्यत्वं वा तवाभिप्रेतवृत्तिविषयत्वं वा नाद्यः आवयोरनङ्गीकारात् द्वितीये वृत्तिव्याप्यं वोभयव्याप्यं वा

नाद्यः ब्रह्मनदवाध्यत्वापत्तेः नद्वितीयः वृत्तिं विना फलव्याप्यत्वासम्भवात् नतृतीयः उभयव्याप्यत्वे ऽपि घटादिवत् तात्कालीनवाधानुपपत्तेः नच मन्मते प्रातीतिकरूप्यादेः साक्ष्येकवेद्यत्वाङ्गीकारेण वृत्तेस्तत्प्रयोजकसन्निकर्षादेश्चानुपयोगान्नोक्तदोषावकाश इति वाच्यं चाक्षुषवृत्तिं विना साक्षिणा तद्ग्रहणासम्भवात् अन्यथाऽन्धस्या ऽपि शुक्तौ रूप्यप्रत्ययापत्तेर्दुर्वारत्वात् सुखदुःखादीनामपि चाक्षुषत्वापत्तेरित्यलं विस्तरेण किञ्च यदुक्तमज्ञानोपादेयं रजतमधिष्ठानतत्त्वज्ञानात्तन्नाश इति तत्तुच्छं तथात्वे रूप्यं जातं नष्टं चेति धीप्रसङ्गात् त्रैकालिकनिषेधायोगाच्च ननु रजतोत्पत्तिविनाशधीभ्रान्तिदशायां मायाया वाधसमये वा नाद्यः पूर्वोत्पन्नाविनष्टाधिष्ठानरूपशुक्त्यभिन्नतया ग्रहस्यैव तद्धीप्रतिवन्धकत्वात् नद्वितीयः अत्यन्ताभावस्यैव प्रतियोगिग्रह इव तदुत्पादविनाशे ग्रहे ऽपि प्रतिवन्धकत्वादिति चेन्न कदाप्यप्रतीतायां प्रातीतिकस्यप्रातीतिकोत्पत्तौ मानाभावात् अथाणां सत्वाऽत्यंताभावबुद्धेरेवासम्भवाच्च त्रैकालिकव्याप्यवृत्त्यभावाधिकरणे उत्पत्त्यादेर्व्याहतत्वाच्च नच पारमार्थिकत्वे-

नैव तन्निषेधान्न स्वरूपेणोत्पुत्पाद्युपपत्तिरविरुद्धेति वाच्यं पारमार्थिकत्वस्याऽपि रूप्यवत्प्रतीतिमात्र-शरीरत्वेन तत्काले ऽसत्त्वात् तस्या ऽपि पारमार्थि-कत्वेनैव निषेधे ऽनवस्थाप्रसङ्गात् स्वरूपेण निषेधे तदुत्पादाद्यसम्भवात् अयमभिप्रायः नेदं रजत-मितिनिषेधस्य त्रैकालिकत्वाभ्युपगमे को वा तद्वि-षयः प्रातीतिकं रजतं वा अर्थक्रियाकारित्वावच्छिन्न-व्यावहारिकं वा पारमार्थिकसत्तावच्छिन्नं वा आप-णस्थरूप्यं वा नाद्यः वर्त्तमानस्य प्रतिपन्नोपाधिसम्ब-द्धस्य त्रैकालिकनिषेधासम्भवात् नाऽपि द्वितीयः अर्थक्रियाकारित्वाभावमात्रेण निषेधायोगात् अ-न्यथा निर्धर्मकब्रह्मणो ऽपि तत्त्वापत्तेर्वक्तुमशक्य-त्वात् नाऽपि तृतीयः स्वतन्त्रसत्ताहीनत्वस्यास्माभि-रपि स्वीकारेणाऽऽवयोरभीष्टसाम्यात् वस्तुतस्तु पारमार्थिकत्वस्य तत्राप्रसक्तत्वेन तन्निषेधस्यैवा-सम्भवात् नाऽपि चरमः तस्याकाशादिप्रपञ्चान्तः-पातित्वेनाप्रसक्तेः अन्यथाख्यातिप्रसङ्गाच्च निषे-धस्योत्तरकालिकमात्रत्वे ऽनित्यत्वमात्रमेव स्यात् नतु त्वदभीष्टत्वमस्मदिष्टञ्च किञ्च रूप्यस्याज्ञानो-पादेयत्वे ऽज्ञानं रूप्यमिति प्रत्ययः स्यात् उपादा-

नस्योपादेयानुविद्धतया भानानियमात् ननु तवापि प्रकृतेर्घटाद्यनुविद्धतया भानापत्तेः नतु तदस्ति किन्तु मृद्धट इति मृत्त्वेनैव भानादिति चेन्न प्रकृतित्वरूपावस्थाया अज्ञातसत्ताकत्वेन घटावस्थाने ऽपि प्रातीतिकरूप्याद्युपादानस्य प्रातीतिकस्याज्ञानस्याज्ञातसत्ताकत्वासम्भवात् नोक्तदोषावकाशः नाऽपि तस्यानिर्वचनीयत्वं अनिर्वचनीयत्वस्याद्याऽप्यसिद्धत्वात् नाऽपि तस्य मिथ्यात्वं पूर्वमेव निरस्तत्वात् नाऽप्यधिष्ठानतत्त्वज्ञानबाध्यत्वं वृक्षप्रतिबिम्बस्थले तज्ज्ञानोत्तरसमये वृक्षाधोग्रत्वादिभ्रमस्य तादवस्थ्यदर्शनाद्व्यभिचारः नच सोपाधिकप्रतिबिम्बभ्रमोपादानाज्ञानमुपाधिनिवृत्तौ सत्यां ज्ञानेन निवर्त्तते न केवलेनेति वाच्यं स्वप्रागभावनिवृत्ताविवाज्ञाननिवृत्तावपि ज्ञानस्येतरानपेक्षत्वादिति अन्यथा केवलज्ञाननिवर्त्यत्वाभावे कल्पितत्वासिद्धेः एतदुक्तं भवति ज्ञानं द्विविधं परोक्षापरोक्षभेदात् तत्र परोक्षतत्त्वज्ञानस्याज्ञाननिवर्त्तकत्वे शङ्खश्वैत्यानुमित्या ऽप्यज्ञाननिवृत्तौ भ्रमानुत्पत्तिप्रसङ्गात् अपरोक्षतत्त्वज्ञानस्य च परोक्षे ऽभावेन परोक्षाध्यासस्यानिवृत्तिप्रसङ्गाच्च रूप्यं दृष्ट्वा ऽधि-

ष्ठानतत्त्वज्ञानं विना निवृत्तस्य पुंसो ज्ञाननिवृत्त्य-
भावेन मिथ्यात्वे मिथ्यात्वेन तत्त्वज्ञानैकनिवर्त्त्ययोः
रूप्यरूप्यज्ञानाकाराविद्यापरिणामयोर्निवृत्त्यभावेन
रूप्यधीसामग्रीसद्भावेन रूप्यप्रतीतेर्दुर्वारत्वाच्च
अपरोक्षतत्त्वज्ञानस्याज्ञाननिवर्त्तकत्वे तु त्वन्मते
विम्वप्रतिविम्वयोरैक्यपरस्य प्रत्यक्षतया ऐक्या-
ज्ञानाभावेनोपाधिवशादपि तव भेदभ्रमायोगाच्च
घटत्वेन साक्षात्कृते घटत्वाज्ञानाभावेन पटोऽयमिति
वाक्याभासाद्भ्रमानुत्पत्तिप्रसङ्गाच्च इत्यलं विस्तरेण
तस्मादनिर्वाच्ये प्रत्यक्षप्रमाणं नास्तीति सिद्धम् ननु
विमतं सत्त्वरहितत्वे सत्यसत्त्वरहितत्वे च सति स-
त्त्वासत्त्वरहितं वाध्यत्वात् दोषप्रयुक्तभानत्वाद्व्यति-
रेके ब्रह्मवदित्यनुमानस्यानिर्वचनीयवादे प्रामाण्य-
मिति चेन्न सत्त्वासत्त्वयोः परस्परविरहरूपयोरेकत्र
व्याहतत्वात् ब्रह्मवत्सत्त्वराहित्ये ऽपि सद्रूपत्वे नानि-
र्वाच्यत्वासिद्ध्या ऽर्थान्तरत्वाच्च साध्याप्रसिद्धेश्च
तथाहि सत्त्वासत्त्वयोः सत्ताजातितदभावविवक्षायां
अर्थक्रियाहेतुत्वाहेतुत्वविवक्षायां वा जगति सत्त्व-
राहित्यांशे वाधः तत्र सत्ताजातेरर्थक्रियाहेतुत्वस्य
च सत्त्वात् शुक्तिरूप्यादावसत्त्वराहित्यांशे वाधः तत्र

सत्ताजात्यभावस्यासत्त्वस्यार्थक्रियाहेतुत्वाभावस्य च सत्त्वात् बाध्यत्वाबाध्यत्वे वा प्रामाणिकत्वाप्रामाणिकत्वे वा सत्त्वासत्त्वे विवक्षिते चेत् उभयत्रासत्त्वराहित्यांशे बाधः तव मते त्रैकालिकबाध्यत्वस्य पारमार्थिकाप्रामाणिकत्वस्य चासत्त्वस्याकाशादौ शुक्तिरूप्यादौ च सत्त्वेन तदभावस्यासत्त्वात् किञ्च शून्यत्वाशून्यत्वे विवक्षिते चेदुभयत्रशून्यत्वाभावस्य सत्त्वलक्षणस्याङ्गीकारेण तद्राहित्याभावात् सत्त्वराहित्यांशे बाधः अबाध्यत्वशून्यत्वे वा प्रामाणिकत्वाशून्यत्वे वा ऽभिप्रेते चेदुक्तन्यायेनोभयत्राप्यसत्त्वराहित्यांशे बाधः ब्रह्मशून्यत्वे ऽभिप्रेते चेदबाध्यत्वसत्त्वाभ्यामप्युपपत्त्या अर्थान्तरं किञ्च निर्धर्मकस्य ब्रह्मणो ऽपि सत्त्वादिराहित्येन तस्या ऽपि पक्षान्तः पातित्वेनानिर्वचनीयत्वसिद्ध्या विपक्षाभावेन दृष्टान्तासिद्धेः अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते इति शास्त्रात् किञ्चोक्तलक्षणस्य सर्वथा ऽप्यप्रसिद्धत्वे कथं तत्रानुमानमन्यथा शशशृङ्गादीनामप्यनुमेयत्वापत्तेः ननु सत्त्वासत्त्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसादिवत् साध्यरूपसत्त्वमसत्त्वा-

धिकरणानिष्ठं असत्त्वं वा सत्त्वाधिकरणानिष्ठं धर्मत्वात् रूपादिवदिति सामान्यतः सा सिद्धिरिति चेन्न सत्त्वासत्त्वे समानाधिकरणाभावप्रतियोगिनी न भवतः परस्परात्यन्ताभावरूपत्वात् घटत्वाघटत्व-वत् सत्त्वमसत्त्वानधिकरणानिष्ठं असत्वं वा सत्त्वान-धिकरणानिष्ठम्भवति तत्प्रतिषेधरूपत्वात् यथा ऽनि-त्यत्वन्नित्यत्वानधिकरणानिष्ठं तद्वत् घटत्वाघटत्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवत् कल्पितत्वमकल्पितत्वानधिकरणानिष्ठं धर्मत्वात् रूपरसवदित्याभाससाम्यात् किञ्च तवा-भिप्रेतं ब्रह्म सत्त्वरहितत्वे सत्यसत्त्वरहितत्वे च सति सत्त्वासत्त्वरहितं सर्वधर्मशून्यत्वात्सर्वप्रमाणहीन-त्वाच्च यन्नैवं तन्नैवमस्मदभीष्टौपनिषदब्रह्मवदित्यपि वक्तुं शक्यत्वात् नापि दोषप्रयुक्तभानत्वादित्यस्य सद्धेतुत्वं स्वरूपासिद्धत्वात् नहि मूलाज्ञानस्य दोष-प्रयुक्तभानत्वं वक्तुं युक्तं अज्ञानात्प्राक् तत्प्रयोजक-दोषान्तरस्याभावात् सर्वदोषाणामपि तत्कार्यत्वे-नोत्तरभावित्वात्स्वस्यैव दोषरूपत्वेन स्वप्रयोज-कत्वाभ्युपगमे आत्माश्रयत्वापत्तेः दोषान्तरकल्पने चानवस्थादिप्रसङ्गात् तस्मादुक्तानुमानस्यानिर्वच-

नीयत्वे मानत्वं मनोरथमात्रमेवेति सिद्धं ननु विमतं सत्त्वेन्न वाध्येतासत्त्वेन्न प्रतीयेत वाध्यते प्रतीयते च तस्माद्बाधान्यथानुपपत्तेः प्रतीत्यन्यथाऽनुपपत्तेश्चात्र मानत्वमिति चेन्न असम्भवेनाभासमात्रत्वात् तथाहि सेतुदर्शनात्सत एव ब्रह्महत्यादिजन्यपापस्य वाधश्रवणेन सतो वाधाभावस्यानियमात् नच तस्य नियमादिसहकृतदर्शनेन निवृत्तिर्न केवलदर्शनेनान्यथा तत्रत्यम्लेच्छानामपि दर्शनसाम्यात्पापनाशप्रसङ्गः प्रकृते नेदं रजतमितिवद्बाधज्ञानमात्रवाध्यत्वाद्विषमदृष्टान्त इति वाच्यं नियमादीनामधिकारित्वसम्पादनोपक्षीणत्वेन निवृत्तौ तेषामसहकारित्वात् केवलदर्शनादेव सतः पापस्य वाधात् दृष्टान्तसिद्धिः सुकरा म्लेच्छादीनामधिकारित्वाभावान्नातिप्रसङ्गः अन्यथाविवेकविरागादिसाधनचतुष्टयस्याधिकारिविशेषणस्य मूलाज्ञाननिवृत्तौ ज्ञानसहकारित्वापत्तेस्त्वया ऽप्यवर्जनीयत्वात् नियमविध्यङ्गीकारवैयर्थ्याच्च म्लेच्छादीनामपि वेदान्तार्थभूतम्लेच्छभाषाप्रबन्धादिभिरप्यज्ञानवाधो मोक्षापत्तिश्च स्वीकार्यौ स्यातां पण्डितम्मन्यैः तस्मात्सतो वाधसम्भवेनोक्तार्थापत्तेराभासत्वमिति

पूर्वमेवोक्तत्वाद्वक्ष्यमाणत्वाच्च किञ्च शशशृङ्गयोरत्य-न्ताज्ञानवतो जडस्य पुंसः शशशृङ्गशब्दश्रवणात्प-रोक्षभ्रमस्याऽपि सम्भवेन द्वितीयार्थापत्तेरपि प्रमा-णाभासमात्रत्वस्य परैः स्वीकारान्न प्रामाण्यमिति विवेकः किञ्च सद्वेदित्यादिवाक्यवृत्तिसच्छब्दः किमर्थक इति विवेचनीयं प्रामाणिकः सच्छब्द-वाच्यः तत्र प्रमाणं च यथार्थतत्त्वनिश्चायकमेव तच्च लक्षणया शुद्धब्रह्मबोधकं वेदान्तशास्त्रमेवेति चेन्न स्वप्रकाशचिन्मात्रे ब्रह्मणि तस्य वैयर्थ्ययोगेन प्रामा-णिकत्वाबाध्यत्वयोर्व्याप्त्यसिद्धेः यत्र यत्र प्रामाणि-कत्वं तत्र तत्राबाध्यत्वमिति व्याप्तेर्ब्रह्मणि व्यभिचा-रात् निर्विशेषचिन्मात्रस्याबाध्यत्वयोगे ऽपि तत्र प्रा-माणिकत्वाभावादित्यर्थः प्रत्युत निर्विशेषब्रह्माभिन्ने एव प्रामाणिकत्वस्य सत्त्वेन तस्य बाध्यत्वे ऽपि तेन सह व्याप्तिदर्शनात् प्रपञ्चे बाध्यत्वप्रामाणिक-त्वयोः सत्त्वात् तथात्वेच तस्यानिर्वचनीयत्वासिद्धेः नच ब्रह्मणः स्वप्रकशत्वे ऽपि व्यवहारप्रतिबन्धका-ज्ञाननिवृत्त्यर्थं प्रमाणप्रवृत्तेः साफल्यमितिवाच्यं स्वप्रकाशे प्रतिबन्धकाज्ञानासम्भवादितिपुरस्तादे-वोक्तं प्रत्यक्षाप्रामाण्ये च तन्निबन्धनं शुक्तिरूप्यादे-

रप्रामाणिकत्वं न स्यात् वाध्यत्वाकारेण वाध्यस्याऽपि प्रामाणिकत्वेन तस्याप्रामाणिकत्वं न स्यात् सत्त्वेन प्रामाणिकत्वे चात्माश्रयापत्तेः मानान्तराप्राप्तस्य तत्त्वावेदकश्रुतिवेद्यत्वेन प्रामाणिकस्य ब्रह्मनिष्ठनिर्विशेषत्वादिब्रह्मधर्मस्य त्वन्मते ब्रह्मान्यत्वेन वाध्यत्वेन व्यभिचारात् तत्र प्रामाणिकत्वं वर्त्तते ऽवाध्यत्वं नास्तीत्यर्थः नेदं रजतमिति शुक्तिरूपादिवाधस्य तत्त्वावेदकत्वेन तदप्रामाणिकत्वानापादनाच्च अतत्त्वावेदकव्यावहारिकप्रमाणवाधितस्याऽपि शुक्तिरूप्यादेरद्वैतवस्तुवत् स्वतः प्रामाण्यप्रयुक्तपारमार्थिकत्वापत्तेः नचास्य तत्त्वावेदकाद्वैतश्रुतिवाध इति वाच्यं तस्याः भेदश्रुतिवत्प्रत्यक्षप्राप्तव्यावहारिकरूप्यनिषेधानुवादकत्वोपपत्तेरिति संक्षेपः ननु सत्ताजातिमान्वा ऽर्थक्रियाकारी वा सत्पदार्थोऽस्त्विति चेन्न त्वन्मते प्रपञ्चे व्यभिचारात् अवाध्यत्वं सत्पदवाच्यमिति चेन्न यदवाध्यं तद वाध्यमेवेति साध्याविशेष्यात् एतेनावाध्यत्वावच्छेदकावच्छिन्नं सत्पदार्थ इत्यपि निरस्तमप्रामाणिकत्वादन्यस्य तदवच्छेदकस्याभावात् नाऽपि असत एव विलक्षणमिह सत्पदार्थ इति वाच्यं अत्राव-

धारणास्य सदसद्विलक्षणं नचेदित्यर्थकत्वेनासद्वि-
लक्षणाभावसिद्ध्या प्रतियोग्यसम्भवेनापादका-
सिद्धेः विस्तरस्त्वाकरे द्रष्टव्यः किञ्च न वाध्येतत्यत्र
वाधो नाम किंज्ञानेन निवृत्तिः प्रतिपन्नोपाधौ
त्रैकालिकनिषेधो वा नाऽऽद्यः ज्ञाननिवर्त्यस्य सत्त्वे
नैव व्याप्तेः सम्भवात् घटज्ञानात्पटादिज्ञानस्य
सत्यस्यैव निवृत्तिदर्शनात् न द्वितीयः शुक्तिज्ञाना-
द्रजतवाधवत् ब्रह्मज्ञानात्सर्ववाधादर्शनात् अन्यथा
सर्ववाधस्वीकारे औपनिषदसिद्धान्तसम्प्रदायोच्छे-
दप्रसङ्गात् ब्रह्मसाक्षात्कारवतो द्वितीयदर्शनाभावे-
नोपदेशादिप्रपञ्चदर्शनासम्भवात् उपदेष्टृणाञ्च गुरु-
शिष्यादिभेदादर्शनात् तद्दर्शिनामज्ञत्वेनाचार्यत्वा-
सम्भवात् "यस्त्वं पश्यसि तद्वद" ॥ "उपदेक्ष्यन्ति
ते ज्ञानं ज्ञानिन" इति श्रुतिस्मृतिभ्यां ब्रह्मदर्शि-
नामेवोपदेष्टृत्वोक्तेः अन्यथाऽन्धपरम्पराप्रसङ्गात् जी-
वन्मुक्तेर्निरस्यमानत्वाच्चेत्यलं प्रासङ्गिकेन किञ्चा-
सन्नाम किं सत्ताहीनं वा वाध्यं वा पदवृत्त्यविषयं-
रूपानिरुपाख्यं वा निरुपाख्यत्वावच्छेदकावच्छिन्नं
वा निःस्वरूपं वा नाऽऽद्यः सत्ताहीनस्याऽपि निर्धर्म-
कस्य ब्रह्मणः प्रतीत्या व्यभिचारात् सामान्यादौ

व्यभिचाराच्च नद्वितीयः शुक्तिरूप्यादेर्बाध्यस्याऽपि प्रतीत्या व्यभिचारात् न तृतीयः पदवृत्त्यविषये वाक्यार्थे प्रतीतिसत्त्वेन व्यभिचारात् पदवृत्त्यविषयत्वेऽपि तत्र प्रतीत्यभावो नास्तीति व्यभिचारपदार्थः ननु वाक्यार्थरूपपदवृत्तिविषयत्वस्य तत्र भावेनाविषयत्वाभावान्नोक्तव्यभिचारावकाश इति चेन्न निरुपाख्यत्वपदवृत्त्यविषयत्वादिरूपपदवृत्ति विषयताया निरुपाख्ये ऽपि सत्त्वेन व्यभिचारस्य तादवस्थ्यात् निरुपाख्यं चेन्न ख्यायेतेति साध्याविशेष्याच्च अत एव न चतुर्थः निरुपाख्यत्वान्यस्यावच्छेदकस्याभावाच्च नाऽपि पञ्चमः निःस्वरूपस्य स्वरूपेण निषेधप्रतियोगित्वे तस्य प्रपञ्चसाधारणतया तत्र व्यभिचारात् नच पारमार्थिकत्वाकारेण निषेधो न स्वरूपतः प्रपञ्चस्येति वाच्यं निर्द्धर्मकब्रह्मण्यपि तेन रूपेण निषेधात्तस्याऽपि मिथ्यात्वापत्तेः अथ न प्रतीयेतेत्यत्र को वाऽर्थो ऽभिप्रेतः प्रतीतिमात्रमिति चेन्न असन्नृशृङ्गमित्यादिवाक्यादसतो ऽपि प्रतीतेः अन्यथा असतो प्रतीतावसद्वैलक्षण्यज्ञानासिद्धेः असत्प्रतीतिनिरासानुपपत्तेश्च असत्पदस्यानर्थकतायां च प्रयुक्तं पदानां सम्भूयकारित्व-

योगेनासन्नप्रतीयतेति वाक्यस्याबोधकत्वापत्तेश्च असतो ऽसत्त्वेनाप्रतीतावसद्व्यवहारानुपपत्तेश्च अ-सद्विलक्षणाज्ञप्तौ ज्ञातव्यमसदेव हितस्मादसत्प्रीति-श्च कथं तेन निवार्यत इत्यभियुक्तोक्तेः नच सत्त्वेन प्रतीतिरभिप्रेतेति वाच्यं विकल्पासहत्वात् सत्त्वेन प्रतीतिः प्रमारूपा निषिध्यते भ्रमरूपा वा नाऽद्यः इष्टापत्तेः अस्मन्मतेऽप्यविशेषात् नद्वितीयः उक्त-न्यायेनासतः प्रतीतिसिद्धौ सतो ऽसत्त्वेनवारूप्य-स्यैव रूप्यत्वेन भ्रान्तित्वात् असतः सत्त्वेन प्रतीत्यु-पपत्तेः अपरोक्षप्रतीतिविवक्षितेति चेन्न यदसत्तन्न प्रतीयते इतिव्याप्तिज्ञानप्रत्यक्षत्वावश्यम्भावित्वात् शशशृङ्गाद्यत्यन्ताभावस्य प्रत्यक्षतापत्त्या सतो ऽसत्वासिद्धेश्च नच सत्त्वेनापरोक्षप्रतीतिर्विवक्षितेति वाच्यं भ्रान्तित्वादेव तदुपपत्तेः तस्मान्नोक्तयोरर्था-पत्त्योरत्र प्रामाण्यमिति सिद्धं "नच नासदासीन्नो सदासीत्तम आसी"दित्यादिश्रुतीनामत्र प्रामाण्य-मिति वाच्यं तासां स्थूलसूक्ष्मनिषेधपरत्वेन पूर्वै-र्व्याख्यातत्वात् यद्वा सदसच्छब्दयोः पञ्चभूतपर-त्वात्सामञ्जस्यं "यदन्यद्वायोरन्तरिक्षाच्चैतत्सत् वा युरन्तरिक्षं चास"दिति श्रुत्यन्तरात् अन्यथा "ना-

सदासी"दित्यत्राप्रसक्तनिषेधापत्तेः नच नो सदासी-
दित्यनेनासद्भिन्नत्वे उक्ते ऽसत्त्वप्रसक्तिःतदानीमिति
वैयर्थ्यापत्तेः न चासीद्रजो व्योमेति रजोनिषेधादा-
वेव तदन्वय इति वाच्यं नो सदासीदित्यनेनैव रजः
प्रभृतिनिषेधसिद्धौ पृथक् तन्निषेधवैयर्थ्यात् नच "नो
सदासी"दित्यत्र सच्छब्दस्य परमार्थसत्त्वेन व्याव-
हारिकसतो रजःप्रभृतेर्निषेधस्य न ततः प्राप्तिः रजः
प्रभृतीनां स्वरूपेण तम सश्च पारमार्थिकत्वेन निषेध
इतिवाच्यं "आनीदवातं स्वधयातदेक" मितिवा-
क्यशेषाद् ब्रह्मणो ऽप्यनिर्वचनीयत्वापत्तेः नच
ब्रह्मसत्यत्वप्रतिपादकश्रुत्यन्तरविरोधान्न तत्परत्वं
शास्त्रस्येति वाच्यं "विश्वं समं प्राणा वै सत्यं तेषा-
मेष सत्य" मित्याद्यन्वयश्रुतेः "असत्यमाहुर्जगदे-
तदज्ञा"इतिव्यतिरेकश्रुतेश्च विरोधस्य प्रकृते ऽपि
सत्त्वेनोक्तन्यायसाम्यात् उक्तशास्त्रस्य नाऽत्र प्रामा-
ण्यमितिसिद्धं अतः सर्वप्रमाणशून्यत्वमेवास्यानि-
र्वचनीयवादस्येत्यलं विस्तरेण एतावता ग्रन्थेन
मिथ्याज्ञानस्य तत्कारणस्य भावादितितृतीयो हेतु-
रपि निरस्तः ॥ इति पराभिमतानिर्वचनीयवाद-
विषयप्रमाणगिरिनिपातः ॥ २० ॥

अथ यदप्युक्तं सत्यमानिदं चैतन्यं अनृतं युष्मदर्थो ऽचेत्तनस्तयोर्मिथुनीकरणमध्यासः तत्राहमित्याध्यात्मिककार्याध्यासेषु प्रथमो ऽध्यास इति "सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिको ऽयं लोकव्यवहार" इति श्रीभगवत्पादभाष्यकारोक्तेस्तस्मादहमर्थो नात्मा सुषुप्तौ स्वप्रकाशस्याऽऽत्मनः सत्त्वे ऽप्यनेवंविधस्याहमर्थस्याभावात् "अथातो हङ्कारादेशः अथात आत्मादेश" इत्यादिश्रुत्योभयोः पार्थक्योपदेशात् "अहङ्कार इतीयं मे भिन्नाप्रकृतिरष्टधे"ति स्मृत्या च क्षेत्रान्तःपातित्वोपदेशादहमर्थो नात्मा सुषुप्त्याद्यवस्थाऽननुगतत्वात् स्थूलदेहादिवत् करणत्वाच्च चक्षुरादिवदित्यनुमानाद्वेत्यादि तन्न सम्यक् असम्भवात् तथाहि इदं रजतमिदं जलमयं सर्प इत्यादिवदध्यासमात्रस्याधिष्ठानारोप्यांशद्वयभानवत्त्वात् अहमर्थेऽशद्वयभानाभावात् नन्वयो दहतीतिवदहमुपलेभे इतिदृग्दृश्ययोरुपलम्भादितिचेन्न उक्तवाक्यस्याग्निना सिञ्चेदितिवद्वाक्याभासत्वेन त्वदीयकल्पनामात्रत्वात् अपितु तत्रत्यायो दहतीत्यस्य वाक्यत्वेन तत्राप्यंशद्वयस्य मानाभावात् अन्यथा

ऽग्निना सिञ्चेदित्यर्थाध्यासत्वेनाभ्युपगन्तव्यं पण्डि-
तम्मन्यैः किञ्चास्तु वा अयो दहतीत्यस्य प्रामाण्यं
तत्रायश्शब्दो ऽजहल्लक्षणया दाहाश्रयाग्निविशिष्टा-
योऽर्थे वर्त्तमानतया लाक्षणिक एव शोणो धाव-
तीतिवत् अग्निर्माणवक इतिवद्वा तात्पर्यानुपपत्ते-
र्लक्षणाबीजत्वात् अन्यत्राप्यध्यासः कल्पनीयो
मनीषिभिः अननुभूयमाने हि द्व्यंशताकल्पने
मानाभावात् अन्यथात्मेत्यत्राऽपि द्व्यंशताकल्पना-
पत्तेः नाप्यहमुपलभे इत्यत्र द्व्यंशताभानसम्भवः
ब्रह्म स्फुरति आत्मा ऽस्तीति चैतन्यं भातीत्यादाव
ऽपि द्व्यंशतापत्तेः तस्माद्व्यंशताभानाभावादहमर्थः
आत्मैवेति सिद्धं द्व्यंशता ऽपि नच भाति चेतने
ऽहंप्रतीतिविषये ऽहमर्थके इतिपूर्वाचार्योक्तेः ननु
यद्यात्मस्वरूप एवाहमर्थो ऽभिप्रेतश्चेत्तर्हि सुषुप्त्यादौ
किमिति न स्फुरतीति चेन्मैवं अहमर्थस्तावदि-
च्छादिविशिष्ट एव स्फुरतीत्यावयोर्निर्विवादत्वात्
सम्मं सुषुप्तौ चेच्छादेरभावादहमर्थस्य विशेषानुभवो
विरुद्ध इति ब्रूमः एवमहं सुखीच्छामीति प्रतीति
भिन्नात्मविषयकप्रतीतेरसत्त्वेनात्मनो ऽपीच्छादि-
विशिष्टतयैव ग्रहणात् इच्छादिग्रहं विना ऽऽत्मग्रहा-

ङ्गीकारे अहमर्थस्याप्यङ्गीकारे क्षतेरभावात् सुखत्वे नात्मनोऽनुभवादिति चेत्तर्हि सुखमहमस्वाप्समित्यहमर्थस्यैव सुखत्वेनानुभवादात्मत्वमविरुद्धमिति न किञ्चिदवेदिषमित्यज्ञानाश्रयत्वेनानुभवाच्च ननु सुषुप्तौ नाहमर्थानुभवः नच परामर्शानुपपत्तिरिति वाच्यं परामृश्यमान आत्मा इदानीं जातेनान्तःकरणेनाहमर्थेनावच्छेदादहन्त्वं गतस्तथात्वेनानुभूयते तथाच नोक्तपरामर्शानुपपत्तिरिति चेन्न न किञ्चिदवेदिषमित्यादावज्ञानाद्यंशे ऽप्यपरामर्शत्वप्रसङ्गात् नह्यज्ञानादिकं निराश्रयमन्याश्रयं वा प्रतीयते किन्त्वहमर्थाश्रयं एतावन्तं कालं स्वप्नं पश्यन्नासं जाग्रदासमित्यत्रैवाहमस्वाप्समित्यत्राप्यहमंशे परामर्शानुभवाच्च अन्यथा ऽयः पूर्वं दुःखी सो ऽधुना सुखी जात इतिवद् यः पूर्वं मदन्यः सुप्तः सो ऽधुना ऽहं जात इतिधीः स्यात् ननु जागरे समुत्पन्ने ऽनुभूयमाने ऽहमर्थे परामृश्यमानात्माभिदारोपात्परामर्शत्वोपपत्तेरिति चेन्न इदं रूप्यमित्यादावारोप्याभिन्नतयेदमर्थस्येवाहमित्यत्राहमर्थाभिन्नतया ऽऽत्मनो ऽप्रतीतेः अन्यथैतावन्तं कालं सुप्तो ऽहमन्यो वेति कदाचित्संशयः स्यान्नत्वहमेवेति

निश्चयः नच सुषुप्तिकालानुभूतात्मैक्याध्यासान्नि-श्चयोपपत्तिरिति वाच्यं अहमर्थातिरिक्तात्मानुभव-स्यालीकत्वात् नच परामृश्यमानात्मैक्यारोपात्तदु-पपत्तिरितिवाच्यं अपरामर्शे परामर्शारोपस्य क्वाप्य-दर्शनात् सिद्धे ऽहमर्थस्यात्मान्यत्वे परामृश्यमाना-त्मैक्यारोपः सिद्धे च तस्मिन् सुषुप्तावप्रकाशेनाहम-र्थस्यात्मान्यत्वमित्यन्योऽन्याश्रयापत्तेश्च अहमित्य-तोऽन्य आत्मपरामर्शेनेत्युक्तत्वेन दृष्टहानाहदृष्टकल्प-नापत्तेश्च एतेन सुषुप्तावहमर्थप्रकाशे स्मर्येत ह्यस्तन इवाहमर्थ इति निरस्तं अहं शब्दोल्लेखितपरामर्शा-पादने सुषुप्तौ तदुल्लेख्यनुभवाभावादेव तदभावो-पपत्तेः तावन्मात्रे च ह्यस्तनवैषम्यात् अहमर्थ-विशेष्यकस्याहं प्रकारकस्यच परामर्शापादने इष्टा-पत्तेः एतावन्तं कालं सुखमहमस्वाप्समिति सुषुप्ति-कालीनसुखावच्छिन्नो ऽहमर्थ इतिस्मृतेश्च अन्यथा स्मर्येत ह्यस्तन इवात्मेति चोद्यं निरुत्तरं स्यात् ननु तथाप्येतावन्तं कालमहमित्यभिमन्यमान आसमिति परामर्शः स्यादिति चेन्न कर्णौ स्पृष्टः कटिं चालयसि अहमर्थप्रकाशेन तदभिमानपरा-मर्शापादनस्य व्यधिकरणत्वात् अन्यथा तत्राऽपि

आत्मेत्यभिमन्यमान आसमिति परामर्शः स्यात् तस्मात्सुषुप्तावहमर्थः प्रकाशते एव अपिच सुषुप्ता-वहमर्थाभावे ऽहं निर्दुःखः स्यामितीच्छया सुषुप्त्यर्थं प्रवृत्त्यनुपपत्तेः यो ऽहं सुप्तः सएव जागर्मीति प्रत्यभिज्ञा न स्यात् यो ऽहं पूर्वेद्युरकार्षं सोऽहमद्य करोमीति प्रत्यभिज्ञाऽनुपपत्तिश्च ननु कृशोऽहं स्थूलः स्यामितिवत्प्रवृत्त्युपपत्तिरिति चेन्न कार्श्यस्य परम्परासम्बन्धे नारोपितस्या नारोपितस्य वा ऽहमर्थस्य विद्यमानत्वे प्रवृत्त्युपपत्तावपि सुषुप्तावहमर्थस्य नाशात्तदानींतनसुखादिसम्बन्धाभावेन प्रवृत्त्यनुपपत्तेः विवेकिनां मम देहः स्थूलः स्यादितीच्छयैव प्रवृत्तेश्च नहि ममात्मा निर्दुःखः स्यादितीच्छया कस्याऽपि सुषुप्तौ प्रवृत्तिर्दृश्यते तस्माद्दृष्टान्तानुपपत्तिरेव वैषम्यात् अहंव्यक्तिभेदात् कृतनाशाकृताभ्यागमप्रसङ्गश्च कर्तुर्भोक्तुश्चाहमर्थस्य भेदात् अभिन्ने च चैतन्यकर्तृत्वाद्यभावात् कर्तृत्वाद्यारोपस्य च देहादावपि सत्त्वात् अहं करोमीत्येव प्रतीत्या ऽहमर्थान्यात्मनि कर्तृत्वाद्यारोपस्याप्यसम्भवाच्च अन्यथा ऽऽत्माकरोतीति प्रतीतिः स्यात् नच सुषुप्तौ कारणात्मना स्थितस्यैवोत्पत्त्यङ्गीकारान्नानुपपत्ति-

रिति वाच्यं कर्त्तृभोक्तृकारणस्य कर्त्तृत्वादिशून्यस्य स्थितावपि कृतहान्यादेरनुद्धारात् ननु पूर्वोक्तयोः श्रुतिस्मृत्योरनुमानस्यच विरोधस्तदवस्थ एव शास्त्र-बाधस्तु तवाप्यनिष्ट इतिचेन्न श्रुत्यादेरन्यविषयत्वेन बाधाभावात् तत्राथातोहङ्कारादेश इत्यादिश्रुति-स्मृत्योः गर्वोऽभिमानो हङ्कार इत्यभिधानात् गर्वा-दिवाचकाहङ्कारो विषयः सतु प्राकृत एव अहङ्कार श्चाहं कर्त्तव्यं चेति श्रुत्यन्तरात् सच मान्तो ऽव्ययरू-पः कारप्रत्ययान्तः आत्मवाच्यहंशब्दस्तु दकारान्तो ऽस्मच्छब्दस्तस्मादुभयोरर्थतः शब्दतश्च भेदान्नो-क्तदोषावकाशः नचोभयोरप्यहङ्कार एव शक्तिरिति वाच्यं अहङ्कारस्यानेकप्रयोगदर्शनेनैकत्र शक्तेर्नि-यन्तुमशक्यत्वात् अहंशब्दस्त्वहङ्कारशब्दवदात्म-भिन्ने प्रयोगप्राचुर्याभावादात्मपर एवेति भावः एव महमर्थस्य सर्वावस्थानुगतत्वसिद्ध्या परोक्तानुमा-नवृत्तिहेतोः स्वरूपासिद्धत्वेनाप्रमाणत्वं सुप्रसिद्धं ननु ज्ञातुः सद्भावे किमिति विशेषज्ञानं न स्यादिति चेन्न तत्र विषयाभावात् नहि ज्ञातुः सत्त्वमात्रं विष-यानुभवे प्रयोजकं अपितु विषयसत्त्वसहकृतमेव तस्मात् ज्ञातुः सत्त्वेऽपि विषयाभावाद्विशेषज्ञाना-

नुदयो विरुद्ध इति भावः नचैतावन्तं कालं मामप्यहं नावेदिषमित्यस्मदर्थाभावविषयकप्रत्ययस्य "न जानात्ययमहमस्मी"ति श्रुतेश्च सुषुप्तावहमर्थाभावस्य मानसिद्ध्या कथमस्मत्प्रयुक्तहेतोः स्वरूपासिद्धत्वं तस्मादननुगमस्य तादवस्थ्यमिति वाच्यं उक्तप्रत्ययेऽप्यहमर्थस्यानुवृत्तिदर्शनात् तथाहि तत्र मामिति द्वितीयान्तस्य कर्मरूपाहमर्थस्य जाग्रदनुभूतानादिकर्मसंस्कारप्रयुक्तात्मत्वाभिमतदेहाद्यवच्छिन्नो विषयः अहमितिप्रथमान्तस्य कर्तुरस्मदर्थस्य देहादिविलक्षणशुद्धब्रह्मात्मकप्रत्यगात्मा ज्ञाताविषयः तथाच मामित्युक्तलक्षणस्य देहेन्द्रियादिसंबद्धस्य तत्राभावान्निषेधविषयत्वं सूपपन्नं तथैवाहमिति देहादिवियुक्तस्य तद्विशिष्टाभावविषयकानुभूत्याश्रयाभिन्नस्य तत्राऽपिसत्त्वेनज्ञातृतयाभानमपि सूपपन्नतरं तथाचाहमर्थस्यानुभवितुः सर्वावस्थानुगतत्वेन हेत्वसिद्धेः सूपपन्नतमत्वादप्रामाण्यमनुमानस्य एतेनोक्तायाः श्रुतेरपि व्याख्यानमुक्तं भवति तस्या अप्युक्तलक्षणविशिष्टप्रातियोगिकाभावविधानपरत्वेन तुल्यार्थकत्वात् नन्वहमर्थो नात्माऽहं प्रतीतिविषयत्वात् शरीरादिव-

दिति प्रयोगात्तस्यानात्मत्वावगम इतिचेन्न त्वन्मते ऽहमर्थान्तर्गताधिष्ठानभूतचितो ऽपि तत्प्रत्ययविषयत्वेन तत्र व्यभिचारात् नच येन स्वरूपेणाहंधीविषयत्वं तेन स्वरूपेणानात्मत्वं स्वरूपेणात्मत्वमिति व्यभिचारइतिवाच्यं "अहमात्मा गुडाकेशेत्यात्मत्वेनाप्यहंप्रतीतिविषयत्वात् स्वरूपेणात्मत्वे मानाभावाच्च नचाहमर्थआत्मा ऽन्यः अहंशब्दाभिधेयत्वात् अहङ्कारशब्दाभिधेयवदित्यत्र मानामितिवाच्यं अहमात्मा गुडाकेश"त्यहंशब्दाभिधेये विश्वात्मनि श्रीवासुदेवे परब्रह्मणि व्यभिचारात् अथ यत्त्वया आत्मनो गौरो ऽहमित्यनात्मारोपाधिष्ठानत्वं मानभूवं भूयासमित्यादिना परमप्रेमास्पदत्वं अहमर्थस्य स्वसत्तायां प्रकाशव्यतिरेकवैधुर्येणात्मनः प्रकाशत्वं चोक्तं तत्सर्वमहमर्थस्यानात्मत्वे ऽयुक्तं स्यात् उक्तस्य सर्वस्याहमर्थ एव पर्यवसानात् नच प्रेमास्पदात्मैक्यारोपादहमर्थे तथा प्रतीतिरितिवाच्यं अन्योऽन्याश्रयापत्तेः अहमर्थप्रेम्णो ऽन्यस्यात्मप्रेम्णोऽनुभवाभावाच्च अहिते हितबुद्ध्या प्रेमोत्पत्तावपि अप्रेमास्पदे प्रेमास्पदत्वस्यारोपादर्शनाच्च "समारोप्यस्य रूपेण विषयो रूपवान्भ-

वेत् विषयस्य तु रूपेण समारोप्यं नरूपवदिति" वाचस्पत्युक्तेः अध्यस्तान्तःकरणगतप्रेमास्पदत्व-स्यैवात्मनि प्रतीत्यापत्तेश्च किञ्चानिदमिरूप्ये शुक्ति-निष्ठे दन्तादिभानवदधिष्ठाननिष्ठसाधारणधर्मस्या-रोप्ये भाने ऽप्यसाधारणधर्मस्य प्रेमास्पदत्वादेर्भा-नासम्भवात् आरोप्यासाधारणधर्माणां भीषणत्वा-दीनां रज्वामिवारोप्यासाधारणानामप्रेमास्पदत्वा-दीनामेवात्मनि भानापत्तेरित्यर्थः त्वद्रीत्या सुखा-नुभवरूपस्यात्मनः अहं सुखमनुभवामीति सुखा-नुभवाद्भेदेनैव प्रतीतेश्च किञ्च मोक्षेऽहमर्थाभावे आत्मनाशो मोक्ष इति वाह्यमतापत्तेः प्रेमास्प-दाहमर्थस्य त्वन्मते ऽपि नाशात् तदतिरिक्त-शून्यस्य तन्मते ऽप्यनाशात् नह्यहमर्थभिन्ने आत्मनि प्रेमधीः कदाचिदस्तीति भावः किञ्च "माऽमृतं कुन्धि ज्योतिरहं विरजा विपाप्मा भूयास"मितिश्रुत्या ऽहमर्थस्यैवामृतत्वोक्तेः अहं मुक्तः स्यामिती-च्छाच न स्यात् तस्यास्तद्विषयत्वात् नन्वात्मन एव मुक्तिरिष्यते अहङ्कारेतरारोपात् मुक्तः स्या-मितीच्छा ऽपि सूपपन्ना यथाशरीरस्यैव पुष्टीच्छा-यामप्यात्मनि तदैक्यारोपात् पुष्टः स्यामितीच्छा

यथाऽऽत्मन एव सुखेच्छायां तदैक्यारोपाच्छरीरं सुखि स्यादितीच्छा चेति चेन्न अन्योऽन्याश्रयापत्तेः तत्र शरीरं पुष्टं स्यादिति शरीरमात्रे पुष्टीच्छावत् अहं सुखी स्यामित्यपीच्छावच्चेह चिन्मात्रं मुक्तं स्यादितीच्छायाः कदाऽप्यदर्शनेन मुक्तेरनिष्टत्वप्रस-ङ्गाच्च यः कश्चिदात्मा मुक्तः स्यादितीच्छा चेन्न कदा-ऽपि मुमक्षुप्रवृत्तिः स्यात् ममात्मा मुक्तः स्यादिती-च्छायाः अदर्शनात् ननु यद्यपीच्छासमये ऽन्तःकर-णाध्याससम्भवेनात्ममात्रमुक्तीच्छा नास्तीति सत्यं तथाऽपि विशिष्टगतमुक्तीच्छाया एव विशेष्यगतमु-क्तिविषयत्वपर्यवसानात्तस्या इष्टत्वोपपत्तेरिति चेन्न अहमर्थभिन्नतया ऽऽत्मनो भानस्य क्वाप्यदर्शनेनै-तत्कल्पनाया अप्रमाणिकत्वात् अपि चाहमर्थो यद्यन्तःकरणगर्भितश्चेन्मम मन इतिप्रत्ययो न-स्यात्तदवच्छिन्नस्य पुनस्तदनन्वयात् किञ्चैवं मनः स्फुरति मनोऽस्तीति ज्ञानादहमिति ज्ञानस्य वैष-म्यानुभवो न स्यात् चिदचित्सम्वलनविषयत्वा-विशेषात् तस्मादहमर्थस्यानात्मत्वे किमपि मानं नास्तीति सिद्धं आत्मत्वे तु प्रत्यक्षानुमानश्रुत्या-दीनां सत्वात्तस्यात्मत्वं सुतरां सिद्धम् तथाहि

ज्ञानाम्यनुभवामीच्छामीत्यादिप्रतीतिभ्यः अह-
मर्थो मोक्षान्वयी तत्साधनकृत्याश्रयत्वात्सम्मतव-
दिति नच स्वर्गसाधनकृत्याश्रये ऋत्विजि व्यभि-
चार इतिवाच्यं उद्देश्यतासम्बन्धेन हि यत्र कृति-
स्तत्रैव फलमिति नियमः ऋत्विजां तु दक्षिणाया
एवोद्देश्यत्वान्नोक्तव्यभिचारयोगः अहमर्थोऽनर्थ-
निवृत्त्याश्रयः अनर्थाश्रयत्वात्सम्मतवत् नचासिद्धः
अहमज्ञोऽहमनुभवामीत्यबाधितानुभवात् देहस्या-
नर्थाश्रयत्वाभावान्न व्यभिचारः अनात्मत्वं नाह-
मर्थवृत्ति अनात्ममात्रवृत्तित्वात् घटादिवदित्याद्य-
नुमानेभ्यः "सदेव सौम्येदमग्र आसीत् ॥ एकमेवा-
द्वितीयं ॥ तदैक्षत बहु स्यां प्रजायेय ॥ नामरूपे
व्याकरवाणि ॥ त्रिवृतं करवाणि ॥ ब्रह्मैवेदमग्र-
आसीत् ॥ स चात्मानं वेदाहं हन्ता ॥ अहमिमा-
स्तिस्रो देवता" इत्यादिभ्यः किञ्च प्राकृतप्रलये
विश्वलयात्मके ऽवशिष्यमाणस्यैकाद्वितीयादि-
शब्दाभिधेयस्य परब्रह्मणः श्रीपुरुषोत्तमस्याऽपि
प्राणमनोभूतादिसृष्टेः प्रागपि ज्ञात्रभिन्नाहमर्थ-
स्वरूपत्वमेवेत्यवगम्यते तस्य नित्यमुक्तत्वं ताव-
न्निर्विवादं एवं तत्साम्यापन्नानां "निरञ्जनः परमं

साम्यमुपैती"त्यादिश्रूयमाणानामप्यहमर्थस्वरूपत्वमेवेति मुक्तावपि तथात्वसिद्धेः "अभयं वै जनक प्राप्तो ऽसि ॥ यदात्मानमेवावेदहं ब्रह्मास्मी"तीत्यत्रावधारणेनाहमर्थाभिन्नब्रह्मतादात्म्योपदेशात् तथा भूतवेदनस्याभयप्राप्तिरूपमोक्षफलकत्वोपदेशाच्च अनविद्यस्याऽपि ब्रह्मणो ऽहमुल्लेखोक्तेश्च "अहमित्येव यो वेद्यः स जीवइति कीर्त्तितः स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयो"रिति-कण्ठरवेणाहमर्थस्य मोक्षान्वयित्वश्रवणाच्च "अहं मनु रभवं सूर्यश्चे"तिमुक्ततया ऽवगतस्य वामदेवस्यानुभवाच्च "अहमात्मा गुडाकेशे"ति सर्वात्मकत्वं न त्वेवाहं जातुनास"मित्यादिना कालत्रयाबाध्यत्वं "ददामि बुद्धियोगं त"मिति मोक्षोपयिकज्ञानदातृत्वं "मामेव ये प्रपद्यन्ते मायामेता" मिति मायातरणासाधारणोपायरूपशरणापत्तिविषयत्वं "अहंकृत्स्नस्य जगतः प्रभवः प्रलयस्तथेति-जगत्कारणत्वं "वेदैश्च सर्वैरहमेव वेद्य" इतिशास्त्रविषयत्वं "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर" मितिमुक्तोपसृप्यत्वं "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इत्यपुनरावृत्तिलक्षणफलत्वं "मामेकं

शरणं व्रजे”तिसर्वशरण्यत्वं “अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामी”तिसर्वपापनिवर्त्तकत्वं चाहमर्थस्यैव श्रीमुखेन निर्णीतं भगवता श्रीपुरुषोत्तमेनेत्यादि-श्रीभगवद्गीतानिर्णयवाक्येभ्यः किञ्चाहमर्थादन्य आत्मा यदि स्यात्तर्ह्युपलभ्येत नतु तथोपलभ्यते इतियोग्यानुपलब्धेरप्यत्रमानत्वात् अपिचास्म-दर्थान्यात्मप्रतीत्यभावान्यथानुपपत्तेरप्यत्रप्रामाण्यं किञ्च परैरपि भाष्ये सर्वो ह्यात्मा ऽस्तित्वं प्रत्येति ननाहमस्मीति यदि हि नात्मास्तित्वप्रसिद्धिः स्यात्सर्वो लोको नाहमस्मीति प्रतीयादिति न तावदयमेकान्तेनाविषयो ऽस्मत्प्रत्ययविषयत्वादिति चान्वयव्यतिरेकेणात्मनो ऽहमर्थतयैव प्रतिपाद-नात् अन्यथात्वोक्तिवाधादित्यर्थस्तस्मादहमर्था-भावाभाव एव प्रमाणमित्यलम्पल्लवनेन ॥

इतिपराभिमताहमर्थानात्मत्वोक्ति
गिरिनिपातः ॥ २१ ॥

ननु स्यादेतन्मोक्षोपायकृत्याश्रयत्वेनाहमर्थस्या-त्मत्वं मोक्षान्वयित्वं च कृत्यादिकं यद्यात्मनिष्ठं स्या-त्तदेव तु नास्ति किन्तु यथा जपाकुसुमस्थं लौहित्यं स्फटिके भाति तद्वन्मनोवृत्ति कृत्यादिकमात्मन्य-

ध्यस्तं भासते नतु तात्त्विकं तथात्वे ह्यात्मनो विका-
रित्वापत्तेः सुषुप्तौ मनसो ऽभावे कृत्यादीनामदर्श-
नात् ॥ अकर्त्राऽऽत्मबोधकश्रुतिव्याकोपाच्चेति चेन्न
असम्भवादिति ब्रूमः तथाहि यथा प्रत्येकं स्फटिके
जपाकुसुमे च लौहित्यं भेदेन भाति प्रत्यक्षप्रमाणेन
तथाऽऽत्मनि मनसि चात्माकृत्याद्याश्रयत्त्वेनाध्य-
स्तत्वात् कर्त्तेति मनः स्वतः कर्त्रीति कदाऽपि साक्षा-
त्काराभावात् दृष्टान्तवैषम्यं अन्यथा मनः कर्त्रीति
आत्मा कर्त्तेति कदाचिद्भेदेनाऽपि भानं स्यादित्यर्थः
विकल्पासहत्वाच्च तथाच सोपाधिकोऽयमध्यासः
निरुपाधिको वा न द्वितीयः नेदं रजतमितिवत्
सकृदेव नायं कर्त्तेति अकर्तृत्वयाथात्म्यज्ञानेन तन्नि-
वृत्त्यापत्तेः कुसुमस्येवोपाधेः प्रतिबन्धकस्याभावात्
नाऽप्याद्यः रक्तं पुष्पमितिप्रमावत्कदाचिन्मनः
कर्त्रीति प्रमया लोहितस्फटिक इतिभ्रमवच्चैतन्यं
कर्त्रीति भ्रमेण चावश्यभाव्यमानत्वात् ननु कुसु-
मस्य स्फटिकात्मनाऽनध्यस्तत्त्वात् मनसस्तु चिदा-
त्मना ऽध्यस्तत्वादितिवैषम्येन तज्ज्ञानाऽभावो
ऽविरुद्ध इतिचेन्न अधिष्ठानात्मना ऽनध्यस्तं जपा-
कुसुमादिस्थानीयमुपाधिं विना भीषणात्वयुक्त-

सर्पस्य रज्ज्वात्मनेव कर्तृत्वादियुक्तमनसश्चिदात्मना ऽध्यासे रज्जौ भीषणत्वान्तरस्येवात्मनि कर्तृत्वान्तरस्यानध्यासेन सोपाधिकत्वायोगात् नचात्मनि कर्तृत्वान्तरमेवाध्यस्तमितिवाच्यं अध्यस्यमानधर्माश्रयस्याभेदारोपे औपाधिकत्वासम्भवात् ननु रज्जुसर्पादावध्यस्यमानभीषणत्वादिविशिष्टसर्पापेक्षया ऽधिकसत्ताकसर्पान्तरस्य सम्भवेनास्य निरुपाधिकत्वं अत्र त्वध्यस्यमानान्तःकरणापेक्षया कर्तृत्वादिधर्मविशिष्टतरस्याधिकसत्ताकस्यात्यन्ताभावात् अन्तःकरणमात्रस्योपाधित्वमिति चेन्न स्फटिके ऽध्यस्यमानप्रातिभासिकलौहित्यापेक्षया ऽधिकसत्ताकलौहित्यान्तरस्य सत्त्वेन तस्या ऽपि निरुपाधिकत्वापत्तेः नच यत्र धर्मी तादात्म्येनारोपितस्ततोऽधिकसत्ताकोऽतिरिक्तश्चास्ति स निरुपाधिको ऽध्यासः रज्जुसर्पादिवत् लोहितस्फटिक इत्यत्र तु न धर्मिणस्तादात्म्येनारोप इति सोपाधिकलोहितोपपत्तेरिति वाच्यं मम मनो मम बुद्धिर्ममान्तःकरणमितिभेदधिया प्रतिबन्धादभेदारोपासम्भवेन धर्ममात्रस्यैव वक्तव्यतया लोहित्यादेरिव कर्तृत्वादेरुभयत्र प्रतीतेर्दुर्वारत्वात् सोपा-

धिकस्थले धर्मारोपेणैवोपपत्त्या धर्मारोपस्याप्रामाणिकत्वाच्च समीपे स्थित उपदधाति स्वीयं धर्ममन्यत्रेत्युपाधिलक्षणत्वात् अभेदग्रहणादशायामप्ययं भीषणः सर्पो भीषणः अहं गौरः शरीरं गौरमितिवन्मनः कर्त्तृ चैतन्यं कर्त्रिति प्रतीत्यापत्तेः अपिच "कर्त्ताशास्त्रार्थवत्त्वा"दित्यधिकरणे भवद्भिरपि साङ्ख्यरीत्या बुद्धेः कर्त्तृत्वप्राप्ते जीवस्यैवेति सिद्धान्तितत्वेन स्वोक्तविरोधाच्च बुद्ध्यात्मनोरविवेकनिबन्धनस्य जीवनिष्ठकर्त्तृत्वस्य साङ्ख्यमतेऽपि सत्त्वेनाविशेषात् किञ्च बन्धतन्निवृत्त्यौपयिकक्त्त्योः स्वध्वंसाभावस्वफलभाक्त्वाभ्यां सामानाधिकरण्यनियमेन बुद्धेः कर्त्तृत्वायोगात् कर्त्तृत्वभोक्तृत्वाद्यनर्थरूपो बन्धो बुद्धिगतश्चेत्ततो मोक्षोऽपि तद्गतः स्यात् बन्धमोक्षयोः सामानाधिकरण्यनियमात् अज्ञानमपि दुःखादिभोगद्वारेणैवानर्थ इति तव सिद्धान्तादित्यर्थः नच बुद्धिगतं सद्रूपं भोक्तृत्वादिकं तद्धर्मत्वात् नानर्थरूपं किन्तु तदुपाधिकं मिथ्याभोक्तृत्वाधिकमिति वाच्यं एतत् कल्पनायाः कर्त्तृत्वाध्याससिद्ध्यधीनत्वेनान्योऽन्याश्रयात् मोक्षस्याऽपि सत्यस्यैव पुरुषार्थत्ववत्

भोक्तृत्वादिबन्धस्याऽपि सत्यस्यैवानर्थत्वाच्च तदुक्तं वार्तिके बौद्धं प्रति "नहि स्वप्नसुखाद्यर्थं पुमान् कश्चित् प्रवर्त्तते याद्दच्छिकत्वात् स्वाप्नस्य तूष्णीमास्येत पण्डितै"रिति स्थूलो भुञ्जे स्थूलः करोमीत्यादिना देहस्यानर्थान्वयापाताच्च नाऽपि बुद्ध्युपाधिकं ह्यात्मस्थभोक्तृत्वादिकमनर्थः नतु देहस्थमिति वाच्यं अनर्थाश्रयस्यात्मनो ऽनर्थकोटित्वायोगात् भ्रमसमये ऽहं भोक्तेति प्रमाकाले बुद्धिर्भोक्तीति प्रतीत्यापत्त्या शुद्धात्मनि कदाऽपि तत्प्रतीत्यभावापत्तेश्च अपिच मनसः श्रवणादिसाधनकर्तृत्वेन तत्फलमोक्षस्याऽपि तत्रैवापत्तेः शास्त्रफलं प्रयोक्तरीति न्यायात् यत्र साधनकृतिस्तस्यैव फलभाक्त्वात् अन्यथा कृतनाशाकृताभ्यागमप्रसङ्गात् बन्धमोक्षयोर्वैयधिकरण्यापत्तेश्च नच शुद्धोपहितयोः स्वाभाविकभेदाभावेन बन्धमोक्षयोः सामानाधिकरण्यं सूपपन्नमिति वाच्यं उपहितगतानर्थस्य शुद्धगतत्ववत्तद्गतदृश्यत्वमिथ्यात्वादीनामपि शुद्धगतत्वापत्तेः नच जातेष्टिपितृश्राद्धादौ व्यभिचार इतिवाच्यं कृतिफलयोः सामानाधिकरण्योपपादकोद्देश्यतासम्बन्धस्य फलाधि-

करणे पुत्रपित्रादौ सत्त्वात् जातेष्टावपि पित्रर्थं पुत्रगतपुत्रत्वादितदनुष्ठातुः पितुरेव फलमित्यर्थः तथैव श्राद्धेऽपि बोध्यं आरोपितानारोपितसाधारण-कर्त्तृत्वस्य फलं प्रति प्रयोजकत्वे बुद्धिदेहयोर्भोक्त्रा-न्वयापत्तेः किञ्च "तन्मनोऽनुकुरुत" इत्यादिश्रुतौ मनसः कृतिकर्मत्वस्य "शृण्वन्तः श्रोत्रेण विद्वांसो मनसे"तिकरणत्वस्य "मनउत्क्रमन्मीलित इवा-श्नन्पिबन्नास्त इवे"त्यादौ मन उत्क्रमणेऽप्यात्मनः कर्त्तृत्वस्य "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि-निष्पद्यते स तत्र पर्येति जक्षन् क्रीडन्नममाण इत्यादौ स्वरूपाविर्भावे परमुक्तावपि कर्त्तृत्वस्य "विज्ञानं यज्ञं तनुते कर्त्ता विज्ञानात्मा यो वेदेदं जिघ्राणीति सआत्माऽऽनन्दभुक्तथा प्राज्ञ" इत्यादि-श्रुतौ विज्ञानात्मनिष्ठकर्त्तृत्वस्य श्रवणात् नचात्र विज्ञानशब्दो बुद्धिपर इति वाच्यं "विज्ञानं ब्रह्म चेद्वेद तस्माच्च न प्रमाद्यति शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते" इतिवाक्यशेषात् किञ्चाहं करोमीत्यादिप्रत्यक्षेण आत्मा मोक्षसाधनकृति-मान् फलान्वयित्वात्सम्मतवत् अज्ञानं ज्ञानस-मानाधिकरणं बन्धरूपत्वात्सम्मतवदित्याद्यनुमा-

नैश्च "कर्त्ता विज्ञानात्मा यो वेदेदं जिघ्राणीत्यादि-
श्रुतिभिश्च "कर्त्ता शास्त्रार्थवत्वादि"तिन्यायाच्च यदि
आत्मा कर्त्ता न स्यात् तर्हि भोगमोक्षसाधनोप-
देशोऽपि न स्यादित्यर्थापत्तेश्च सिद्धस्यात्मकर्त्तृत्वस्य
वाधकादर्शनात् नच श्रुतिरनुवादपरा अहमर्था-
न्यात्मकर्त्तृत्वस्य "नामरूपे व्याकरोत् सहि सर्वस्य
कर्त्तेति" श्रुत्युक्तेश्वरकर्त्तृत्वस्य च प्रत्यक्षेणाप्राप्त-
त्वात् नच निर्धर्मकत्वं वाधकं निर्धर्मकत्वरूपधर्म-
भावाभावाभ्यां व्याघातात् ज्ञानत्ववत् सौषुप्तिका-
ज्ञानादिसाक्षित्ववत् बुद्धिं प्रति बुद्ध्यविशिष्टस्य ज्ञा-
तृत्ववच्च सत्यस्यासत्यस्य वा ज्ञातृत्वादेरप्यात्मन्येव
सम्भवाच्च नाऽपि निष्क्रियत्वं वाधकं क्रियाया
धात्वर्थत्वे ह्यात्मन्यप्यस्त्यादिधात्वर्थसत्तादेः सत्वेन
सत्त्वासिद्धत्वात् परिस्पन्दादिपरत्वे चेष्टापत्तेः
कृतिपरत्वे च "रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्म-
योनि"मित्यादिश्रुत्या चेतने विहितत्वेनासिद्धे
नच निष्क्रियत्वश्रुतिविरोधः तस्या ब्रह्मणि परतन्त्र-
क्रियायाः प्रत्यगात्मनि स्वतन्त्रकर्त्तृत्वस्य निषेध-
कत्वात् अन्यथा "स्वाभाविकी ज्ञानबलक्रियाचे"
तिश्रुतेः नहि "द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते ऽविनाशि-

त्वात् नहि श्रोतुः श्रुतेः नहि मन्तुर्मतेरित्यादि-
श्रुतेश्च बाधस्य तवाऽपि साम्यात् नाऽपि निर्विका-
रत्वं बाधकं आकाशस्य संयोगाद्याश्रयत्व इवा-
त्मनो ऽज्ञानतद्ध्वंसाश्रयत्व इव च ज्ञानादिगुणा-
श्रयत्वे ऽपि विकारित्वायोगात् "अविकार्यो ऽय-
मुच्यते" इत्यादिशास्त्रस्य द्रव्यान्तरापत्त्यादिषड्वि-
काररूपनिषेधपरत्वान्न विरोधः नच सुषुप्तौ मनसो
ऽभावे कर्तृत्वाद्यदर्शनं बाधकमिति वाच्यं तत्राऽपि
श्वासादिकर्तृत्वदर्शनात्तदसिद्धेः सुप्तो भूर्भूरित्यादि
श्वसिती"त्यादिश्रुतेः देहादिवन्मनसो निमित्तरूपत्वे
नाऽपि तदुपपत्तेश्च "कामः सङ्कल्प" इत्यादिश्रुतिरपि
मनसः करणत्वबोधनाविषयिकैव "मनसैवाग्रे सङ्क-
ल्पयती"ति श्रुत्यन्तरात् अत्र स्पष्टं कण्ठरवेण
करणपाठदर्शनाच्च "आत्मेन्द्रियमनोयुक्तं भोक्ते
त्याहुर्मनीषिण" इतिश्रुतेस्तु ह्यात्मनो भोक्तृत्वे
देहादिवन्मनसो ऽपि सहकारित्वमात्रमित्येतत्पर-
त्वात् किञ्च "ध्यायतीव लेलायतीवे"ति श्रुताववि-
वशब्दः परतन्त्रप्रभौ प्रभुरिवेतिवत् जीवकर्तृत्वस्ये-
श्वरपारतन्त्र्यप्रदर्शनपरः ननु "प्रकृतेः क्रियमा-
णानि गुणैः कर्माणि सर्वशः अहङ्कारविमूढात्मा

कर्त्ता ऽहमिति मन्यते" इतिस्मृतिर्बाधिकेति चेन्न तस्या अपिस्वतन्त्रकर्त्तृत्वनिषेधपरत्वाविशेषात् "तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मति" रितिकेवलशब्दः स्वातन्त्र्यपरं उक्तार्थे मानं केवलं स्वातन्त्र्येण कर्त्तारं मन्यमानो दुर्मतिरित्यर्थः "सकारयेत्पुरुषमथापि पापं न तावता दोषवानीशिता ऽपि ॥ एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत" इत्यादिश्रुतिभ्यः "केनापि देवेन हृदि स्थितेन यथा नियुक्तो ऽस्मि तथा करोमी"त्यादिस्मृतेश्च बद्धावस्थायामनादिप्रकृतिसम्बन्धरूपया कर्मरूपया वा ऽविद्यया सङ्कुचितज्ञानक्रियाशक्तिकानां ज्ञानक्रियादौ मनआदिपारतन्त्र्यात् तत्सहायापेक्षामुक्तावस्थायां तु स्वपरस्वरूपयोराविर्भावेन बुद्धीन्द्रियादिनिरपेक्षत्वमिति विवेकः "सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वश" इति श्रुतेः "यः सर्वज्ञः सहि सर्वस्य कर्त्ता ॥ तदैक्षत बहु स्यां प्रजायेये"त्यादिश्रुतिभ्यः ईशस्य तावन्नित्यक्रियाश्रयत्वं विवादशून्यमेव तथैव मुक्तानामपि ज्ञानक्रियादियोगोऽविरुद्धः "स तत्र पर्येति जक्षन्

क्रीडन्नममाणः ॥ सङ्कल्पादेवास्य पितरः समुत्तिष्ठंति ॥ विहारोपदेशात् ॥ सङ्कल्पादेव तु तच्छ्रुते" रितिश्रुतिसूत्रेभ्यः ननु ज्ञानेच्छाकृत्यादीनां नित्यत्वे सदासृष्ट्याद्यापत्तिः नच कालस्य तत्र निमित्तत्वात्तदभावाभावयोस्तत्र नियामकत्वेन नोक्तदोषावकाश इतिवाच्यं प्रधानादाविच्छादिसम्बन्धापादककालादेरपि सदासत्वादिति चेन्न सृष्टिप्रलयकालाभ्यां सम्बद्धाया एवेश्वरेच्छायाः सिसृक्षात्वजिहीर्षात्व सम्भवात् यथा परेषां वृत्तिश्चिदुपरागार्थेति मते व्यापकस्याऽपि चैतन्यस्य वृत्तिद्वारक एव घटादिसम्बन्धः यथाच तार्किकाणां मते सर्वगतस्याऽपि गोत्वादेः सास्नादिमत्येव सम्बन्धो नान्यत्र यथा चास्मत्पक्षे विश्वात्मनः श्रीपुरुषोत्तमस्य परब्रह्मणः सर्वदेशकालवस्तुपरिच्छिन्नपदार्थेतरतया व्यापकत्वेन सर्वत्र सत्त्वे ऽपि कस्मिंश्चिच्चरमजन्मन्येवाधिकारिविशेषे साक्षात्कारो नान्यत्र तद्वत्पारमेश्वरीयेच्छादेरपि सृष्टिकालादिविशेषावच्छिन्नप्रधानादिसम्बन्धो नान्यदेति नोक्तदोषसंसर्गावकाश इत्यनवद्यम् नच कर्तृत्वस्य क्लेशावहत्वान्न तत्र श्रौतं तात्पर्यमिति वाच्यं दर्शपौर्णमासादावपि श्रवण-

मननादावपि च तात्पर्यप्रसङ्गात् श्वासादेरकरण-
एव क्लेशदर्शनाच्च "यदा करोत्यथ निस्तिष्ठती"ति
श्रुत्यैव कर्तृत्वस्य फलसम्बन्धविधानाच्च एतदुक्तं
भवति कर्तृत्वं बुद्धिगतं वा शुद्धात्मगतं वा ऽहमर्थ-
गतं वा नाऽद्यः तस्याः जडत्वेन तत्रकर्तृत्वाङ्गीकारे
घटादावतिव्याप्तेः नाऽपि द्वितीयः अहमर्थभिन्ना-
त्मासिद्धेः पूर्वमेव विस्तृतत्वात् परिशेषादहमर्था-
भिन्नात्मवृत्तित्वमेव सिद्धमिति तच्च पूर्वमेव विस्त-
रेण निरूपितं ननु माभूत्केवलयोर्बुद्ध्यात्मनोरेक-
तरस्य कर्तृत्वं उक्तदोषात् तथाऽप्युपाधिसम्पर्काद-
कर्तुरप्यात्मन एव कर्तृत्वमिति चेन्न तथात्वे षण्ड-
स्याऽपि स्त्रीसम्बन्धमात्रेण प्रजोत्पादकत्वप्रसङ्गात्
तस्मात् स्वाभाविककर्तृत्वाद्याश्रयस्यैवाहमर्थाभिन्न
ज्ञातुरात्मनो बद्धदशायां करणविषयसम्बन्धनि-
मित्तकमेव कर्तृत्वं स्वाभाविकदाहकत्वाश्रयाग्नेः
काष्ठादिसम्बन्धनिमित्तकदाहकत्ववत् सूपपन्नं सुषु-
प्तिमूर्च्छादौ करणविषयादेरभावेन विशेषकर्तृत्वा-
भानस्याऽपि सूपपन्नत्वात् सामान्यश्वासादिकर्तृ-
त्वस्योक्तश्रुत्या तत्राऽपि सत्त्वाच्च सर्वावस्थानुगतत्व-
मपि पूर्वोक्तरीत्या सूपपन्नतरं ननु तर्हि कर्तृत्वपक्षे

जाग्रदवस्थायां कदाऽपि तदुपरमो न स्यात् करण-कलापस्य तदा सत्त्वादिति चेन्न कर्मक्रियाभावस्य तदुपरमे प्रयोजकत्वात् किञ्च सर्वस्याऽपि सचेत-नस्य कर्मकर्त्रादिकलापस्य सर्वान्तरात्मश्रीपुरुषो-त्तमपरतन्त्रत्वात् तन्नियन्तृत्वस्य च बद्धजीवाना-मदृष्टफलभोगानुरूपदेशकालसापेक्षत्वेन तत्प्रेरणा-सङ्कल्पस्य भावाभावौ तद्भावनोपरत्योर्नियामकौ भवतः तथात्वे च तत्प्रयोजकसत्त्वे तद्भानं तद्भावे चोपरतिरित्यर्थः बद्धजीवेत्याद्युक्त्या ब्रह्मणि वैष-म्यनैर्घृण्यादिशङ्का अपि दूरतो निरस्ता तस्य स्व-स्वादृष्टवृत्तितया तत्प्रयोजके ब्रह्मणि तदस्पर्शात् "बुद्धिर्ज्ञानमसम्मोह" इत्यादिश्लोकद्वयेन श्रीमुख-गानात् "फलमत उपपत्ते" रिति सूत्राच्च नचैवं शास्त्राचार्योपदेशस्य निर्विषयत्वेन वैयर्थ्यापत्ति-रिति शङ्कनीयं उपदेशस्य श्रीहरिप्रयोजकता ज्ञानप्राक्कालीनप्रवृत्तिविधायकत्वेन नैराकाङ्क्ष्या-दिति भावः एवं भोक्तृत्वादयो ऽप्यूहनीयाः तथाहि सुषुप्त्यादौ सुखमहमस्वाप्समिति यो ऽहं जागर्मि स स एवाहं सुखी सुप्त इति स्मरणप्रत्यभिज्ञान-प्रमाणसिद्धं मोक्षे च "जक्षन् क्रीडन्नि"तिश्रुति-

प्रमाणसिद्धं भोक्तृत्वमिति सङ्क्षेपः विशेषार्थश्चाकरे द्रष्टव्यः ॥

इति पराभिमतकर्तृत्वाध्यास
गिरिनिपातः ॥ २२ ॥

अथ देहात्मैक्याध्यासोक्तिरपि मनोरथमात्रव प्रमाणशून्यत्वात् नन्वात्मनि देहेन्द्रियाद्यैक्यं तद्धर्मांश्चाध्यस्यन्ते तत्राऽहं ब्राह्मणोऽहं काणोऽहं वधिर इति प्रत्यक्षस्य "ब्राह्मणो यजेत ॥ ब्राह्मणो निर्वेदमायात् ॥ प्रज्ञां कुर्वीत ब्राह्मण" इत्युभयकाण्डश्रुतेः सुषुप्तौ देहाद्यैक्याध्यासाभावे प्रमातृत्वादर्शनादित्याद्यन्यथाऽनुपपत्तेश्च सत्त्वेन कथं प्रमाणशून्यत्वमिति चेन्न त्वन्मते ऽहमर्थस्यानात्मतया ऽहं ब्राह्मण इत्यादेः प्रमाणस्य देहात्मैक्याध्यासाविषयत्वात् देहात्मैक्यस्य प्रत्यक्षविषयत्वाङ्गीकारे तद्विरोध्यनुमानाद्यप्रामाण्यस्योक्तत्वेन तद्भेदासिद्धिप्रसङ्गाच्च इतरेतरभिन्नत्वेन निश्चितानां देहेन्द्रियादीनां युगपदेकात्मैक्याध्यासानुपपत्तेश्च त्वन्मते देहात्मनोर्भेदस्याप्यध्यस्तत्वेन जीवब्रह्मणोरिव तत्राभेदाध्यासायोगाच्च ननु देहस्य स्वरूपेणैवाध्यस्तत्वाद्देहात्मनोर्न भेदो नाप्यभेद इति चेन्न

अध्यस्तादपि रजताच्छुक्तेः स्वज्ञानबाध्यभेददर्श-
नात् अपि चाहं गेहीतिवदहं देहीत्येव प्रतीयते
नतु देहोऽस्मीति कदाऽपि कस्य चित्प्रत्ययो भवति
ब्राह्मणो ऽहं मनुष्यो ऽहमित्यादिप्रतीतिरपि प्रमैव
देहसंयुक्तस्य ब्राह्मणादिपदार्थत्वात् नतु देहविशेष-
मात्रस्य देही ब्राह्मण इतिवद्देहो ब्राह्मण इति
प्रत्ययाभावात् मम गृहं मम क्षेत्रमितिवन्मम देह
इति प्रतीतेश्च अन्धो ऽहं बधिरो ऽहं काण इत्यादि
प्रत्ययो ऽपि प्रमैव चक्षुःश्रोत्रादिहीनदेहयुक्तस्यैव
तथात्वात् अन्यथा मम मनो मम चक्षुः मम
श्रोत्रमित्यादिभेदप्रतीतिर्न स्यात् किञ्च कृशो ऽह-
मित्यादिप्रतीतिरपि प्रमैव किन्तु कर्दमलिप्तो ऽहं
कृष्ण इतिवद्गौणः पुत्रे कृशे ऽहं कृश इतिवच्च
नचायमध्यासः कार्श्यात्पुत्राच्च स्वभेदस्य स्पष्टं
प्रतीयमानत्वात् अन्यथा मञ्चाः क्रोशन्तीत्यादे-
रप्यध्यासत्वं स्यात् पुत्रकार्श्येन दुःखानुभवस्त्वति-
शयप्रेमास्पदत्वेनैव घटते किञ्च कृशो ऽहमित्या-
दावध्यासो ऽनुपपन्नः विकल्पासहत्वात् तथाहि
कृष्णोऽहं कृशोऽहमित्यादौ कृष्णत्वादिधर्माणां
रज्जौ सर्पस्य भीषणत्वादीनामिव धर्मैक्येन सहा-

ध्यासो वा स्फटिके लौहित्यस्येव वा धर्मिणां विनैव नाऽद्यः पूर्वमेव निरस्तत्वात् नद्वितीयः लौहित्यवत्-कार्श्यादेर्द्वयोः प्रतीत्यापत्तेः नच कृशो ऽहमित्यैक्य-प्रतीत्या शिलापुत्रिकाया देह इतिवन्मम देह इत्येव गौणा इतिवाच्यं मम देह इत्यस्य देहात्म-विवेकवत्समुख्यतायाः कृशो ऽहमित्यस्य च पुत्रे कार्श्ये गौणतायाश्च क्लृप्तत्वात् तत्र भेदधीः स्पष्टैवेति चेदिहापि स्पष्टत्वात् नन्वहं गौरो ऽहं स्थूल इति स्थौल्यादिविशिष्टदेहस्याहमर्थे भेदारोपवच्चेतनो ऽहं करोमीति कृत्यादिविशिष्टाहमर्थस्याऽपि चेतन-भेदारोपः स्यादिति चेन्न योऽहं वाल्येपितरा-वन्वभूवं सो ऽहं स्थविरो नप्तॄननुभवामि योऽहं स्वप्ने व्याघ्रदेहः सोऽहमिदानीं मनुष्यदेह इतिदेह-भेदं ज्ञानपूर्वकं स्वस्यैक्यमनुसन्दधानः कथं ततो भेदं न जानीयात् दृष्टान्तासिद्धेरित्यर्थः नचेयं विरुद्धधर्मरूपलिङ्गधीजन्या भेदधीः परोक्षेति नैक्य-भ्रमविरोधिनीति वाच्यं प्रत्यक्षे धर्मिणि भेदसाक्षा-त्कारव्याप्तत्वात् इह च व्यावृत्ततत्त्वेन धीस्थदेहादि-तो भेदकस्यानुवृत्तत्वस्यात्मनि प्रत्यभिज्ञा प्रत्यक्ष-सिद्धत्वात् व्यावर्त्तकसाक्षात्कारस्यैवैक्यपरोक्षभ्र-

मेण भेदव्यवहारस्यौपचारिकत्वेन सह विरोधाच्च न चैक्यधीविरोधिनो नीला बलाकेत्यत्र नीलाद्भेदकस्य बलाकात्वस्य ग्रहेऽपि नीलभेदप्रत्यक्षाभावस्य च तदभेदप्रत्यक्षस्य दर्शनाद्व्यभिचार इतिवाच्यं दोषविशेषाजन्यारोपस्यैव विशेषधीप्रतिबध्यत्वात् नीलधियो दोषविशेषजन्यत्वेन तदप्रतिबध्यत्वात् नच प्रकृतेऽपि दोषविशेषाजन्यारोप इतिवाच्यं भेदज्ञानेन निवृत्त्यनुपपत्तेः सोपाधिकस्याधिष्ठान-साक्षात्कारेऽपि यावदुपाधिवृत्तित्वानियमात् वस्तु-तस्तु यदा भेदकप्रत्यक्षं तदा भेदप्रत्यक्षमितिकालि-कव्याप्तिर्नाङ्गीक्रियते अपि तु यत्र भेदकप्रत्यक्षं तत्र भेदप्रत्यक्षमितिदैशिकव्याप्त्यङ्गीकारः भवति च बलाकायां दिवानीलभेदप्रत्यक्षं तस्मान्नोक्तदोषाव-काशः नच देहनाशसमये तदभेदासिद्धावपि तद्देश-काले तदैक्यारोपासंभवाद्दिष्टासिद्धिरिति वाच्यं देह-नाशे मृतस्य प्रत्यक्षसाधनसामग्रीलयात् म्रियमाणस्य जीववद्दशाव्यावृत्तभेदप्रत्यक्षसामग्र्यभा-वाच्च मुमूर्षोरचाक्षुषात्मप्रतियोगिकात्माधिकरणक-भेदस्यापरोक्षासम्भवात् तस्मान्नोक्तप्रत्यक्षस्यात्र-प्रामाण्यमितिसिद्धम् अथ "ब्राह्मणोयजेते"त्यादि-

श्रुतीनामपि न तत्र प्रामाण्यं वक्तुं शक्यमसम्भवात् श्रुतौ ब्राह्मणशब्दो लक्षणया देहविशेषैक्याध्यासवद्वाचको वा देहविशेषनिष्ठाध्यासिकसम्बन्धपरो वा देहविशेष एव शक्तो वेतिविवेचनीयं नाद्यः विधौ लक्षणासम्भवात् किञ्च पुत्रमित्रादिषु विकलेषु सकलेषु वाऽहमेव विकलः सकलो वेति भवद्भिरध्यासाङ्गीकारेण भृत्यमित्रादावपि तस्य सत्त्वेन शूद्रस्वामिनो मित्रस्य वा ब्राह्मणादेर्यागाद्यनधिकारप्रसङ्गात् ब्राह्मणमित्रस्य शूद्रस्य तत्राधिकारापत्तेश्च किञ्च "ब्राह्मणो न हन्तव्य" इतिनिषेधस्य सुप्तजीवन्मुक्तविषयकत्वानुपपत्तेः नच स्वकर्मार्जितेन देहविशेषेणैक्याध्यासवान् ब्राह्मणपदवाच्य इति वाच्यम् आवश्यकत्वेन स्वकर्मणा देहविशेषार्जनस्यैव तदर्थत्वोपपत्तेः नाऽपि कादाचित्काध्यासवांस्तदर्थः महापातकेन नष्टब्राह्मणत्वस्याप्यधिकारित्वापत्तेः आजन्मनोऽपि जीवन्मुक्तस्य कर्मादिसाधननिषेधविषयत्वापत्तेश्च पातकेन नष्टब्राह्मण्यस्य निषेधविषयत्वानापत्तेश्च नच पातक एव तत्रानधिकारप्रयोजकः पतितो ब्राह्मण इतिव्यवहारादिति वाच्यं शापादिना यवनतां चाण्डालतां वा प्राप्तस्य

तथा व्यवहाराभावात् अत एव नद्वितीयः संयो-
गस्यात्मविभुत्वपत्ते सर्वदेहेषु स्वस्वामिभावस्य
भृत्यदेहेषु सत्वे ऽपि इच्छानुविधायित्वस्य चातुरा-
दिदेहेष्वसत्वेऽपि स्वस्वामिभावस्य वा तदिन्द्रिया-
श्रयत्वस्य वा साक्षात्प्रयत्नजन्यक्रियाश्रयत्वस्य
वा तद्भोगायतनत्वस्य वा तत्कर्मार्जितत्वस्य
वा सम्बन्धान्तरस्य सम्भवात् नच प्रयत्ना-
दावप्यात्मैक्यभ्रम एव सम्बन्धः अहं कृतिरिति
प्रतीत्यभावात् आत्मसमवायादेः सम्बन्धान्तरस्य
सत्वाच्च न चानतिप्रसङ्गाय स्वस्वामिभावादिवैक्या-
ध्यासभूतमूलसम्बन्धाधीन इतिवाच्यं वैपरीत्यस्या-
ऽपि सुवचत्वात् तत्कर्मार्जितत्वं पुत्रादिदेहसाधा-
रणं पुत्रदेहस्य तददृष्टैनैवोपपत्तेः सिद्धग्रामादि-
ष्विव पित्रदृष्टेन सम्बन्धमात्रस्य जननात् अन्यथा
ब्रह्मज्ञानात्पितरि मुक्ते सति पुत्रदेहारम्भकपितृ-
कर्मक्षयेण पुत्रदेहस्य नाशापत्तेः नाऽपि तृतीयः
तस्य जडत्वादियोगेन नियोज्यत्वासम्भवात्
अन्यथा घटादेरपि नियोज्यत्वप्रसङ्गात् देहविशिष्ट
एव ब्राह्मणशब्दप्रयोगेन देहस्यातदर्थत्वाच्च अन्य-
था मृतब्राह्मणशिरश्छेदादिना पुत्रस्य ब्रह्महत्या-

प्रसक्तेर्दुर्वारत्वात् नच प्रत्यक्षैकप्रमाणवादिनां चार्वाकादीनां देह एवात्मेति कथं प्रवाद इति वाच्यं अनुगतविषयकप्रत्यभिज्ञारूपप्रत्यक्षदेहात्मनो भेदस्य भेदकानां चावगाहिनः सविकल्पस्य चार्वाकादिभिः प्रामाण्यानभ्युपगमात् अतएव तादृशकुसमयनिरासकतया देहात्मबोधकश्रुतेरपि सार्थक्यात् नाप्राप्तनिषेधदोषावकाशः असत्कारणवाधनिषेधवत् नच मनुष्यत्वब्राह्मणत्वादीनां देहविशेषविशिष्टात्मवृत्तित्वे चाक्षुषत्वाभावप्रसङ्गः शङ्कनीयः केवलात्मनो ऽचाक्षुषत्वे ऽपि देहविशेषयुक्तस्य विशिष्टनिष्ठधर्माणां च प्रतीतिबलाच्चाक्षुषत्वाभ्युपगमे क्षत्यभावात् विशिष्टस्यातिरिक्ततया केवलस्य चक्षुरयोग्यत्वे ऽपि देहविशेषयुक्तस्य चाक्षुषविषयत्वात् त्वां ब्राह्मणं पश्यामि त्वमपि मां ब्राह्मणं पश्य ब्राह्मणस्य देहे इदं पश्यामि इत्यादि व्यवहारपरैर्वाक्यैरात्मवृत्तित्वेन ब्राह्मणत्वप्रतीतेः दण्डिनोऽयं दण्ड इतिवद् ब्राह्मणस्यायं देह इति व्यवहारस्याप्युपपत्तेः "ब्राह्मणस्य हि देहो ऽयं क्षुद्रकामाय नेष्यत "इति स्मृतेश्च अन्यथा देहविशेषाध्यासवत्यात्मनि ब्राह्मणत्वादिस्वीकारे ऽपि

चाक्षुषत्वाद्यनुपपत्तेः तत्राऽपि साम्यात् एतेन सर्वाण्यपि विधिनिषेधशास्त्राण्यध्यासमूलानीति परोक्तं प्रत्युक्तं वोध्यं यदप्युक्तमध्याससिद्धौ प्रमातृत्वाद्यन्यथानुपपत्तेः प्रामाण्यं तदपि मनोरथमात्रं तदभावे ऽपि सुषुप्त्यादौ सुखाज्ञानादिज्ञातृत्वस्य दर्शनात् जाग्रदादावपि प्रमातृत्वस्य स्वरूपनिष्ठयावदात्मवृत्तिस्वाभाविकस्वधर्मज्ञाननिरूप्यत्वे नान्यथासिद्धत्वात् सुखमहमस्वाप्सं न किञ्चिदवेदिषं घटं जानामीत्यादिप्रतीतेः "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ऽविनाशित्वात् ॥ अविनाशी वा अरे आत्मा ऽनुच्छित्तिधर्मा विज्ञातारमरे केन विजानीया"दित्यादिश्रुतिभ्यः "एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इती"ति ॥ श्रीमुखगानाच्च एतेन प्रमातृत्वादिकमध्यासमूलमितिपरोक्तं निरस्तं अनुपपत्तीनां पूर्वमेवोक्तत्वात् यदप्युक्तं कैश्चित् देहात्माध्यासाभावे ऽपि स्वतश्चेतनतयैव प्रमातृत्वोपपत्तेः नच सुषुप्तौ प्रमातृत्वापत्तिः करणाभावादित्याशङ्क्यं प्रमाश्रयत्वं प्रमातृत्वं तत्र प्रमा नित्यचिन्मात्रं वा वृत्तिमात्रं वा नाऽद्यः आश्रयत्वायोगात् करणवैयर्थ्याच्च द्वितीये जगदान्ध्यप्रसङ्गः

वृत्तेर्जडत्वादितिविकल्पमुखेन निरस्य तस्माद्-वृत्तीद्धो वोधः प्रमा तदाश्रयत्वमसङ्गस्यात्मनो वृत्तिमन्मनस्तादात्म्याध्यासमृते न सम्भवति तत्-सिद्धये ऽध्यासो ऽवश्यमङ्गीकर्तव्य इति निर्णीतं तदप्ययुक्तं असम्भवात् तथाहि चिन्मात्रस्य प्रमातृत्वासम्भवः प्रमात्वासम्भवश्चावयोरविशे-षेणाभीष्टः वृत्तेर्जडत्वमपि तथैव परन्तु यदुक्तं वृत्तीद्धो वोधः प्रमेत्यादि तदयुक्ततमं विकल्पा-सहत्वात् तथाहि वृत्तीद्ध इतिशब्दस्य को वाऽर्थः वृत्तिप्रतिविम्बितत्वं वा वृत्त्यवच्छिन्नत्वं वा उभ-यथा ऽप्यसम्भवस्तस्य प्रतिविम्ववादावच्छेदवाद-खण्डनरीत्या त्राऽपि निरस्तुं युक्तत्वात् तस्मा-दात्मवृत्तिस्वाभाविकधर्मभूतज्ञानमेव सर्वगतमपि वद्धावस्थायां वुद्ध्यादिसङ्कुच्यमानं घटेन दीप-प्रभेव वुद्धिविकशितं सत्प्रमेति कथ्यते तदाश्र-यश्चाहमर्थो ज्ञात्रभिन्नः श्रुतिस्मृतिन्यायासिद्धः "योऽयं वेद जिघ्राणीति स आत्मा कतम" इत्युपक्रम्य "पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता वोद्धा विज्ञानात्मा पुरुषः ॥ विज्ञाता-रमरे केन विजानीयात् ॥ जानात्येवायं पुरुषः ॥

नहि द्रष्टुर्दृष्टे" रित्यादिश्रुतिभ्यः "ज्ञोऽत एवे"ति न्यायात् "एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ" इत्यादिस्मृतेश्च यच्चोक्तं असङ्गस्यात्मनो वृत्तिमन्मनस्तादात्म्याध्यासमृते न सम्भवति तत् सिद्धये ऽध्यासोऽङ्गीकर्त्तव्य इति तदत्यन्तविडम्बनमात्रं शुद्धचिन्मात्राज्ञानाध्यासयोर्वदतो व्याघातेन सूर्यतमसोरिवोन्मत्तप्रलापत्वात् विस्तरशो निरस्तत्वाच्च नाऽपि सुषुप्तौ प्रमातृत्वव्यभिचारो वक्तुं शक्यः सुखाज्ञानादिप्रमातृत्वस्य तदानीमपि सत्वेन पूर्वमेव प्रतिपादितत्वात् नाऽपि करणवैयर्थ्योक्तिर्युक्ता तत्सार्थक्यप्रकारस्य पूर्वत्रैव निरूपितत्वात् तस्मादध्यासाङ्गीकारस्य सर्वथा दुराग्रहमात्रत्वमेवावैदिकत्वात् किञ्चाध्यस्तस्याविद्यादोषवत्त्वेन कथं प्रमातृत्वं तवाऽपि प्रमाश्रयस्यैव प्रमातृत्वाङ्गीकारात् प्रत्युत भ्रान्तत्वमेव एतेन सति प्रमातरि पश्चाद्भवन् दोषो दोष इत्युच्यते यथा काचादिः अविद्या तु प्रमात्रन्तर्गतत्वान्न दोषो येन प्रत्यक्षादीनामप्रामाण्यं भवेदित्युक्तिरपि निरस्ता मूलाविद्यावच्छिन्नतया ऽनादिभ्रान्तस्य प्रमातृत्वोक्तेरुपहासमात्रत्वात् जन्मान्धस्य कमलनयनसमाख्यावत् अपिच तव

पत्ते शास्त्रकृतां विदुषामपि पश्वादिभिरविशेषात्त-दुक्तीनामपि पशुद्वेषणसाम्यप्रसक्त्याऽन्धपरम्परा-न्यायापत्तेः ननु विद्वत्त्वं द्विविधं ब्रह्मास्मीति प्रत्यक्ष-रूपमेकं आत्मानात्मविवेकरूपयौक्तिकपरोक्षज्ञानं च द्वितीयम् आद्ये बाधिताध्यासानुवृत्त्या जीवन्मु-क्तानां व्यवहारः द्वितीये परोक्षज्ञानस्यापरोक्षभ्रा-न्त्यनिवर्त्तकत्वात् विवेकिनामपि व्यवहारकाले पश्वादिसाम्यमविरुद्धम् अध्याससाम्यादिति चेन्न अपरोक्षज्ञानवतां बाधितानुवृत्तेर्जीवन्मुक्तिखण्ड-नावसरे विशेषतो निराकरिष्यमाणत्वात् किञ्च परो-क्षज्ञानादपि ध्रुवास्मृत्याख्यादज्ञाननिवृत्तेः सामञ्ज-स्यात् "सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्र-न्थीनां विप्रमोक्ष" इत्यादिश्रुत्या कण्ठरवेण डिण्डि-मायमानत्वात् किञ्च पश्वादीनां ज्ञानस्य क्षुधापि-पासादीष्टानिष्टादिविषयकत्वेन तावन्मात्रत्वे ऽपि स्वाभाविकत्वमेव नाध्यस्तत्वम् "जातमात्रा मृगा गावो हस्तिनः पक्षिणः शशाः भयाभयस्वभावादौ कारणानि विजानते अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवे"दितिस्मृतेः "अथेतरेषां पशूनाम-शनापिपासे एवाभिज्ञान"मित्यादिश्रुतेश्च तस्मा-

दुक्तदोषतादवस्थ्येनाध्यासस्याप्रमाणिकत्वादुक्तल-क्षणसिद्धान्तस्य श्रौतत्वाद्बद्धावस्थायां देहेन्द्रिया-दिसंयुक्तस्यैव प्रमातृत्वमितिसिद्धं सिद्धं च देहात्मै-क्येन स्वरूपेण वाऽध्यासस्याप्रामाणिकत्वमिति सङ्क्षेपः ॥

इति देहात्मैक्याध्यासगिरिनिपातः ॥ २३ ॥

इति पराभिमताध्यासवाद-
गिरिनिपातः ॥

एवं प्रसङ्गप्राप्तः सपरिकरो ऽयमध्यासवादो निरस्तः तत्सिद्धं परमते विषयसम्बन्धप्रयोजना-सिद्ध्याधिकार्यसिद्धिरिति एवं चानुबन्धाभावे शास्त्र-प्रणयनस्य सुतरां वैयर्थ्यमित्यलं विस्तरेण सिद्धान्ते तु अधिकार्यादेः सर्वशास्त्रसिद्धत्वाच्छास्त्रारम्भस्य सार्थक्यमेवेति श्रीश्रीनिवासचरणाम्बुजकोशगन्ध-भृङ्गायमाणचरणानुगृहीतबुद्ध्या आलोच्य तैर्विर-चितं सनकानुगैस्सच्छास्त्रं मया विरचितः श्रुति-निर्णयार्थः १ एतेन तुष्यतु विभुर्मम देवदेव आ-चार्यवर्यनिखिलार्थप्रदो वदान्यः श्रेयस्तनोतु जगतो ऽखिलमङ्गलानां मूर्त्तिर्गुरुश्च भगवान्मनुजावतारः २

इत्युपोद्घातग्रन्थःसमाप्तः ॥

॥ श्रीगुरुचरणेभ्योनमोनमः ॥

श्रीश्रीनिवासद्रुहि*णेशसमीड्यकीर्ते ह्यस्पष्ट-दोषमहिमश्रुतिसारवेद्य मुक्तोपसृप्य गुणसागर विश्वहेतो श्रेयः कुरुष्व जगतां व्रजवल्लवीश १ इत्थमुपोद्घातग्रन्थे शास्त्रारम्भहेतुभूता वेदान्तशास्त्रानुबन्धा अधिकारिविषयप्रयोजनसम्बन्धाख्याः श्रुतिमुखेन निरूपिताः तत्र प्रसङ्गापन्नपराभिमताध्यासवादः श्रुतियुक्तिभिः सपरिकरो निराकृतः इदानीं शारीरकमीमांसार्थसंग्रहायोपक्रमते शारीरकमीमांसा नाम शारीरकस्य मीमांसा शारीरकश्च शरीरे भवाः शारीराः प्रत्यगात्मानः तेषां क आनन्दरूप आत्मा परब्रह्माख्यः श्रीपुरुषोत्तमः यद्वा शारीराणां क आनन्दो मोक्षलक्षणो यस्मात् सशारीरकः कं ब्रह्म "एष आनन्दयाती"तिश्रुतेः तस्य मीमांसेति विग्रहः ब्रह्मविचारइत्यर्थः सा चाध्यायचतुष्टयरूपा अध्यायाश्च समन्वयाविरोधसाधनफलाख्याः तत्र तावत्समन्वयाध्यायार्थः संगृह्यते "अथातो ब्रह्मजिज्ञासा" तत्रानेकार्थकोऽयमथशब्दः अर्थान्तरमङ्गलाधिकारा-

---

* विधियार्थे

म्भानन्तर्यभेदात् तत्र न तावदर्थान्तरपरः उपक्रम-वाक्यत्वात् पूर्वनिर्वचनाद्व्याख्यान्तरकथनमर्था-न्तरम् यथा मायया रमाया धवः स्वामी माधवः अथवा मधुवंशे भवो माधव इति स चात्र न सम्भवति पूर्वनिर्वचनाभावात् नाऽपि मङ्गलार्थः "ओङ्कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभा"विति-स्मृतेर्वेदान्तानां भगवत्स्वरूपगुणादिप्रतिपादन-परतया सर्वेषामपि वाक्यपदवर्णमात्राणां मङ्गल-रूपत्वेन मङ्गलान्तरनिरपेक्षत्वात् नाप्यधिकारपरः शब्दादिवद्ब्रह्मणो ऽधिकार्यत्वाभावात् नाप्यारम्भ-परः वेदान्तानामनादित्वाभ्युपगमात् अन्यथौ-पचारिकत्वापत्त्या ऽप्राधान्यप्रसङ्गादतः परिशेषा-दानंतर्यार्थक एवेति किं तद्वस्तु यदनन्तरं ब्रह्म-जिज्ञासा विधीयते इत्यपेक्षायां मुमुक्षेति तत्सह-कारीणि च श्रद्धोपपत्तिपूर्वकगुरूपसत्त्यादीनीति पूर्वमेवाधिकारिनिर्णये प्रमाणपूर्वकमुक्तानि अतः शब्दश्च हेतुसङ्ग्रहार्थः कर्मफलानां ह्यनित्यत्वादि-दोषदर्शनपरः "यथेह कर्मचितो लोकः क्षीयते ॥ परीक्ष्यलोकान्कर्मजितान् नास्त्यकृतः कृतेन"

त्यादि श्रुतेः ब्रह्मणो जिज्ञासेति कर्मणि षष्ठी "कर्त्तृकर्मणोः कृती"तिपाणिनीयसूत्रात् ब्रह्म च स्वरूपगुणशक्त्यादिभिर्निरतिशयवृहत्तमो भगवान्वासुदेवाख्यः वृहति बृंहयति तस्मादुच्यते परं ब्रह्म "बृहन्तो गुणा अस्मिन्नि"तिश्रुतेः "एष प्रकृतिरव्यक्तः कर्त्ता चैव सनातनः परं च सर्वभूतेभ्यस्तस्माद्वृद्धतमो ऽच्युतः ॥ बृहत्वाद्बृंहणत्वाच्च ब्रह्मे"तिस्मृतेश्च अनन्ताचिन्त्यस्वाभाविकस्वरूपगुणशक्तिभिर्वृहत्तमो यो रमाकान्तः श्रीपुरुषोत्तमो ब्रह्मशब्दाभिधेयस्तद्विषयिका जिज्ञासा सततं सम्पादनीयेति भगवद्वाक्य†कारपादोक्तेः स्वरूपेण वृहद्गुणयोगाच्च बृहत्तमं वस्तु ब्रह्मशब्दवाच्यमितिविवरण‡कारपादोक्तेश्च तस्मादथेतिमुमुक्षानन्तरं कर्मफलानामनित्यत्वसातिशयत्वादिदर्शनाद्धेतोर्नित्यनिरतिशयमोक्षफलकब्रह्मजिज्ञासा मुमुक्षुणा कर्त्तव्येति वाक्यार्थः "आत्मा वा रे द्रष्टव्यः भूमा त्वेव विजिज्ञासितव्य" इतिश्रुतेः परमते तु जिज्ञास्यो दुरुपपादः विकल्पासहत्वात्

---

† सुन्दरभट्टैः

‡ पुरुषोत्तमाचार्यैः

तथाहि शुद्धो वा मायोपहितो वाऽज्ञानाध्यस्ते-
श्वरो वा जिज्ञासाविषयत्वेनाभिप्रेतः नाऽद्यः तस्या-
विषयत्वाभ्युपगमात् अन्यथा मिथ्यात्वप्रसङ्गात्
शुद्धं ब्रह्म मिथ्या जिज्ञासाविषयत्वात् तव मते
घटादिवदित्यनुमानात् अपसिद्धान्तापत्तेश्च अवि-
षयत्वाभ्युपगमसिद्धान्तभङ्गाच्च न द्वितीयः जिज्ञा-
सया श्रवणाद्यभ्यासजन्योपहितसाक्षात्कारेण
तद्विषयकाज्ञाननाशेऽपि शुद्धनिर्विशेषविषयका-
ज्ञानस्य तादवस्थ्येनानिर्मोक्षप्रसङ्गात् अप्रयोज-
कत्वाच्च किञ्चोपहितज्ञानं मोक्षहेतुर्नवा नाऽद्यः
तस्यैव मुक्तोपसृप्यत्वप्रसक्त्या शुद्धाभ्युपगमस्या-
प्रयोजकत्वेन वैयर्थ्यात् नद्वितीयः जिज्ञासावैय-
र्थ्यापत्तेः तदर्थकभाष्यादिशास्त्रप्रणयनस्य जलता-
डनसाम्यापत्तेश्च नाऽपि अध्यस्तजिज्ञास्याङ्गीका-
रस्तृतीयः पूर्वमेव विस्तरेण निरस्तत्वादध्यास-
वादस्येत्यलङ्कुतर्कनिरासैः तस्मादुक्तस्वरूपमेव ब्रह्म
जिज्ञास्यं "तद्ब्रह्म तद्विजिज्ञासस्वे" त्यादिश्रुत्या
वक्ष्यमाणलक्षणस्यैव जिज्ञास्यत्वनिर्णयात् ॥

इति पराभिमतजिज्ञास्योपपत्ति-
गिरिनिपातः ॥ १ ॥

तस्य किं लक्षणमित्यपेक्ष्याह "जन्माद्यस्य यतः" अस्येतिशब्दः कार्यपरः यत इतिकारणपरः जन्म आदिर्यस्य तदिदं जन्मादि सृष्टिस्थितिलयमिति तद्गुणसम्विज्ञानबहुब्रीहिः यतो यस्मात्सर्वेश्वरात्सर्वज्ञात्सर्वशक्तेः परमकारणात्सर्वनियन्तुः पुरुषोत्तमाच्छ्रीभगवतो ऽस्य जगतो नामरूपाभ्यां व्याकृतस्य विविधविभक्तभोक्तृसंयुक्तस्य नियतदेशकालफलोपभोगाश्रयभूतस्य तर्कागोचररचनस्य जन्मस्थितिलयाः प्रवर्त्तन्ते तदेव ब्रह्मजिज्ञास्यमिति वाक्यार्थः यत्तच्छब्दयोर्नित्यसम्बन्धात् "यतो वा इमानि भूतानि जायन्त" इत्यादिश्रुतेः परमते तु लक्षणमसम्भवि विकल्पासहत्वात्पूर्ववत् ननु लक्षणं द्विविधं स्वरूपतटस्थभेदात् तत्र स्वरूपाभिन्नं लक्षणमाद्यं यथा "सत्यं ज्ञानमनन्तं ब्रह्म" त्यादिकं यावल्लक्ष्यमनवस्थितत्वे सति व्यावर्त्तकं तटस्थलक्षणं यथा "यतो वा इमानि जायन्त" इत्यादिश्रुत्युक्तजन्मादिकारणत्वस्य प्रलयेऽननुगतत्वे सतीतरव्यावर्त्तकत्वाल्लक्षणसमन्वयो बोध्य इति चेन्नैवमसम्भवात् तथाहि न तावत्स्वरूपलक्षणोक्तिरुपपत्तिमती असाधारणधर्मस्यैव सर्ववादि-

सम्मतत्वेन लक्षणत्वान्न स्वरूपमात्रस्य अन्यथा स्वरूपस्यैव व्यावर्त्तकत्वे लक्षणोक्तेरेव वैयर्थ्यात् स्वरूपस्य व्यावर्त्तकत्वादर्शनाच्च ननु स्वरूपस्यैव धर्मधर्मिभावकल्पनया लक्षणत्वाङ्गीकारे उक्तदोषानवकाशात् "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वे ऽपि चैतन्यात्पृथगिवावभासन्ते" इत्यभियुक्तोक्तेरिति चेन्न कल्पितस्य व्यावर्त्तकत्वासम्भवात् अन्यथा यूपे कल्पितादित्यत्वस्याप्यसूर्याद्व्यावर्त्तकत्वापत्तेः तस्मात्स्वरूपस्य लक्षणत्वोक्तेः स्वोत्प्रेक्षामात्रत्वमेव किञ्च सत्यादिशब्दा यौगिका रूढा वा आद्ये यौगिकस्य प्रकृतिप्रत्ययार्थयोगपरत्वेन निर्विशेषत्वहानेः द्वितीये रूढानां ॥ गुणजात्याद्यनेकधर्मवद्वस्तुपरत्वनियमेन निर्विशेषपरत्वायोगात् ननु सत्यादिशब्दानां सविशेषपरत्वे ऽपि लक्षणया निर्विशेषपरत्वान्नोक्तदोषावकाश इतिचेन्न असम्भवात् लक्षणाङ्गीकारे जहत्स्वार्थाभिप्रेता चेत् गङ्गायां घोष इत्यत्र यथा प्रवाहरूपशक्यत्यागेनागङ्गारूपस्तीरो वाक्यार्थः तथा प्रकृते सत्यादिपदार्थत्यागेनासत्यजडपरिच्छिन्नरूपो वाक्यार्थः स्यात् अजहत्स्वार्थाङ्गीकारे

शक्यवद्विशिष्टार्थत्वापत्तेः भागत्यालक्षणापत्ते विशेष्यमात्राङ्गीकारे सत्यादीनां को वाऽर्थ इत्यप्यनिश्चयात् सत्यत्वादिधर्मत्यागे ऽपि सच्चिदपरिच्छिन्नं ब्रह्मेति त्रैविध्यस्यावश्यम्भावात् निर्विशेषाद्वितीयत्वभङ्गात् सर्वेषामेकार्थत्वाङ्गीकारे पर्यायत्वापत्तेः तथाऽभ्युपगमे चैकपदेनैवार्थसिद्धौ पदान्तरे वैयर्थ्याच्च किञ्च शब्दैकांशार्थाङ्गीकारे सर्वांशवाचकतासम्बन्धाभावेऽपि तदंशवाचकतासम्बन्धस्याकामेनाऽपि त्वया स्वीकार्यत्वात् निर्विशेषत्वहानेः तथात्वे मिथ्यात्वापत्तेः निर्विशेषं वस्तु मिथ्या शक्यैकदेशत्वात् तव मते घटत्वादिवदितिप्रयोगात् ननु सत्यत्वादिविशिष्टवाचिनां पदानां शुद्धे लक्षणाङ्गीकारान्न पर्यायत्वापत्त्यादिदोषावकाश इतिचेन्न अनृतास्वप्रकाशपरिच्छिन्नरूपे सविशेषत्वसत्वादेरयोगात् योगे वा तस्यैवानृतादिव्यावृत्तत्वं स्यान्न शुद्धस्य तस्मात्सत्यत्वादीनां शुद्धादन्यत्रासम्भवात् वाक्यस्य लक्षणाया ऽखण्डार्थत्वे च शुद्धे तदसिद्धेः पर्यायत्वप्रसङ्गः पदान्तरवैयर्थ्यस्य तादवस्थ्यमेव किञ्च सत्यादिपदलक्ष्यं पदान्तरवाच्यं नवा आद्ये सविशेषत्वस्यावश्यम्भावात्

द्वितीये लक्ष्यत्वासिद्धेः लक्ष्यत्ववाच्यत्वयोः सामानाधिकरण्यनियमात् यत्र वाच्यत्वं तत्र लक्ष्यत्वं यथा गङ्गापदलक्ष्यस्य तीरशब्दवाच्यत्वं यन्नैवं तन्नैवं खपुष्पादिवदित्यन्वयव्यतिरेकाभ्यां लक्ष्यत्वासिद्धेः ननु सत्यादयः शब्दा असत्यादिव्यावृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्यवस्यन्तीति चेन्न ब्रह्मस्वरूपमात्रस्यश्रुतिं विनाऽपि प्रागेवाविद्याधिष्ठानतया ज्ञातस्य पुनरपि "ब्रह्मविदाप्नोति पर" मित्यादिवाक्येन च सत्यादिशब्दैर्विशिष्टतया व्यावृत्तिविशिष्टतया च ज्ञातत्वेन तज्ज्ञानस्य व्यावृत्तिज्ञानसाध्यत्वायोगात् व्यावृत्तिज्ञानस्यैव धर्मिज्ञानसाध्यत्वेन विपरीतत्वापाताच्च किञ्च व्यावृत्तयः सत्या मिथ्या वा आद्ये व्यावर्त्तकानामपि सत्यत्वापत्तेः व्यावहारिकैर्व्यावर्त्तकैः पारमार्थिकव्यावृत्त्यसिद्धेः किञ्च व्यावृत्तिविशिष्टापत्त्याऽद्वैतभङ्गात् सविशेषत्वापत्तेश्च द्वितीये असतस्तुच्छस्य शशशृङ्गादेरिव व्यावृत्तित्वासम्भवात् तुच्छस्य यदि किञ्चित्पदार्थत्वं स्यात्तर्हि भेदकत्वमपि स्यात्तत्तु नास्त्येव नच व्यावृत्तिः स्वरूपमेवेति वाच्यं स्वरूपस्य व्यावर्त्तकत्वाभावात् व्यावर्त्तकत्वे च

व्यावृत्त्यङ्गीकारस्य वैयर्थ्यात् तथात्वे सविशेषत्वा-
पत्तेर्दुर्वारत्वाञ्च अभेदे सति भेदनिर्वाहकत्वं व्या-
वर्त्तकत्वमितिलक्षणस्य समन्वयात् किञ्च व्यावर्त्य-
मसदादिशब्दवाच्यं सद्विलक्षणमसद्विलक्षणं वा
आद्ये सद्विलक्षणस्य वस्तुत्वे ऽद्वैतभङ्गात् अवस्तुत्वे
व्यावृत्तिवैयर्थ्यात् द्वितीये ब्रह्मण्यतिव्याप्तेः व्यावृत्त-
व्यावर्त्ययोरैक्यापत्तेः किञ्च व्यावृत्तयो ब्रह्मभिन्ना
अभिन्ना वा आद्ये द्वैतापत्तेः द्वितीये व्यावृत्तिर्ब्रह्मेति
सामानाधिकरण्यापत्तेः व्यावृत्तव्यावृत्योरभेदव्यव-
हाराभावाच्च किञ्च व्यावृत्तिर्ब्रह्मणि कल्पिता यथार्था
वा नाद्यः कल्पितस्य व्यावर्त्तकत्वासम्भवात् अ-
न्यथा ब्रह्महत्यादौ कल्पितेनाऽपि धर्मत्वेनाधर्म-
व्यावर्त्तकत्वापत्तेः शूद्रादौ कल्पितेनाऽपि ब्राह्मणत्वेन
शूद्रादिव्यावर्त्तकत्वप्रसङ्गाच्च नद्वितीयः अद्वैतसिद्धा-
न्तभङ्गादित्यलं विस्तरेण किञ्च सत्यादेर्विशेष्य-
मात्रपरत्वे वाक्यस्योद्देशविधेयविभागाभावेन यत्
किञ्चिदित्येव वोधनाद्बुभुत्सानुपरमापत्तेः सामा-
न्यस्य पूर्वमेव प्राप्तत्वात् विशेषस्यानङ्गीकाराच्च
तस्मात्सत्यादिवाक्यानामखण्डार्थनिष्ठत्वोक्तिर्भ्रांति
विजृम्भितैवाग्रे विस्तरेण निरसिष्यते तस्मात्-

स्वरूपलक्षणं सर्वथाऽप्यसिद्धं नाऽपि द्वितीयलक्षणं वक्तुं शक्यं तस्याऽपि सविशेष एव वस्तुनि समन्वेतुमर्हत्वात् ब्रह्मणो लक्ष्यत्वयोगे सुतरां सविशेषत्वापत्तेरिति सङ्क्षेपः ॥

इति परमताभीष्टब्रह्मलक्षणा-
गिरिनिपातः ॥ २ ॥

किञ्च तन्मते कारणासिद्धिरपि दुष्करा विकल्पासहत्वात् शुद्धं जगत्कारणमुपहितं वा अज्ञानाध्यस्तपरमेश्वरो वा आद्ये किं वा शुद्धशब्दाभिधेयं "शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते मैत्रेय भगवच्छब्दः सर्वकारणकारणे" इतिसूत्रकारपितृनिर्णीतः श्रीभगवान्पुरुषोत्तमो वा सर्वप्रमाणविषयो निर्विशेषसंज्ञको वा नाद्यः अनङ्गीकारात् अन्यथा ऽसिद्धान्तापत्तेरस्मत्पक्षप्रवेशाच्च श्लोकार्थस्तु हे मैत्रेय भगवच्छब्दः शुद्धे ब्रह्मणि वर्त्तते इतियोजना तस्य निर्वचनमाह महाविभूत्याख्य इति महती विभूतिर्यस्य स महाविभूतिः सैवाख्या यस्य स तथा तस्मिन् एतेन सर्वविशेषहीनो मानाविषयो ऽत्र शुद्धपदार्थ इति पक्षः श्रीपराशरेणैव निरस्तः स्पष्टो ऽत्र कण्ठरवेण तस्य लक्षणमाह

सर्वकारणाकारणे इति सर्वेषां कारणानां प्रधानकर्मपरमाणुजीवादीनामेकैककार्यविशेषकारणानामपि कारणे "स कारणं कारणाधिपाधिपो न तस्य कश्चिज्जनिता न चाधिप" इत्यादिश्रुतेः तत्र हेतुः परे इति क्षराक्षराभ्यामुत्कृष्टे "प्रधानक्षेत्रज्ञपतिर्गुणेश" इति श्रुतेः नाप्युपहितं ब्रह्मकारणं असम्भवात् तथाहि उपहितं विम्बरूपं प्रतिविम्बरूपं वा कारणत्वेनाभिप्रेतम् अत्राहुः केचित् विम्बात्मकमेव तथाहि एकमेव चैतन्यं विम्बत्वापक्रान्तं सदीश्वरचैतन्यं प्रतिबिम्बत्वाक्रान्तं जीवचैतन्यं चाभिधीयते विम्बप्रतिबिम्वकल्पनोपाधिश्च एकजीववादे अविद्या अनेकजीववादे ऽन्तःकरणानि अविद्यान्तःकरणोपाधिप्रयुक्तो जीवपरयोर्भेदः अविद्याकृतदोषाश्च प्रतिबिम्बे जीव एव न विम्बे परमेश्वरे उपाधेः प्रतिबिम्वपक्षपातित्वात् तत्र बिम्बरूपमेव जगत्कारणमितिचेन्न अनुपपन्नत्वात् ग्रीवास्थमुखस्य दर्पणप्रदेश इव विम्बरूपचेतनस्य जीवप्रदेशे व्याप्त्यभावात्सर्वान्तर्यामिभङ्गप्रसक्तेश्च नाऽपि प्रतिविम्बरूपं जगत्कारणं अविद्याकृतदोषा जीव इव कारणेऽपि स्युः उपाधेः प्रतिविम्ब-

पक्षपातित्वनियमात् प्रतिविम्बवादश्च पूर्वमेव निरस्तो निरसिष्यमाणश्चेति न चरमः अध्यासस्यासिद्ध्या ऽध्यस्तस्य सुतरामसिद्धेः किञ्च किं तावदुपादानत्वं भ्रमाधिष्ठानत्वमिति चेन्न उपादाने मृदादौ भ्रमाधिष्ठानत्वस्य भ्रमाधिष्ठाने च शुक्त्यादौ उपादानत्वस्य व्यवहाराभावात् पारिभाषिकोपादानत्वस्य चानुपादानत्वे एव पर्यवसानात् एतेनासत्यरूपान्तरापत्तिर्विवर्त्तः सत्यरूपान्तरापत्तिस्तु परिणामः रूपान्तरापत्तिमात्रं तूपादानत्वं तच्च ब्रह्मणो विवर्त्तरूपविशेषेणाप्युपपन्नं निर्विकारश्रुतिस्तु तात्त्विकविकाराभावाभिप्रायिका ब्रह्म चाज्ञातप्रपञ्चरूपेण विवर्त्तते इति अज्ञानमपि परिणामितयोपादानान्तर्गतं रूप्यमपि शुक्तिविवर्त्तत्वात् अज्ञानपरिणामत्वाच्चोभयोपादानकमिति निरस्तं त्वया ऽपि मिथ्याभूतस्य मिथ्याभूतमेवोपादानमन्वेषणीयं सत्यत्वे कार्यस्याऽपि कारणस्वभावतया सत्यत्वप्रसङ्ग इति वदता सत्यस्यासत्यरूपापत्तेर्निषेधात् स्वभावत्यागप्रसङ्गाच्च किञ्च सत्यस्यासत्यरूपतापत्तौ तदापत्तियोग्यतारूपधर्मो ऽप्यवश्यंभावी सर्वसामर्थ्यशून्यस्य तथात्वासम्भवात् तथा-

त्वेच निर्विशेषत्वभङ्गात् न चोपादानं माया ईश्वरो निमित्तं शुद्धं ब्रह्माधिष्ठानमिति वाच्यम् अभिन्न-निमित्तोपादानत्वाभावेन त्वन्मते तदर्थस्य प्रकृत्य-धिकरणादेर्विरोधापत्तेः अथ को वा परमेश्वरः मायावच्छिन्नश्चेतन इति चेन्न भ्रान्तत्वप्रसङ्गात् "यः सर्वज्ञः सर्ववित् सत्यकामः सत्यसङ्कल्प" इत्यादि श्रुतिव्याकोपाच्च नच मायावच्छिन्नविषयिकव सार्वज्ञ्यादिश्रुतिः शुद्धे धर्मित्वायोगादितिवाच्यं बालभाषितत्वात् मायावच्छिन्नस्य भ्रान्तस्य सार्व-ज्ञ्यादियोगमनुन्मत्तः को ब्रूयात् जन्माऽन्धस्य कमलनयनसम्बोधनं तदुपहासमात्रमेवेत्यर्थः नच "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर"मिति श्रुत्यैव कण्ठरवेण मायित्वप्रतिपादनात् श्रुतेरेवो-न्मत्तत्वयोगो वाच्यो नास्माकं दोषावह इतिवाच्यं मायित्वं चात्र मायानियन्तृत्वं श्रुत्या विवक्षितं तच्च सार्वज्ञ्याद्यचिन्त्यानन्तस्वाभाविकशक्त्याश्रयस्य ॥ महाविभूत्याख्यस्य शुद्धस्यैवासाधारणधर्मो ना-न्यस्य पारिभाषिकशुद्धस्य मायावच्छिन्नस्य वा स्त्रीसंयोगादपि प्रजोत्पादनं पुंस्त्वधर्मवत एव नतु क्लीबस्य निर्विशेषस्येक्षणबहुभवनसङ्कल्पाद्य-

सम्भवात् मायावच्छिन्नस्य भ्रान्तियोगान्न माया-
नियन्तृत्वसम्भावना ऽपीतिभावः अपिच किं ताव-
त्कर्त्तृत्वं पारिभाषिकं शुक्त्यादिवदधिष्ठानमात्रत्वं
वा भ्रान्तवदध्यासद्रष्टृत्वं वा मायाविम्ववन्मोह-
कत्वं वा कुलालादिवदुपादानगोचरप्रयत्नचिकीर्षा-
दिमत्त्वं वा नाद्यः त्वन्मते ऽधिष्ठानातिरिक्तोपादा-
नत्वाभावेन कर्त्तृत्वोपादानत्वयोः सामानाधिकर-
ण्योक्त्ययोगात् "तदैक्षत नामरूपे व्याकरो"दि-
त्यादिश्रुतीनां वाधाच्च नहि चेतनो ऽचेतनो वा
स्वस्मिन्नारोपितं सङ्कल्प्य करोतीतिभावः नद्वितीयः
भ्रान्तस्य प्रेक्षापूर्वकमारोपितकर्त्तृत्वाभावात् ब्रह्मणो
भ्रान्तत्वेनाकर्त्तृत्वस्य जीवस्य भ्रान्तत्वेन कर्त्तृत्व-
स्यापाताच्च नचेष्टापत्तिः श्रुत्यादिविरोधात् श्रौतं
श्रीपरमेश्वरं मुक्त्वा संसारिणो जगज्जन्मकर्त्तृत्व-
सम्भावनाया असम्भवात् जगत ईश्वरं मुक्त्वा
संसारिणा उत्पत्त्यादि सम्भावयितुमशक्यमित्यादि
त्वद्भाष्यविरोधाच्च नच शुद्धस्याभ्रान्तत्वे ऽपि माया-
सम्वलितः कर्त्तेश्वरो भ्रान्त इतिवाच्यं तथात्वे
तस्य संसाराद्यापातेन सर्वज्ञश्रुतिवाधात् किञ्च पक्ष-
द्वये ऽपि "वैषम्यनैर्घृण्येन सापेक्षत्वा"दित्यादिसूत्रेषु

कर्मसापेक्षत्वेनैव वैषम्यादिपरिहारो ऽयुक्तः स्यात् अधिष्ठानत्वादिना तदप्रसक्तेः न तृतीयः व्यामोहनीयजीवादर्शने व्यामोहकत्वासम्भवात् दर्शनेच भ्रान्तत्वापत्तेः व्यामोहकत्वस्याप्यारोपितत्वेनाऽन्योन्याश्रयापत्तेश्च "नामरूपे व्याकरवाणि ॥ नामरूपे व्याकरो"दित्यादिश्रुतिविरोधाच्च नहि मायावी राजादिकं करवाणीति सङ्कल्प्य करोति किन्तु दर्शयानीति सङ्कल्प्य दर्शयति किञ्च "जन्माद्यस्य यत" इतिसूत्रे अर्थलब्धसार्वज्ञ्यादिकस्फोरणार्थं "शास्त्रयोनित्वा"दितिसूत्रमिति यत्परेषां सिद्धान्तस्य बाधः स्यात् भ्रमाधिष्ठानत्वादिना सार्वज्ञ्याद्यलाभात् नाऽपि चतुर्थः कार्यस्य कल्पितत्वे उक्तलक्षणवत्कर्तृत्वायोगात् नहि घटादिकं रूप्यादि भ्रान्तेन वा ऽन्येन वा क्रियते इतितात्पर्यार्थः तस्मात्स्वभावेनैव निरस्तनिखिलकर्मक्लेशतापविकारावस्थादिदोषलेशास्पृष्टमहिमाचिन्त्यानन्तस्वाभाविकासङ्ख्येयसद्गुणगणसागरो मुक्तोपसृप्यो मुमुक्षुध्येयो ब्रह्मरुद्रेन्द्रादिमहर्ष्यादिनिकायकिरीटकोटीडितपादपीठो भगवांच्छ्रीपुरुषोत्तमो मुकुन्द एव जगदभिन्ननिमित्तोपादानकारणं तत्रैवोक्त-

लक्षणस्य समन्वय इतिसिद्धान्तः विशेषार्थस्य चाग्रे वक्ष्यमाणत्वात् ॥

इति पराभिमतकारणोपपत्ति-
गिरिनिपातः ॥ ३ ॥

अथोक्तलक्षणे ब्रह्मणि प्रमाणमाह "शास्त्रयोनित्वात्" अत्र तावत् प्रमाकरणं प्रमाणं तच्चाष्टविधं प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसम्भवैतिह्यभेदात् तत्र विषयेन्द्रियसन्निकर्षजन्यं ज्ञानं विषयसम्बद्धेन्द्रियं वा प्रत्यक्षप्रमाणं यथाऽयं घट इत्यादि वाह्याभ्यन्तरैकतरकरणकं ज्ञानं प्रत्यक्षं तद्द्विविधं वाह्याभ्यन्तरभेदात् श्रवणादीन्द्रियकरणकं ज्ञानं वाह्यप्रत्यक्षं तच्च पञ्चविधं श्रावणं स्पार्शनं चाक्षुषं घ्राणजं चेति विवेकः मनःकरणकं ज्ञानमान्तरप्रत्यक्षं तदपि द्विविधं लौकिकमलौकिकं च तत्राहं सुखी दुःखी चेति लौकिकसुखादिविषयकत्वाल्लौकिकं अलौकिकप्रत्यगात्मपरमात्मस्वरूपगुणादिविषयकं चालौकिकप्रत्यक्षं तदपि द्विविधं पदार्थध्यानाभिव्यञ्जितं तन्मात्रविषयकं चैकं वाक्यार्थवस्तुध्यानाभिव्यञ्जितं प्रत्यगात्मब्रह्मतादात्म्यसम्बन्धावगाहिज्ञानं द्विती-

यं "मनसैवानुद्रष्टव्य" इति "ततस्तु तं पश्यति निष्कलं ध्यायमान" इत्यादिश्रुतेः ननु "यतो वाचो निवर्त्तन्त" इतिश्रुत्या मनोऽगोचरत्वविधानात्कथमुक्तसिद्धान्तोपपत्तिस्तस्माद्वाक्यजन्यज्ञानस्यैवात्मप्रत्यक्षे हेतुत्वमिति चेन्न श्रुतेः शास्त्राचार्यसंस्कारशून्यमनोनिषेधविषयकत्वात् कार्त्स्न्यागोचरत्वविषयकत्वाद्वा नोक्तदोषावकाशः श्रुत्यर्थस्तु वक्ष्यते उपरिष्टात् वाक्यजन्यज्ञानस्य प्रत्यक्षहेतुत्वोक्तिस्तु बालभाषैव अस्यामेव श्रुतौ वागगोचरत्वस्याऽपि विधानात् अत्र विशेषविचारस्तु साधनवर्णनावसरे विस्तरिष्यते इत्यलं प्रासङ्गिकेन किञ्च यद्यपि प्रत्यगात्मवृत्तितद्धर्मभूतं ज्ञानमनाद्यनन्तं विभु च प्रत्यक्षप्रमाणसिद्धम् "नहिविज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ऽविनाशित्वात् यथाऽणुनश्चक्षुषः प्रकाशो व्याप्त एवमेवास्य प्रकाशो व्याप्त" इत्यादिश्रुतेः "यथा प्रकाशयत्येक" इतिश्रीमुखोक्तेः "तद्गुणसारत्वा"दित्यादिसूत्राच्च तथाऽपि बद्धावस्थायाम् "अज्ञानेनावृतं ज्ञानं ॥ आवृतं ज्ञानमेतेने"त्यादिशास्त्रात् तस्यावृतत्वात् गृहवृत्तिघटस्थदीपप्रभावत् बाह्यान्तःकरणपरतन्त्रत्वात्तत्प्रसरणस्य

तद्विकाशे तेषामसाधारणाकारणत्वं तज्जन्यत्वं च
तस्यौपचारिकं गृहगतघटस्थदीपप्रभा यथा घट-
च्छिद्रेण निर्गत्य गृहद्वारैर्बहिर्निःसृत्य विषयपर्यन्तं
गत्वा विषयं स्वात्मनाऽभिव्याप्यात्मानं च विषयं च
प्रकाशयति तथेदं प्रत्यग्ज्ञानमपि मनः परिणाम-
द्वारा चक्षुरादिकं गत्वा तत्परिणामद्वारा विषयं
प्राप्य तञ्च स्वात्मना ऽभिव्याप्य प्रकाशयति
स्वात्मानं चापीति घटं जानामीति प्रतीतेः तथोक्तं
विवरणाकारैः श्रीपुरुषोत्तमाचार्यपादैः बन्धमोक्ष-
व्यवस्थाप्रकरणे तस्मात्तद्विषयकज्ञानसङ्कोचलक्ष-
णाज्ञाननिवृत्तौ तज्ज्ञानविकाशो भवत्येव घटस्थ-
दीपस्य तदात्मकप्रतिबन्धसङ्कुचितप्रभस्य घटा-
त्मकप्रतिबन्धनिवृत्तौ तत्प्रभाप्रकाशवदित्यादिना
तद्विषयत्वं नाम ज्ञानस्य स्वाकारभाजयितृत्वे सति
तत्प्रकाश्यत्वं तदेव ज्ञेयप्रमेयादिशब्दाभिधेयं
विषयित्वं च विषयाकारभजनशीलत्वे सति तत्प्र-
काशकत्वं तदेव प्रमाणादिशब्दाभिधेयं अतएव
घटादिपदार्थानां घटत्वाद्यवच्छिन्नस्वरूपेण सत्वे
ऽपि ज्ञानासम्बद्धत्वात्प्रकाशाभावो विरुद्धः विषय-
लक्षणवत्त्वाभावात् किञ्च प्रमाणज्ञानसम्बन्धस्यैव

प्रमेयत्वात्तदपृथक्सिद्धत्वाच्च ज्ञेयस्यातस्तदनुपल-
ब्धिरपि सुवचेति सङ्क्षेपः आन्तरानुभवेन
वाह्येन्द्रियाणामतन्त्रत्वान्म नोमात्रेण सुखादीनां
प्रत्यक्षानुभवः प्रत्यगात्माद्यनुभूतौ तु विषयस्य
स्वप्रकाशत्वेन मनोनियमनमात्रमेव कारणं
नान्यत् मनस्येकाग्रे सति ध्यानसिद्ध्या तत्प्रति-
वन्धकनिवृत्त्या तत्साक्षात्कारो नतु ध्यानजन्यः
तस्य तत्प्रतिवन्धकनिवर्त्तनेनैवोपक्षीणत्वात् "मन-
सैवानुद्रष्टव्य" इतिश्रुतेः "ततस्तु तं पश्यति
निष्कलं ध्यायमान" इत्यादिश्रुतेश्च मनसोध्यान-
करणत्वे विनियोगः ध्यानस्य प्रतिवन्धकनिवृत्तौ
सत्यां च भगवदनुग्रहेण तत्साक्षात्कार इति
"श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादि-
श्रुतेः आदौ श्रीगुरूपसत्तिपूर्वकं तन्मुखाद्वेदान्त
शास्त्रश्रवणेन तदनन्तरं मननेन तद्विषयकसंशया-
दींश्छित्वा मनसा निदिध्यासनद्वारा तत्प्रतिवन्धक-
निवृत्तौ श्रीमुकुन्दप्रसादात्तत्साक्षात्कारस्तेन मोक्ष
इति सिद्धान्तः विशेषार्थश्च साधनाध्याये वक्ष्यते
इति प्रत्यक्षप्रमाणसङ्ग्रहः लिङ्गपरामर्शोऽनुमानं
महानसादौ धूमे व्याप्तिं गृहीत्वा पश्चात्पर्वतादौ

धूमं पश्यति ततो धूमो वह्निव्याप्य इत्येवंरूप व्याप्तिस्मरणं ततोवन्हिव्याप्यधूमवानयमिति परामर्श उच्यते तदेवानुमानं ततो वन्हिमानय-मित्यनुमितिज्ञानं जायते इति लीनं गममतीति लिङ्गंहेतुसाधनादिशब्दाभिधेयं व्याप्तिबलेनार्थगम-कत्वात् साध्यवदन्यावृत्तित्वे सति साध्यसामाना-धिकरण्यं व्याप्तिः भवति हि धूमस्य हेतोः साध्य-वह्नयो महानसादिभ्यो ऽन्येषु ह्रदादिष्ववृत्तित्वं साध्येन वन्हिना सामानाधिकरण्यमिति लक्षणा-समन्वयः ईदृग्व्याप्तिग्रहणे एव धूमो ऽग्निं गमयति नान्यथेति युक्तमुक्तं व्याप्तिबलेनेति एवं स्वार्थानु-मानप्रकार उक्तः स्वस्मा अनुमिति ज्ञानहेतुत्वात् अथ परार्थानुमानं परार्थत्वं च उक्तप्रकारेण स्वयं धूमादग्निमनुमाय परं बोधयितुं प्रवृत्तः पञ्चावय-वानुमानवाक्यं प्रयुङ्क्ते तत्त्वं अवयवत्वं च प्रति-ज्ञाद्यन्यतमत्वं उक्तलक्षणवाक्यैकदेशत्वं वा ते च पञ्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्याः तत्र साध्यविशिष्टपक्षबोधकवाक्यं प्रतिज्ञा यथा पर्वतो वन्हिमान् इति धूमत्वादित्यादिपञ्चम्यन्तं पक्ष-धर्मताबोधकं कुत इतिशङ्कोपशमकं वाक्यं हेतुः

व्याप्तिविशि ष्टदृष्टान्तबोधकं धूमोऽस्त्वग्निर्मास्तु इति शङ्कोपशमकं वाक्यमुदाहरणं यत्र धूमस्तत्राग्निर्यथा महानस इति पक्षे हेतूपसंहाररूपं वाक्यं उपनयः यथा चायं वन्हिव्याप्यधूमवानयमित्यर्थः पक्षे साध्योपसंहाररूपं वाक्यं निगमनं तस्माद्वन्हिमानिति गौतमीयाः त एव प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायशब्दैर्निर्दिश्यन्ते काणादैः तत्र प्रतिज्ञादिभिस्त्रिभिरुदाहरणावसानैरनुमानस्य ॥ सम्भवादाधिक्यं गौरवमात्रमिति सिद्धान्तः लिङ्गं त्रिविधं केवलान्वयिकेवलव्यतिरेकिउभयरूपञ्च तत्र वृत्तिमदत्यन्ताभावाप्रतियोगिसाध्यको हेतुराद्यः यथेदं वाच्यं ज्ञेयत्वादित्यादि भवति हि वाच्यत्वरूपसाध्यस्य वृत्तिमद्भयो भूम्यादिभ्यः स्वात्यन्ताभावप्रतियोगिभ्यो भिन्नत्वं तद्धेतुभूतस्य ज्ञेयत्वरूपस्य लिङ्गस्य केवलान्वयित्वसिद्धिः यद्वा विपक्षशून्यो हेतुः केवलान्वयी निश्चितसाध्याभाववात् विपक्षः सच निश्चितवाच्यत्वाभाववान्कोऽपि नास्ति सर्वस्य वाच्यत्वात् अनवगतसाध्यसाधनसाहचर्यको हेतुः केवलव्यतिरेकी यथा पृथिवी इतरभिन्ना गन्धवत्त्वात् अत्र गन्धस्य जलादिभेद-

साहचर्यं कुत्राप्यदृष्टचरं किन्तु यत्रेतरत्वं तत्र गन्धाभाव इतीतरभेदाभावगन्धाभावयोरेव सामानाधिकरण्यमवगतम् अतो व्यतिरेकयोः साध्याभावहेत्वभावयोरेव व्याप्तिग्रहात्केवलव्यतिरेकीतिसिद्धं यद्वा सपक्षहीनो हेतुः केवलव्यतिरेकी निश्चितसाध्यवान्सपक्षः यथाधूमहेतौ महानसादिः स चास्य नास्ति पृथिवीमात्रस्य पक्षत्वात् सन्दिग्धसाध्यवान्पक्षः यथा तस्मिन्नेव हेतौ पर्वतादिः नच गन्धहेतोर्व्याप्त्यग्रहादितरभेदव्याप्यगन्धवानयमिति परामर्शासम्भवात्कथमनुमितिरिति वाच्यं साध्याभावव्यापकाभावप्रतियोगिहेतुमानयमितिव्यतिरेकिणि परामर्शाङ्गीकारात् यत्र साध्यहेत्वोस्तदभावयोश्च व्याप्तिरवगम्यते सोऽन्वयव्यतिरेकी यथा यत्र धूमस्तत्राग्निः यथा महानसः यत्राग्न्यभावस्तत्र धूमाभावः यथा महाह्रदः इयांस्तु विशेषः अन्वयव्याप्तौ यद्व्याप्यं तदभावव्यतिरेकव्याप्तौ व्यापकः तत्रैव यद्व्यापकं तदभावोऽत्र व्याप्य इति तदुक्तं व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते तयोरभावयोस्तस्माद्विपरीतः प्रतीयते १ अन्वये साधनं व्याप्यं साध्यं व्यापक-

मिष्यते साध्याभावो ऽन्यथाऽव्याप्यो व्यापकः साधनात्ययः २ व्याप्यस्य वचनं पूर्वं व्यापकस्य-ततः परं एवं परीक्षिता व्याप्तिः स्फुटी भवति तत्त्वत इति ३ व्याप्तिर्द्विधा प्रत्यक्षादिप्रमाणग्राह्या-शास्त्रैकग्राह्या च तत्र लौकिकपदार्थविषयिकानु-मितिहेतुभूता प्रथमा प्रकृतिर्नात्मा जडत्वात् घट-वत् भूतानि नात्मा कार्यत्वात् घटादिवत् देहो नात्मा कार्यत्वात् जडत्वाच्च घटादिवत् इन्द्रियाणि मनो बुद्धिश्च नात्मा करणत्वात् दण्डादिवत् प्राणो नात्मा कार्यत्वात् भौतिकत्वात् जडत्वाच्च व्यजनजन्यवायुवत् शब्दादयो नात्मा कार्यत्वात् शरीरवत् अहङ्कारो नात्मा कारणत्वात्कुठारादि-वदित्यादिप्रयोगात् प्रत्यगात्माद्यलौकिकपदार्थ-विषयकानुमितिहेतुभूता द्वितीया प्रत्यगात्मा ज्ञानस्वरूपः चेतनत्वात् स्वप्रकाशत्वात् ॥ अचेत-नभिन्नत्वाच्च ब्रह्मवत् "योऽयं विज्ञानघन" इतिश्रुतेः प्रत्यगात्मा ज्ञाता आत्मत्वात् ब्रह्मवत् "विज्ञातार-मरे केन विजानीयात्" इतिश्रुतेः आत्मा ऽनु-च्छिन्नधर्मा चेतनत्वाद्ब्रह्मवत् "अविनाशी वा अरे आत्मा ऽनुच्छित्तिधर्मे"तिश्रुतेः जीवः प्रकृतितत्-

कार्यपरः ज्ञातृत्वात् ब्रह्मवत् "तस्माद्वा एतस्मान्-मनोमयादन्योऽन्तर आत्मा विज्ञानमय" इतिश्रुतेः प्रत्यगात्मा परमेश्वरायत्तस्वरूपस्थित्यादिकः नियम्यत्वात् देहेन्द्रियादिवत् "यदासीत्तदधीनमासीत् नारायणात् प्रवर्त्तते ॥ य आत्मानमन्तरो यमयती"त्यादिश्रुतेः जीवो ऽणुपरिमाणकः उत्क्रान्त्यादिमत्त्वात् यन्नैवं तन्नैवं परमात्मवत् "अणुर्ह्येष आत्मा एष आत्मोत्क्रामती"त्यादिश्रुतेः जीवात्मा विभुपरिमाणकज्ञानाश्रयः चेतनत्वात् ब्रह्मवत् "यथा ऽणुनश्चक्षुषः प्रकाशो व्याप्त एव मेवास्य प्रकाशो व्याप्त" इतिश्रुतेः "नित्यं विभु"मितिश्रुतेश्च नच परिच्छिन्नपरिमाणकस्य विभुधर्माश्रयत्वादर्शनादसम्भव इति वाच्यं द्युमण्यादौ तस्य प्रत्यक्षगम्यत्वात् "यथा प्रकाशयत्येक" इतिस्मृतेश्च परमेश्वरः चेतनाचेतनाभ्यामुत्कृष्टः सार्वज्ञ्यात्सर्वनियन्तृत्वाच्च व्यतिरेके ऽस्मदादिवत् "यः सर्वज्ञः सर्ववित् ॥ अन्तःप्रविष्टः शास्ता जनाना" मितिश्रुतेः परमेश्वरो जीवप्रकृतिभिन्नः आत्मत्वात् व्यतिरेके घटादिवत् "पतिं विश्वस्यात्मेश्वर"मितिश्रुतेः परमेश्वरो ऽचिन्त्यानन्तासङ्ख्येयस्वाभाविकसद्गुण-

श्रय: सर्वविलक्षणत्वात् व्यतिरेके चेतनाचेतन-
वर्गवत् "परा ऽस्य शक्तिर्विविधैवे"तिश्रुतेः पर-
मेश्वरः सर्वात्मा अनन्तत्वे सति चेतनत्वात् व्यति-
रेके प्रधानादिवत् "एष सर्वभूतान्तरात्मे"तिश्रुतेः
परं ब्रह्म जगदभिन्ननिमित्तोपादानम् अचिन्त्यशक्ति-
मत्त्वे सति चेतनत्वात् व्यतिरेके प्रधानादिवत्
"स्वयमात्मानमकुरुत सच्च त्यच्चाभवदि"तिश्रुतेः
ब्रह्म शास्त्रैकप्रमाणवेद्यम् अन्यप्रमाणागोचरत्वात्
व्यतिरेके घटादिवत् "सर्वे वेदा यत्पदमामनन्ति ॥
नावेदविन्मनुते तं बृहन्तं को ऽद्धा वेदे"त्यादि-
श्रुतेः ब्रह्मरुद्रादयो जीवात्मानः परमेश्वरजन्य-
त्वात्परोपदेश्यत्वात् परनियम्यत्वाच्चास्मदादिवत्
नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते"
इत्यादिश्रुतेः विश्वात्मेश्वरादितरध्यानोपासनादि-
र्मोक्षप्रतिबन्धकः अशुद्धहेतुत्वात् युवतिध्यानवत्
अज्ञविषयत्वात् परसम्मतपूर्वकाण्डवत् तुच्छफल-
त्वात् काम्यकर्मफलवत् तेषां परदत्तदातृत्वाच्चा-
स्मदादिवत् तस्मात्समस्तशक्तीनामाधारे तत्र
चेतसः कुर्वीत संस्थितिं सातु विज्ञेया शुद्धधा-
रणा "शुभाश्रयः सचित्तस्य सर्वगस्य तथाऽऽत्मनः

अन्ये च पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनय" इतिवैष्णवे अशुद्धहेतुत्वम्" अथ योऽन्यां देवतामुपास्त इत्यादि श्रुतेरज्ञविषयत्वं "अन्तवत्तु फल"मितिस्मृतेस्तुच्छफलत्वं "लभते च ततः कामान्मयैव विहितानि"तिपरदत्तदातृत्वं परमते तु जीवात्मा अलीकः प्रतिबिम्बत्वात्तरुप्रतिबिम्बवत् बिम्बभूतं ब्रह्म मिथ्या बिम्बशब्दाभिधेयत्वात् प्रतिबिम्बनधर्मवत्त्वात् घटादिवत् वृक्षादिवच्च पराभिमतमोक्षोऽलीकः स्वरूपनाशरूपत्वात् बिम्बभावापन्नमुखादिप्रतिबिम्बवत् श्रवणादिसाधनं व्यर्थं फलशून्यत्वाज्जलताडनवत् परमते जिज्ञासाशास्त्रारम्भो व्यर्थः प्रयोजनशून्यत्वाज्जलताडनादिवत् मुमुक्षोः साधनप्रवृत्तिः फलशून्या मोक्षस्य मिथ्यात्वात्स्वप्नसुखार्थप्रवृत्तिवत् निर्विशेषं वस्तु तुच्छं सर्वप्रमाणशून्यत्वात् नामधेयमात्रत्वात् शशशृङ्गादिवदित्यादिप्रयोगा अनुसन्धेयाः पदार्थादिपरीक्षा चोपोद्घातग्रन्थे पूर्वमेवोक्तेत्यलं प्रासङ्गिकेन प्रकृतोऽन्वयव्यतिरेकी हेतुः पञ्चविशेषोपपन्न एव साध्यसाधने समर्थो नत्वेकेनाऽपि हीनः विशेषाश्च पक्ष-

धर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तत्वं अबाधितविषयत्वं असत्प्रतिपक्षत्वं चेति तेच धूमादावन्वयव्यतिरेकिणि हेतौ सन्ति तथाहि धूमवत्त्वं हि पक्षस्य पर्वतादेर्धर्मस्तस्य सत्त्वात् तथैव सपक्षे महानसादौ सत्त्वात् विपक्षाज्जलह्रदादेर्व्यावृत्तत्वं तत्रावृत्तित्वात् अबाधितविषयत्वं च तद्विषयस्य साध्यस्याग्नेः केनाऽपि मानेन बाधितत्वात् एवमसत्प्रतिपक्षत्वं साध्यविपरीतसाधको हेतुः सत्प्रतिपक्षः सच धूमवत्त्वे हेतौ नास्ति अनुपलम्भात् पञ्चविशेषयोगादस्य साध्यगमकत्वं अग्निमत्त्वस्य साधकत्वं अग्नेः पर्वतादिपक्षधर्मत्वं हेतोः पक्षधर्मतावलात्सिद्ध्यति तथाहि अनुमानस्य द्वे अङ्गे व्याप्तिः पक्षधर्मता च तत्र व्याप्त्या साध्यसामान्यसिद्धिः पक्षधर्मतावलात्पक्षसम्बन्धित्वविशेष इति पक्षधर्मेण धूमवत्त्वेनाग्निरपि पर्वतसम्बद्ध एवानुमीयते अन्यथा साध्यसामान्यस्य व्याप्तिग्रहादेव सिद्धेरलमनुमानेनेति सङ्क्षेपः केवलव्यतिरेकिहेतोस्तु सपक्षव्यावृत्तत्वं नास्ति सपक्षाभावात् केवलान्वऽयि हेतोश्च विपक्षव्यावृत्तत्वं नास्ति विपक्षाभावात् एवंभूतस्त्रिविधो ऽपि हेतुरनुमितिसाधकः अथानु-

मितिबाधको हेतुर्हेत्वाभासः हेतुलक्षणरहितत्वे सति हेतुवद्भासमानत्वं तत्त्वं सच पञ्चविधः असिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदात् तत्राश्रयासिद्ध्याद्यन्यतमत्वमसिद्धत्वं स त्रिविधः आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्च पक्षे पक्षतावच्छेदकाभाव आश्रयासिद्धत्वं यथा गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवदित्यत्र पक्षतावच्छेदकं गगनीयत्वं प्रसिद्धे ऽरविन्दे नास्तीति लक्षणसमन्वयः पक्षे व्याप्यत्वाभिमतस्याभावः स्वरूपासिद्धत्वं यथा जलं रसवत् गन्धवत्त्वात् अत्र गन्धवत्त्वस्य व्याप्यत्वाभिमतस्य हेतोर्जले ऽभावात् व्याप्त्यभाववान् व्याप्यत्वासिद्धः साध्याद्यप्रसिद्धत्वं वा स द्विविधः व्याप्तिग्राहकप्रमाणविधुरएकः सोपाधिको द्वितीयः तत्राद्यो यथा यत्सत्तत्क्षणिकं सत्त्वात् घटवत् अत्र सत्त्वक्षणिकत्वयोर्व्याप्तिग्राहकप्रमाणाभावात् द्वितीयो यथाक्रत्वर्था हिंसा ऽधर्महेतुर्हिंसात्वात् वाह्यहिंसावत् अत्राधर्मसाधनत्वे हिंसात्वं न प्रयोजकं किन्तु निषिद्धत्वमेव प्रयोजकमुपाधिः उपाधित्वं च साध्यव्यापकत्वे सति साधनाव्यापकत्वं भवति हि

निषिद्धत्वमधर्मेण व्याप्तं यत्र निषिद्धत्वं तत्राधर्मत्वमिति साध्यव्यापकत्वं यत्र हिंसा तत्र निषेध इति व्याप्तिर्नास्ति क्रतुहिंसायाश्च निषिद्धत्वात् प्रत्युत "वायव्यं श्वेतमालभेते"तिविधिप्राप्तत्वात् साधनाव्यापकत्वमिति लक्षणसमन्वयः उपाधिश्चतुर्विधः केवलसाध्यव्यापकः पक्षधर्मतावछिन्नसाध्यव्यापकः साधनावछिन्नसाध्यव्यापकः उदासीनधर्मावच्छिन्नसाध्यव्यापकश्च तत्र धूमवान् वन्हेरिति प्रयोगे आर्द्रेन्धनसंयोग आद्यः तस्य केवलेन धूमेन व्यापकत्वात् वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र वहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूत रूपवत्त्वमुपाधिः पक्षभूतस्य वायोर्वहिर्द्रव्यत्वावच्छिन्नत्वात् तदवच्छिन्नमेव प्रत्यक्षत्वरूपं साध्यं व्याप्नोति द्वितीयः ध्वंसो विनाशी जन्यत्वात् अत्र जन्यत्वरूपसाधनावच्छिन्नविनाशित्वेन साध्येन व्यापकत्वात् भावत्वमुपाधिस्तृतीयः प्रागभावोविनाशी जन्यत्वात् अत्राजन्यत्वावच्छिन्ननित्यत्वरूपसाध्यव्यापकं भावत्वमुपाधिश्चतुर्थः १ साध्याभावव्याप्तः साध्यासमानाधिकरणो वा हेतुर्विरुद्धः शब्दो नित्यः कृतकत्वात् अत्र कृतकत्वस्य नित्य-

रूपसाध्याभावेनानित्यत्वेन सह व्याप्तत्वात् यत्र कृतकत्वं तत्रानित्यत्वमिति २ साध्यव्यभिचरितो हेतुरनैकान्तिकः स त्रिविधः साधारणासाधारणानुपसंहारिभेदात् तत्र साध्यवदन्यवृत्तिः साधारणः यथा धूमवान्वह्नेरित्यत्र धूमवदन्यत्र तप्तायोगोलकादौ वह्नेर्व्याप्तत्वात् सपक्षविपक्षवृत्तिर्वा यथाशब्दो नित्यः प्रमेयत्वात् अस्योभयत्र वृत्तित्वात् साध्यव्यापकीभूताभावप्रतियोगी द्वितीयः सपक्षविपक्षव्यावृत्तो वा नित्या भूः गन्धवत्त्वात् गन्धवत्त्वं हि उभयस्माद्व्यावृत्तं भूमात्रवृत्तित्वात् शब्दो नित्यः शब्दत्वात् शब्दत्वं नित्यत्वव्यापको यः शब्दत्वात्यन्ताभावस्तत्प्रतियोगी अथान्वयव्यतिरेकिदृष्टान्तहीनो ऽनुपसंहारी यथा सर्वमनित्यं प्रमेयत्वात् अत्रोभयविधदृष्टान्ताभावात् अवृत्तिसाध्यकत्वं वा यथाऽऽकाशवान् धूमात् आकाशस्य तत्साध्यस्य वृत्तित्वं नास्ति केवलान्वयित्वात् अवृत्तित्वं अत्यन्ताभावाप्रतियोगित्वं ३ साध्यविपरीतसाधकहेत्वन्तरः प्रतिपक्षः स विद्यते यस्य स सत्प्रतिपक्षः यथा जलमुष्णं स्पर्शवत्त्वात् जलं नोष्णम् अतेजस्त्वात् इति स एव प्रकरणसम इत्युच्यते ४ पक्षे प्रमा-

णान्तरावगतसाध्याभावको हेतु र्वाधितः पक्षे साध्यशून्यत्वं वा हेतुप्रसिद्धिर्वा यथा जलमुष्णं वह्नित्वात् अत्र पक्षे जले उष्णत्वसाध्याभावस्य प्रत्यक्षेणावगतत्वात् तथैव पक्षे जले उष्णत्वा-भावात् तस्यैवाप्रसिद्धत्वं वह्नित्वहेतोरप्रसिद्धत्वा-च्चेति लक्षणसमन्वयः स एव कालात्ययापदिष्ट उच्यते ५ एतेषु वाधितस्य ग्राह्याभावनिश्चयेन सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनु-मितिप्रतिवन्धकत्वम् इतरेषां परामर्शप्रतिवन्धकत्वं तत्राऽपि साधारणस्याव्यभिचाराभावतया विरु-द्धस्य समानाधिकरणाभावतया व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभावतया ऽसाधारणानुपसंहारिणो-र्व्याप्तिसंशयाविधायकतया च व्याप्तिप्रतिवन्धकत्वं आश्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रति-वन्धकत्वं सोपाधिकस्तु व्यभिचारद्वारा व्याप्तिज्ञान-प्रतिवन्धक इतिसङ्क्षेप इत्यनुमानम् २ सादृश्य-ज्ञानमुपमानं सादृश्यं च तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वं तद्विषयकं ज्ञानमुपमानमित्यर्थः तच्च द्विविधं प्रत्यक्षमूलं श्रुतिमूलं चेति यथा चन्द्र-वन्मुखमिति भवत्यत्र मुखस्य भिन्नत्वं द्रष्टृल्हाद-

जनकत्वस्य चन्द्रगतभूयोधर्मस्य तत्र सत्त्वमिति लक्षणासमन्वय इत्याद्यस्योदाहरणम् अथ द्वितीयम् "निरञ्जनः परमं साम्यमुपैती"ति मुक्तजीवस्य ब्रह्मसादृश्यश्रवणात् भवति च मुक्तजीवस्य परतन्त्रसत्तावच्छिन्नस्य स्वतन्त्रसत्ताश्रयाद्ब्रह्मणो भिन्नत्वं मुक्तस्य चैतन्यसार्वज्ञ्यादिब्रह्मगतभूयोधर्मवत्त्वं चेति लक्षणासमन्वयः "नित्यो नित्यानां तन्महिमानामिति वीतशोकः सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वश" इत्यादिनोभयविधत्वश्रवणात् व्याख्याता चेयं श्रुतिः श्रीमुखेन "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता" इत्यादिना एतेन साम्यशब्दः स्वरूपाभेदपर इतिनिरस्तं तत्र रूढ्याद्यभावात् "नच निर्दोषं हि समं ब्रह्मे"ति समशब्दो ब्रह्मपरत्वेन श्रीभगवतैव गीत इतिवाच्यं तत्रापि भावप्रत्ययदर्शनात्समस्य ब्रह्मणो भावः साम्यं तस्मिन्साम्ये ब्रह्मभावलक्षण इत्यर्थः तच्चास्माकमपीष्टापन्नमेव अन्यथा सर्वथा ऽभेदपरत्वाङ्गीकारे "ब्रह्मणि ते स्थिता" इतिभेदविधायकवाक्यशेषविरोधादिति संक्षेपः २ अथ शब्दो निरूप्यते आप्तप्रयुक्त वाक्य शब्दरूपं प्रमाणम् आप्तत्वं नाम भ्रमहेत्वभावसह-

कृतपदवाक्यप्रमाणावेत्तृत्वे सति यथार्थवक्तृत्वं भ्रमहेतवस्तावच्चत्वारः बुद्धिमान्द्यमिन्द्रियापाटवविप्रलिप्सादुराग्रहश्चेति तत्राप्ततमो वेदः स्वतः प्रामाण्यात् आप्ततरा मनुव्यासादयो वेदार्थस्मर्त्तारः तदुक्तीनां श्रुतिसापेक्षत्वात् श्रुतिस्मृतिव्याख्यातारश्चाप्ताः उभयसापेक्षत्वात् तन्निर्णायस्य तेषां वाक्यं प्रमाणं वाक्यत्वं च आकाङ्क्षायोग्यतासत्त्यादि* मत्त्वे सति पदसमुदायत्वं तत्र यत्पदेन विना यत् पदस्यान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षा-क्रियापदस्य कारकपदं विना कारकपदस्य क्रियापदं विना शाब्दबोधाजनकत्वात् तयोरितरेतराकाङ्क्षा अन्वयानुपपत्तिराकाङ्क्षेति यावत् ज्ञातुरितरेतराकाङ्क्षाजनकत्वेनैव पदानां साकाङ्क्षत्वं नत्वाकाङ्क्षावत्त्वेन तस्य चेतनासाधारणधर्मत्वात् शब्दस्याचेतनत्वेन तत्त्वायोगात् एतेन हस्ती गौरश्व इत्यादिपदसमुदायस्य वाक्यत्वमिति निरस्तम् आकाङ्क्षाशून्यत्वात् पदार्थसंसर्गावाधो योग्यता पदार्थस्य पदार्थान्तरसम्बन्धो वा अग्निना सिञ्चेदित्यस्य पदसमुदायत्वे ऽपि न वा-

---

* आदिनातात्पर्यज्ञानम्

क्यत्वं योग्यताभावात् इतरेतरान्वयसापेक्षाणां पदानामविलम्बेनोच्चारणमासत्तिः सैव सन्निधिरुच्यते कालव्यवधानेनोच्चरितपदसमुदायस्य न वाक्यत्वं तत्रासत्त्यभावात् वृत्तिमद्वर्णसमुदायः पदम् वृतिमत्त्वं च पदपदार्थयोः स्मार्यस्मारकत्वरूपसम्बन्धः प्रकृतिप्रत्ययः भिन्नपदार्थाभिधानं वा वृत्तिर्द्विधा शक्तिर्लक्षणा च तत्राभिधेतिसञ्ज्ञकापदार्थान्तरभूता सामान्यमात्राभिधानपरा सङ्केतलभ्येति कर्ममीमांसका अस्मात्पदादयमर्थोबोध्य इतीश्वरसङ्केतरूपा जातिविशिष्टपदार्थबोधिकेतिगौतमीयाः अर्थैः साकं शब्दानां योग्यतालक्षणानित्यसम्बन्धरूपेति शाब्दिकाः पदपदार्थयोर्वाच्यवाचकत्वरूपशब्दवृत्तितदर्थज्ञापनार्हसामर्थ्यं पदार्थान्तरं वह्निवृत्तिदाहकतासामर्थ्यवत्स्वाभाविकी शक्तिरित्यौपनिषदाः सा शक्तिस्त्रिधा रूढिर्योगोयोगरूढिश्च समुदाये शक्तीरूढिः यथा गौर्नीलं शुक्लो डित्थो लोष्ट इत्यादिरूढाः शब्दा द्विविधा अनेकार्थाः पर्यायरूपाश्च तत्राद्याः हरिगोपतङ्गादयः द्वितीयाश्च हस्तकरादयः अवयवे शक्तियोंगः यथा माधवो गोपीकान्तो गोवर्द्धनधरो धरणीधर इत्यादयः

उभयत्र शक्तिस्तृतीया यथा विष्णुः व्यापनप्रवेश-
नयोगात् विष्णुपदार्थः परमेश्वरः "विष्णुनामा
स वेदेषु वेदान्तेषु च गीयते" इति रूढ्या ऽपि स
एवार्थः शक्यसम्बन्धो लक्षणा स्वशक्येन सह नि-
यम रूपव्याप्तिरेव लक्षणेति मीमांसकास्तच्चिन्त्यं
मञ्चाः क्रोशन्तीत्यत्र मञ्चपदस्य मञ्चस्थे लक्षणा-
भावप्रसङ्गात् मञ्चपुरुषयोर्व्याप्तेरनियतत्वात् गङ्गा-
दिपदानां तीरे शक्तिरेव सर्वेषामपि पदानां सर्वत्र
शक्तिमत्त्वात् लक्षणाभिन्नवृत्तित्वमेव नास्ति गौरव-
मात्रत्वात्तदङ्गीकारस्येति शाब्दिकैकदेशिनस्तत्तुच्छं
सर्वेषां पदानां सर्वपदार्थोपस्थापकत्वे सर्वेष्वपि
वाक्यस्थपदेष्वेकतमेनाऽपि सर्वपदार्थोपस्थित्या-
पत्त्या तस्यैव कारकविशेषस्य सर्वपदार्थोपस्था-
नार्थं पौनःपुन्येन प्रयोगादपि वाक्यार्थबोधापत्तेः
पदान्तरप्रयोगवैयर्थ्याच्च तथात्वप्रवृत्त्यदर्शनाच्च सा
द्विधा लक्षणा लक्षितलक्षणा च साक्षाच्छक्यसम्-
बन्धरूपा प्रथमा सा त्रिधा जहत्स्वार्था ऽजहत्स्वार्था
जहदजहत्स्वार्था चेति तत्रशक्यत्वावच्छिन्नपदार्थ-
परित्यागेन तत्सम्बन्धिविशेषे वृत्तिः प्रथमा यथा
गङ्गायां घोष इत्यत्र गङ्गापदस्य शक्यस्तावत्प्रवाह-

स्तस्य सर्वांशत्यागेन तत्सम्बन्धितीरादौ वृत्तिः स्वार्थापरित्यागेनान्यत्र वृत्तिर्द्वितीया यथा काकेभ्यो दधिरक्ष्यतामत्र दध्युपघातकत्वेन काकपदस्य स्वशक्येषु काकेषु तदितरमार्जारादिषु च वृत्तिः साच शक्तिसमाना वलवती स्वार्थात्यागात् शक्यैकदेशपरित्यागेन तदवशिष्टशक्यैकदेशवृत्तिस्तृतीया यथा घटो नित्य इत्यत्र व्यक्तेर्नित्यत्वस्य प्रत्यक्षादिना वाधात्तत्त्यागेन तदेकदेशभूते घटत्वसामान्ये वृत्तिः तामेव भागत्यागलक्षणेत्याहुः शक्यपरम्परासम्बन्धो लक्षितलक्षणा यथा द्विरेफो भ्रमर इत्यत्र द्विरेफपदस्य शक्यं रेफद्वयं तस्य भ्रमरपदेन सम्बन्धः भ्रमरपदस्य मधुकरेण सम्बन्धः एवं द्विरेफपदस्य मधुकरेण परम्परासम्बन्धात् लक्षणासमन्वयः सैव गौणीत्युच्यते यथा सिंहो देवदत्त इत्यत्र सिंहपदस्य मृगविशेषः सिंहो नाम शक्यः तस्य क्रौर्यादिगुणैः सम्बन्धस्तेषां च देवदत्ते सम्बन्धाल्लक्षणासमन्वयः सिंहपदस्य लक्ष्येण देवदत्तेन शक्यपरम्परासम्बन्धस्य सत्त्वात् अभिधेयाविनाभूतप्रवृत्ति * र्लक्षणेष्यते लक्ष्यमाणगुणैर्यो-

* अभिधेयं गङ्गादिपदवाच्यं प्रवाहादि तेन विनाभूते नित्य-

गावृत्तेरिष्टा तु गौणतेतिवचनात् इति सङ्क्षेपः अथ वृत्तिभेदादर्थोऽपि द्विविधः शक्यो लक्ष्यश्च तत्र शक्तिविषयः प्रथमः शक्यसम्बन्धित्वे सति लक्षणाविषयो द्वितीयः उभयविधस्याऽपि बोधे शक्तिग्रहस्य कारणत्वात् शक्तिग्रहमन्तरेण वाच्य-ज्ञानाभावस्तदभावे च लक्ष्यज्ञानस्य सुतरामभावः वाच्यज्ञानाधीनत्वाल्लक्ष्यज्ञानस्य पदान्तरवाच्यत्वाच्च लक्ष्यस्येति भावः एतेन तत्त्वमस्यादिवाक्यस्य सत्यादिवाक्यस्य च लक्षणया ऽखंडार्थपरत्वमभ्युप गच्छन्तो निरस्ताः लक्ष्यार्थस्य वाच्यत्वानङ्गीकारात् पदान्तरवाच्यत्वे च मिथ्यात्वापत्तेः पराभिमत-लक्ष्यार्थो मिथ्या अन्यपदावाच्यत्वात् खपुष्पवत् लक्ष्यार्थो मिथ्या पदान्तरवाच्यत्वात्तन्मते तीरादि-वदित्यनुमानात् अयम्भावः तत्त्वमस्यादिलक्ष्यार्थः पदान्तरवाच्यो नवा आद्यो वाच्यत्वसिद्ध्या मिथ्यात्वावश्यम्भावात् अवाच्यत्वे सिद्धान्तभङ्गाच्च द्वितीये चासम्भवः यल्लक्ष्यं तद्वाच्यमितिव्याप्तिवत् यल्लक्ष्यं तदवाच्यमिति व्याप्त्यभावात् पदान्तर-स्याऽपि लक्ष्यत्वे ऽनवस्थाप्रसङ्गात् अवाच्यस्य

---

सम्बन्धे तीरादौ गङ्गादिपदस्य या वृत्तिः सा लक्षणोच्यते इष्टेत्यर्थः ।

शशशृङ्गादिवत्तुच्छत्वाच्चेत्यलं प्रासङ्गिकेन तस्मा-
त्पदार्थबोधे शक्तिग्रहस्य कारणत्वमिति सिद्धं
सर्वसम्मतत्वात् शक्तिग्रहश्च व्याकरणादिना
जायते तथाचोक्तम् "शक्तिग्रहं व्याकरणोपमान-
कोशाप्तवाक्याद्व्यवहारतश्च वाक्यस्य शेषाद्वि-
वृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति
तत्र धातुप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति
यथा चैत्रः पचतीत्यादौ आख्यातस्य कर्त्तरि
शक्तिग्रहः उपमानादिति गोसदृशो गवयः
श्रीकृष्णसदृशः प्रद्युम्नः श्रीरामसदृशो भरत
इत्यादौ कोशादिति नीलशुक्लादिपदानां नीलरूपादौ
तद्विशिष्टे च शक्तिग्रहः आप्तवाक्याद्यथा कोकिलः
पिकपदवाच्य इत्यादीनां शक्तिग्रहः व्यवहारतश्च
यथा ह्युत्तमवृद्धस्य घटमानयेति वाक्यश्रवणानन्तरं
मध्यमवृद्धः प्रवर्त्तते बालस्तत्प्रवृत्तिं दृष्ट्वा तज्ज्ञान-
मनुमिनोति इयं प्रवृत्तिर्ज्ञानसाध्या प्रवृत्तित्वात्
मदीयप्रवृत्तिवदित्यनुमाय तस्य वाक्यजन्यत्व-
मनुमिनोति इदं ज्ञानमेतद्वाक्यजन्यम् एतद्वाक्या-
न्वयव्यतिरेकानुविधायित्वात् दण्डजन्यघटादिव-
दिति तदनन्तरमावापोद्वापाभ्यां घटपदस्य कम्बु-

ग्रीवादिमद्व्यक्तौ शक्तिरित्यवगच्छति वाक्यशेषा-
द्यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूक-
विशेषे आर्याणां प्रयोगः कङ्गौ च म्लेच्छानां तत्र
"वसन्ते सर्वसस्यानां जायते पत्रशातनं मोद-
मानाश्च तिष्ठन्ति यवाः कणिशशालिन" इति
"यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना-
स्तिष्ठन्ती"ति वाक्यशेषात् दीर्घशूके शक्तिग्रहः
कङ्गौ तु भ्रमात्यागः किञ्च विवृतेरिति विवरणा-
दपि घटपदस्य कम्बुग्रीवादिमद्व्यक्तौ शक्तिग्रहः
पचतीत्यस्य पाकं करोतीति विवरणादाख्यातस्य
पाकक्रियाकर्त्तरि शक्तिग्रहः सान्निध्यतोऽपि आम्रे
मधुरं पिको रौतीत्यादौ आम्रपदसान्निध्यात्पिक-
शब्दस्य कोकिले शक्तिग्रह इति सङ्क्षेपः अथ
तात्पर्यस्याऽपि शक्तिग्रहे कारणत्वं तत्त्वं नाम तत्प-
रत्वं तद्द्विविधं लौकिकं वैदिकं च विवक्षितार्थेतर-
प्रतीतिमात्रेच्छयाऽनुच्चारितत्वे सति विवक्षितार्थ
प्रत्ययजननयोग्यत्वं लौकिकं भोजनप्रस्तावे सैन्ध-
वमानयेत्युक्ते लवणप्रतीतिवदश्वप्रत्ययस्या ऽपि
सत्त्वात् तत्राऽपि योग्यतायास्तुल्यत्वात्तद्व्यावृत्ति-
फलकं पूर्वदलम् उभयेच्छयोच्चारिते उभयप्रत्यय व्या-

वृत्त्यर्थो मात्रशब्दः उभयेच्छयोच्चारणोऽपि तदितर-
प्रतीतिमात्रेच्छयाऽनुच्चारणस्य भावात् वक्त्रभिप्रायो
लौकिकतात्पर्यमितिभावः तज्ज्ञानस्यैव शाब्दबोधे
हेतुत्वात् अतः शुकादिवाक्ये न व्यभिचारः तत्र-
लक्षणासमन्वयात् वैदिकं तु पूर्वापरवाक्यविचारा-
वगमः तथाहि यथाऽऽकाशप्राणज्योतिरादिवैदिक-
शब्दानां रूढ्या भूताकाशवायुब्रह्मादौ वृत्तिमत्त्वेऽपि
सूत्रकृद्भिर्योगवृत्त्या ब्रह्मपरत्वं सूत्रितं तत्र तत्र
पठितलिङ्गादीनामन्यत्राकाशादावनन्वयात् लिङ्गा-
द्यन्यथानुपपत्त्या तेषां नाकाशादिपरत्वं किन्तु
ब्रह्मपरत्वमिति तथाच भेदवाक्यानामभेदवा-
क्यानां च बलाबलविचारेण वक्ष्यमाणरीत्या
तुल्यत्वे सिद्धे भेदवाक्यानां पदार्थतद्गतभेदप्रति-
पादनेन परतन्त्रसत्तावच्छिन्नभेदपरत्वे वृत्तिः अ-
भेदवाक्यानां च परतन्त्रसत्तावच्छिन्नयोश्चेतनाचेत-
नपदार्थयोः स्वतन्त्रसत्तावच्छिन्नपरब्रह्मपुरुषोत्तमा-
दिपदार्थेन तादात्म्यसम्बन्धविधाने वृत्तिः "ऐत-
दात्म्यमिदं सर्व"मित्यादिश्रुतेः तत्तात्पर्यं चोपक्र-
मादिषड्लिङ्गैः श्रुतिलिङ्गादिभिः प्रमाणैश्चावगम्यते
यथा भेदवाक्यानामभेदवाक्यानां चोपक्रमादि-

भिस्तुल्यबलत्वं तथा समन्वयाधिकरणे वक्ष्यते उपक्रमाद्युदाहरणं च श्रुतिमुखेन श्रुतिलिङ्गादि-मानानि तु तृतीयाऽध्याये वक्ष्यन्ते किञ्च श्रौतवा-क्यानां तात्पर्यग्रहे तदुपबृंहणभूतानां स्मृतीना-मपि कारणत्वं तथाचाह भगवान्बादरायणः स्वय-मेव भारते "इतिहासपुराणाभ्यां वेदं समुपबृंह-येत् बिभेत्यल्पश्रुताद्वेदो ह्यसौ मां प्रतरिष्यती"ति शास्त्रं नाम श्रुतिस्तन्मूलस्मृतिभारतपञ्चरात्र-वाल्मीकिरामायणादिकम् "ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकं मूलरामायणं चैव शास्त्रमित्य-भिधीयते यच्चानुकूलमेतस्य तच्च शास्त्रं परं मतम् अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तदि"-तिस्मृतेः ननु पञ्चरात्रं न प्रमाणं वेदविरुद्धत्वा-दिति चेन्न आपातोक्तेः तथाहि प्रमाणत्वाप्रमा-णत्वयोः शास्त्रमेवैकं नियामकं तदेकगम्यत्वात्तयोः तत्र श्रुतिमूलं च प्रामाण्यं शिष्टग्राह्यं श्रुति-विरुद्धं चाप्रामाण्यं हेयं चेति सर्वप्रमाणविदां समानम् एवञ्च पञ्चरात्रस्य श्रुतिमूलत्वं तत्तुल्यत्वेन मोक्षधर्मे श्रीसूत्रकारेणैव निर्णीतं "गृहस्थो ब्रह्म-चारी च वानप्रस्थो ऽथ भिक्षुकः य इच्छेत्सिद्धि-

मास्थातुं देवतां कां यजेत स" इत्यादियुधिष्ठिर-
प्रश्नानां पञ्चरात्रोक्तप्रक्रियया ह्युत्तरं दत्त्वा ऽऽह-
"इदं शतसहस्राद्धि भारताख्यानविस्तरात् आ-
विध्य मतिमन्थानं दध्नो घृतमिवोद्धृतं नवनीतं
यथा दध्नो द्विपदां ब्राह्मणो यथा आरण्यकं
च वेदेभ्य ओषधिभ्यो यथाऽमृतम् इदं महोपनि-
षदं चतुर्वेदसमन्वितं साङ्ख्ययोगकृतान्तेन पञ्चरा-
त्रानुशब्दितम् इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा भविष्यति
प्रमाणं वा ह्येतद्देवानुशासन"मिति अयम्भावः
अस्याप्रमाण्यं प्रमाणाभावाद्वा निषेधाद्वा नाऽद्यः
उक्तप्रमाणस्य सत्त्वात् नद्वितीयः भारतादौ क्वाप्य-
दर्शनात् नच क्वचित्कूर्मपुराणादौ निषेधो दृश्यते
इतिशङ्कनीयं भारतादिविरुद्धस्मृतेरनङ्गीकारात्
"यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचि"दिति
सूत्रकारप्रतिज्ञावचनात् भारतस्य तु सर्वैरपि
शिष्टैर्निःसंशयेन परिग्रहात् न तत्राप्रामाण्य-
शङ्काऽवकाशः अन्यथा भगवद्गीताया अपि तथा-
त्वापत्तिर्दुर्वारेति भावः किञ्च नारायणीये पञ्चरात्र-
प्रतिपाद्यविषयस्य निर्णयोपयिकषड्लिङ्गोपेतवाक्य-

सिद्धत्वात् प्रामाण्यतमत्वं तथाहि गृहस्थो ब्रह्म-
चारी चेत्यादि राज्ञः प्रश्नोपक्रमः "सर्वाश्रमिणां
स्वानुरूपपुरुषार्थावाप्तये को देवो यजनीयः वैश्व-
देवं पैत्र्यं च कर्म कथं कर्त्तव्यं किमात्मको मोक्षः
किं सर्वसार" इत्युपक्रमः "एष एकान्तधर्मस्ते
कीर्तितो नृपसत्तम मया गुरुप्रसादेन दुर्विज्ञेयो
ऽकृतात्मभि"रिति वैशम्पायनः "एवं हि स महा-
भागो नारदो गुरवे मम श्वेतानां यतीनां चाह
ह्येकान्तगतिमव्ययां व्यासश्चाकथयत्प्रीत्या धर्मं
पुत्राय धीमते पञ्चरात्रविदो येच यथाक्रमपरानृ-
पे"ति भीष्मश्च "मत्तोऽन्यानि च ते राजन्नु-
पाख्यानशतानि वै यानि श्रुतानि सर्वाणि तेषां
सारोऽयमुद्धृत इत्युपसंहारः १ "ये च तद्भाविता-
लोके ह्येकान्तित्वं समाश्रिताः नारायणाः शाश्वत-
धर्मगोप्ता काम्यनैमित्तिकं राजन् यज्ञीयाः परम-
क्रियाः सर्वाः सात्वतमास्थाय विधिं चक्रे समा-
हितः पञ्चरात्रविदो मुख्या तस्य गेहे महात्मनः
प्रायणं भगवत्प्रोक्तं भुञ्जते चाग्रभोजन"मिति
शतशोऽभ्यासः २ "नारदेन तु सम्प्राप्तः सर-
हस्यः ससङ्ग्रहः एष धर्मो जगन्नाथात् साक्षा-

न्नारायणान्नृप सात्वतं विधिमास्थाय प्राक्सूर्य-
मुखनिःसृत"मित्यादिना ऽपूर्वता ३ "एतदभ्यधिकं
तेषां यत्तेजः प्रविशन्त्युत अहो ह्येकान्तिनः श्रेष्ठा-
त्प्रीणाति भगवान्स्वयं विधिप्रयुक्तां पूजां च गृह्णाति
भगवान्स्वयम् एकान्तिनस्तु पुरुषा गच्छन्ति परमं
पदं नूनमेकान्तधर्मो ऽयं श्रेष्ठो नारायणप्रियः
सहोपनिषदान्वेदान् ये विप्राः सम्यगाश्रिताः पठन्ति
विधिमास्थाय ये चाऽपि यतिधर्मिणः तेभ्यो वि-
शिष्टां जानामि गतिमेकान्तिनां नृणाम् एकान्तिनो
हि पुरुषा दुर्लभा वहवो नृप यद्येकान्तिभिराकीर्णं
जगत्स्यात्कुरुनन्दन अहिंसकैरात्मविद्भिः सर्व-
भूतहिते रतैः भवेत्कृतयुगप्राप्तिराशीःकर्मविवर्जितैः
नारायणात्मके मोक्षे ततो याति परां गति"मि-
त्यादि शतशः फलोक्तिः ४ इदं महोपनिषदं
चतुर्वेदसमन्वितं साङ्ख्ययोगेन तुल्यो हि धर्म
एकान्तिसेवितः सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु
दृश्यते यथारामं यथाज्ञानं निष्ठा नारायणः
प्रभुः नचैवमेवं जानन्ति तमोभूता विशाम्पते
तमेव शास्त्रकर्त्तारः प्रवदन्ति मनीषिणः निष्ठां
नारायणमृषिं नान्योऽस्तीति वचो मम निःसंश-

येषु सर्वेषु नित्यं वसति वै हरि"रित्यादिनाऽर्थवादः ५ किञ्च जनमेजयेन पृष्टो वैशम्पायनः "प्रतिकल्पं पञ्चरात्रं श्रीनारायणादाविर्भवति तिरोभवति पाषण्डप्राचुर्या"दितिसम्पूर्णाध्यायेनाह "यदासीन्मानसं जन्म नारायणमुखोद्गतं ब्रह्मणः पृथिवीपाल तदा नारायणः स्वयं तेन धर्मेण कृतवान् दैवं पैत्र्यं च भारत फेनपा ऋषयश्चैव तं धर्मं प्रतिपेदिरे वैखानसाः फेनपेभ्यो धर्ममेतं प्रपेदिरे वैखानसेभ्यः सोमस्तु ततः सोऽन्तर्दधे पुन"रित्यादिना कल्पे कल्पे सम्प्रदायपूर्वकप्रवृत्त्युक्तयोऽत्रोपपत्तय इति ६ अथ तन्निष्ठावतां ह्यन्याक्रियावद्भयः स्वरूपफललक्षणोक्तेरपि श्रेष्ठत्ववर्णनाच्च "सहोपनिषदान् वेदा"नित्यादिजनमेजयोक्तेः "एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः इदं मे समनुप्राप्ता मम दर्शनलालसाः नच मां ते ददृशिरे न तु द्रक्ष्यति कश्चन १ ऋते ह्येकान्तिकं चैषां त्वं चैकान्तिको मम"ति नारदं प्रति श्वेतद्वीपपतिवचनात् किञ्च "पञ्चरात्रविदो ये च यथाक्रमपरा नृप एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् शेषाश्च

विबुधश्रेष्ठा दैत्यादानवराक्षसा नागास्सुपर्णा गन्धर्वाः सिद्धा राजर्षयस्तथा हव्यं कव्यं च सततं विधियुक्तं प्रयुञ्जते कृत्स्नं तु तस्य देवस्य चरणावुपतिष्ठते याः क्रियाः सम्प्रयुक्ताश्च एकान्तगतिबुद्धिभिस्ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्" तत्रैवा-शरीरिणी वागेकतादीन् ब्रह्मपुत्रान्प्रति "दृष्टा वः पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमाः गच्छध्वं मुनयः सर्वे यथा-गतमितो ऽचिरात् न स शक्यस्त्वभक्तेन द्रष्टुं देवाः कथञ्चन कालं कालेन महता एकान्तत्वं समागतैः शक्यो द्रष्टुं सभगवान्प्रभामण्डलदुर्दृश" इति-श्रीनारायणो नारदं प्रति "ते देवा आश्रमाश्चैव नाना तनुं समाश्रिता भक्त्यासम्पूजयन्त्येनं गतिं चैषां ददाति स येतु तद्भाविताल्लोके ह्येकान्तित्वं समाश्रिताः एतदभ्यधिकं तेषां तत्तेजः प्रविशन्त्युत इति गुह्यसमुद्देशस्तव नारद कीर्त्तितः भक्त्या प्रेम्णा च विप्रर्षे अस्मद्भक्त्याच ते श्रुत" इति ननु "साङ्ख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथे"ति साङ्ख्यादीनामप्यादरणो ऽपि शारीरके तेषां निषेध-दर्शनात्तन्न्यायेनास्या ऽपि निषेधो युक्त एव नच

साङ्ख्यादौ वेदविरुद्धभागस्याऽपि सत्वात्तन्मात्र-
निषेध इष्ट इतिवाच्यं श्रुतिविरुद्धभागस्यात्राऽपि
सत्वात्तन्मात्रनिषेधो ऽत्रापि युक्तः तथा तत्य-
भावात् तथाहि परमकारणाच्छ्रीवासुदेवात्सङ्कर्ष-
णाख्यो जीवो जायते सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो
जायते तस्मादनिरुद्धसंज्ञो ऽहङ्कार इतिभगवच्छास्त्र-
प्रक्रिया तत्र न तावज्जीवोत्पत्तिः सम्भवति "न
जायते म्रियते वा विपश्चि"दितिश्रुतिविरोधात् ना
ऽपि जीवान्मनसउत्पत्तिस्ततो ऽहङ्कारस्येति मनो-
ज्ञम् "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि-
चे"तिपरत एव मनआदीनामुत्पत्तिश्रवणात्तस्मा-
द्वेदविरुद्धांशस्य निषेधे तत्यभाव इतिचेन्न भगवत्
प्रक्रियाज्ञानहीनानां पदवाक्यप्रमाणतत्त्वनिर्णया-
शक्तानां स्वप्राङ्गणेऽश्वधावनमात्रत्वात्तथाहि साङ्ख्या
दीनां पौरुषेयत्वेन वेदविरुद्धांशस्याऽपि सम्भवात्
तन्मात्रनिषेधः सूपपन्नः प्रकृते तु "पञ्चरात्रस्य
कृत्स्नस्य वक्ता नारायणः स्वयमित्यादिना ऽस्य
श्रीमुखनिर्गतत्वेन श्रीभगवद्गीतावत्कृत्स्नस्याऽपि
वेदार्थरूपत्वेन प्रामाण्यतमत्वान्नोक्तन्यायस्यात्राव-
काशः नहि साङ्ख्यादीनां तत्पठनमात्रेण तत्तुल्यत्वं

वक्तुं शक्यम् उक्तरीत्या तेषां षड्भिङ्गोपेतवाक्यैर्निर्णा-
याभावात् महद्वैषम्यादुक्तन्यायस्य नाप्युक्तप्रक्रिया
वेदविरुद्धा तद्व्यवस्थायास्तव मीमांसाऽगोचरत्वात्
तथाहि न तावज्जीवोत्पत्तेस्तत्राङ्गीकारः तस्य
नित्यत्वप्रतिपादनार्थतो निषेध एव "अचेतना
परार्था च नित्या सततविक्रिया त्रिगुणं कर्मणां
क्षेत्रं प्रकृतेरूपमुच्यते व्याप्तिरूपेण सम्बन्धस्तस्याश्च
पुरुषस्य च स ह्यनादिरनन्तश्च परमार्थेन निश्चित"
इतिपरमसंहितोक्तेः ननु तर्हि पूर्वापरविरोधादु-
भयविधवाक्यानामपि हेयत्वमिति चेन्न उक्तन्या-
यस्य वेदेऽपि व्यापनात्तत्राऽपि निषेधः सावकाशः
तथाहि "न जायते म्रियते वा विपश्चित्" "यथाग्नेः
क्षुद्रा विस्फुलिङ्गा" इत्यारभ्य सर्वे एवात्मनो व्युच्च-
रन्तीतरेतरविरोधस्य साम्यात् नचोत्पत्तिश्रुतेर्हेय-
योगमात्रविधानपरत्वे तात्पर्यादविरोधः अन्यथा
नात्मा श्रुते रित्यादिशास्त्रबाधादितिवाच्यम् उक्त-
न्यायस्यात्राऽपि साम्यात् नाऽपि सङ्कर्षणप्रद्युम्ना-
निरुद्धानां जीवमनोहङ्काररूपत्वं सम्भावनार्हं
अपितु श्रीवासुदेवाख्यस्य परब्रह्मणो व्यूहात्मत्व-
मेव तथोक्तं पौष्करसंहितायाम् "कर्त्तव्यत्वेन वैयत्र

चातुरात्म्यमुपासते क्रमागमैः स्वसंज्ञाभिर्ब्राह्मणा-
रागमन्तु तदि"ति तच्च चातुरात्म्योपासनं पर-
ब्रह्मोपासनमेवेति सात्वतसंहितोक्तेः "ब्राह्मणानां
हि सद्ब्रह्म वासुदेवाख्ययाजिनां विवेकदं परं शास्त्रं
ब्रह्मोपनिषदं महदि"तिपौष्करे ऽपि तस्मात्सम्यक्
परं ब्रह्म वासुदेवाख्यमव्ययम् अस्मादवाप्यते
शास्त्रात् ज्ञानपूर्वेण कर्मणे" ति अतः सङ्कर्षणा-
दीनामपि श्रीवासुदेवस्यैव स्वेच्छाव्यूहरूपत्वात्
"चतुर्विभक्तः पुरुषः स क्रीडति यथेच्छती"ति-
कूर्मोक्तेः जीवमनोऽहङ्कारतत्त्वाधिष्ठातृत्वाच्च तेषां
जीवमनोऽहङ्कारशब्दैः कथनस्याविरोधात् यथा ता
आपरोक्षं ततरोजऐक्षतेत्यत्राबाद्यचेतनेषु ईक्षणा-
दिचेतनासाधारणधर्मादेरनुपपत्त्या अबादिशब्दानां
तदधिष्ठातृपरत्वं तदन्तरात्मब्रह्मपरत्वं चाभ्युप-
गम्यते यथा वा आकाशप्राणज्योतिरादिशब्दानां
भूताकाशादौ तत्रोक्तलिङ्गानुपपत्त्या च ब्रह्मपरत्वं
सूत्रितं तद्वत्प्रकृतेऽपि सूपपन्नम् एतेन सङ्कर्षणा-
दिभ्यो मनआदिसृष्टानुपपत्तिशङ्का ऽपि निरस्ता
तद्रूपाच्छ्री वासुदेवादेवोत्पत्त्यवगमात् "एतस्माज्जा-
यते प्राणो मन" इति श्रुतेरपि स्वार्थपरत्वासिद्धौ

तद्विरोधशङ्कया अपि दूरतो निरासात् एतदुक्तं भवति सर्ववेदान्तवेद्यो जगज्जन्मादिहेतुर्ब्रह्मेशादिकिरीटकोटीडितपादपीठो हेयधर्मास्पृष्टमहिमदिकूतटः सार्वज्ञ्यवात्सल्यकारुण्याद्यपरिमितस्वाभाविकनित्यकल्याणगुणार्णवो मुमुक्षुध्येयो भगवान्पर ब्रह्माख्यः श्रीवासुदेव इति तावन्निर्विवादः श्रुति शतमानसिद्धत्वात् एवं च स एव परमश्रेयो ज्ञापकानामृग्यजुः सामाथर्वसंज्ञकानां विधिनिषेधादिपञ्चविधवाक्यकदम्बरूपाणां शब्दतोऽर्थतश्च मन्निः श्वासरूपत्वेन दुर्ज्ञेयत्वान्मया विना तद्याथात्मस्य वेत्तुमशक्यत्वात् सुरादिभिरपि तद्याथात्म्यज्ञानाभावे श्रेयसस्तत्साधनादीनां चासिद्धेरिति निश्चित्य तदर्थयाथात्म्योपपत्तये तत्तधिकारिणां पुंसां स्वानुरूपपुरुषार्थसिद्धये च स्वाश्रितानन्यजनजातमधिकृत्य तेषां स्वरूपगुणादिविषयकतत्त्वज्ञानोपलब्धये स्वयं तान्वेदान्पञ्चरात्राख्यशास्त्रार्थरूपेण विशदयाञ्चकार तथा चात्र सर्वस्याऽपि वेदार्थस्य स्वयमेव श्रीमुखेन निर्णीतत्वात्सर्वांशेनाऽपि तस्य प्रामाण्यतमत्वमिति "पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् इदं महो-

पनिषदं चतुर्वेदसमन्वित"मित्यादिपूर्वोक्तवाक्यान्यत्रानुसन्धेयानि तस्मादुक्तप्रमाणैरस्याप्ततमत्वेन तत्राप्रामाण्यशङ्कया औन्मत्तप्रलापत्वनिश्चयात् श्रेयोऽर्थिभिरुपेक्षणीयत्वमिति तात्पर्यार्थः बृहत्पराशरे च "वैदिकस्तु जयं कुर्यात्पौराणं पञ्चरात्रकं यो वेदस्तानि चैतानि यान्येतानि च सा श्रुतिः पञ्चरात्रविधानेन स्थण्डिले वाऽपि पूजयेत् जलमध्यगतो वाऽपि पूजयेज्जलमध्यगं द्वादशारं नवव्यूहं पञ्चरात्रक्रमेण" त्वितिवाल्मीक्युत्तरे सनत्कुमारो रावणं प्रति "पुराणैश्चैव वैदैश्च पञ्चरात्रैस्तथैव च ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति त"मिति वाराहे च वेदाढ्ये तु समं दत्तं द्विगुणं तद्विदे तथा आचार्ये पञ्चरात्राणां सहस्रगुणितं भवेत् सात्त्वतज्ञानदृष्टो ऽहं सात्त्वता"मिति सात्त्वत इति पुनस्तत्रैव "ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते शूद्रादीनां च तच्छ्रोत्रपदवीमुपयास्पति एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनं पञ्चरात्रसहस्राणि यदि कश्चिद्गृहीष्यति कर्मक्षये मां कश्चिद्यदि भक्तो भविष्यति तस्येदं पञ्चरात्रं तु नित्यं हृदि च सिद्ध्यति इतरे राजसैर्भावैस्ता-

मसैश्च समावृताः भविष्यन्ति द्विजश्रेष्ठ मच्छा-
सनपराङ्मुखाः कृतं त्रेता द्वापरं च शृणु नारद
साम्प्रतं यदिदं पञ्चरात्रेण भजेद्भक्त्या द्विजोत्तमः
प्राप्योऽहं नान्यथा वत्स कल्पकोट्ययुतैरपी"त्यादिना
भीष्मपर्वणि च "ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्च कृत-
लक्षणैः अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः
सात्त्वतं विधिमास्थाय गीतः सङ्कर्षणेन य" इति
एतैः प्रमाणवाक्यैरप्यस्य प्रामाण्यतमत्वं चेति सिद्धं
श्रुतिसमानप्रामाण्यतमम् एतच्छास्त्रमप्रमाण-
मित्यनुन्मत्तः को वा ब्रूयादितिभावः एतद्विरुद्धाः
स्मृतयो हेयाः श्रुतितन्मूलकस्मृतिविरोधात् तथो-
क्तं भगवता जैमिनिना "विरोधे त्वनपेक्षः स्याद-
सति ह्यनुमान"मितिश्रुतेःस्मृतिविरोधे सत्यनपेक्षं
प्रामाण्यं स्यात् स्मृतेश्च वाधः अविरोधे हि अनु-
मानं स्मृतिरपि प्रमाणं स्यादिति सूत्राक्षरार्थः
अधिकरणार्थस्तु द्वितीये ऽध्याये वक्ष्यते किञ्च
"यन्मनुरवदत्तदौषध"मितिश्रुतिसिद्धमौषधरूपं ॥
मनुवचनं च या वेदवाह्याः स्मृतयो याश्च काश्च
कुदृष्टयः ताः सर्वा निष्फलाः प्रेत्य तमोनिष्ठा हि
ताः स्मृता" इत्यादि "यत्तु साङ्गेषु वेदेषु निष्ठामल-

भमानः शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवान् साङ्गेषु वेदेषु प्रतिष्ठामलब्ध्वेति वचनादिदं वेदविरुद्धमिति केषांचित्पदवाक्यप्रमाणमीमांसाहीनानामनाकलितश्रुतितदुपबृंहणन्यायस्मृतिकानां मृषाकपोलकल्पितं तदपि निरस्तं तस्य तत्प्रशंसामात्रपरत्वात् यथा श्रीनारदेन "ऋग्वेदं भगवो ऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चम"-मित्यादिकेन भगवन्मन्त्रविदेवास्मि नात्मविदित्यन्तेन वाक्यसमुदायेन सर्वविद्यास्थानमभिधाय भूमविद्यातिरिक्तसर्वत्रात्मवेदनालाभोक्तिः प्रकृतभूमविद्याप्रशंसार्थिकैव सर्वविद्यास्वधीयमानासु सतीष्वपि तत्प्रतिपाद्यपरतत्त्वनिर्णयालाभनिमित्तिका वा अन्येषां गुर्वभिगमनप्रकारसङ्ग्राहणार्थका वा न तद्विरुद्धप्रख्यापनार्था अन्यथा सर्वविद्यास्थानानां वेदादीनां सर्वेषामपि वाधप्रसङ्गात् भूमविद्याया अपि साम्न एवैकशाखाविशेषैकदेशत्वेन तत्रैवान्तर्भूतत्वेन निषेध्यत्वविरोधाच्च तथाप्रकृते ऽपि शाण्डिल्याख्यानवचनस्य तत्प्रशंसार्थत्वान्न वेदविरुद्धतास्फोटनार्थमिति तात्पर्यार्थः तथाच परमसंहितायाम् "अधीता भगवन् वेदाः

साङ्गोपाङ्गाः सविस्तराः श्रुतानि च मयाऽङ्गानि वाकोवाक्युतानिच नचैतेषु समस्तेषु संशयेन विना क्वचित् श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति वेदान्तेषु यदा सारं सङ्गृह्य भगवान्हरिः भक्तानुकम्पया विद्वान्सञ्चिक्षेप यथासुख"मिति एषामर्थः हेभगवन्साङ्गोपाङ्गा वेदा मया श्रुतास्तदङ्गान्यऽपि श्रुतानि तथाऽपि संशयेन विना येन सिद्धिर्भविष्यति तच्छ्रेयोमार्गं न पश्यामि निर्णेतुं न शक्नोमि तेषां दुरवगाहत्वेन दुर्बोधनार्थकत्वात् अतो यथा श्रीभगवान्स्वभक्तानुकम्पया तान्संशयनिरासपूर्वकं सौकर्येण वेदोक्ततत्त्वं ग्राहयितुं यथासुखं येनसिद्धिर्भविष्यतीति विद्वान् सर्वज्ञः वेदान्तेषु यत् आ समन्ततः सारं सर्ववेदार्थतत्त्वं सङ्गृह्य स्वासाधारणानुग्रहवशात्सञ्चिक्षेप तद्वदस्वेति शेषः अतो ऽस्य सर्ववेदव्याख्यारूपत्वात्केनाप्यंशेन नात्र शङ्कावकाशस्तस्मात्कात्स्न्येन प्रामाण्यतमत्वं वेदवद्बोध्यमिति सङ्क्षेपः किञ्च वेदो ऽपि काण्डद्वयात्मको निरपेक्षतया प्रमाणं सच ऋगादिसञ्ज्ञया चतुर्विधः तस्य षडङ्गानि शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतींषीति सञ्ज्ञकानि तथा

चाम्नायन्ते मुण्डकश्रुतौ "तत्रापरा ऋग्वेदो यजु- र्वेदः सामवेदो ऽथर्ववेदः शिक्षा कल्पो व्याक- रणं निरुक्तं छन्दो ज्योतिषमिति छन्दः पादौ शब्दशास्त्रं च वक्त्रं कल्पः पाणी ज्योतिषं चक्षुषी च शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्या- हुरेतानि षट् च" तितद्व्याख्यारूपवचनं चात्रानु- सन्धेयं तत्र शिक्षावर्णनिर्णयपरा कल्पः सूत्रग्रन्थः अनुष्ठेयश्रौतस्मार्त्तक्रमप्रतिपादनपरः व्याकरणं स्वरवर्णपदादिसमर्थनपरं निरुक्तं पूर्वार्थप्रतिपादकं छन्दश्च अनुष्टुप्त्रिष्टुवादिकं ज्योतिः शास्त्रञ्च अध्ययनानुष्ठानादिकालनिर्णयपरमितिविवेकः ॥ अलं प्रासङ्गिकेन अथ पदानां शक्तिः पदार्थमात्रे वा कार्यान्विते वा इतरान्विते वेति संशये आहु- र्गौतमीयाः पदार्थे एव शक्तिः पदैः पदार्थस्मरण- स्यैव ज्ञायमानत्वात् तेषां समभिव्याहाराद्वाक्यार्थो- पलम्भः अनन्यलभ्यो हि शब्दार्थः ननु कार्या- न्विते गौरवादितिप्राप्ते आहुः कर्ममीमांसकाः पदानां कार्यान्वित एव शक्तिर्ननु पदार्थमात्रे वाक्यार्थप्रमानुपलब्धिप्रसङ्गात् पदार्थमात्रशक्तानां वाक्यार्थज्ञापकत्वायोगात् नच पदसमभिव्याहा-

रात्तद्बोध इत्याशासनीयं पदानां तत्राशक्तत्वेन तद्बोधकत्वासम्भवात् शशकुशपलाशा इत्यत्र समभिव्याहारस्य सत्त्वे ऽपि समूहालम्बनबोधवत्तवाऽपि समूहालम्बनमेव ज्ञानं नतु संसर्गरूपवाक्यार्थबोधः पदानां संसर्गे शक्त्यनङ्गीकारात् किञ्च पदार्थमात्रे शक्तिरितिपक्षे सङ्गतिग्रहो दुर्लभः तथाहि प्रवृत्त्या ज्ञानाद्यनुमानद्वारेण पदानां पदार्थे शक्तिनिश्चयः प्रथमं बालस्य कार्यताज्ञानं प्रवृत्तौ हेतुः कार्यत्वं कृतिसाध्यत्वं तथाच वाक्यश्रवणानन्तरं कार्यताज्ञानाभावे ज्ञानाद्यनुमानासम्भवेन शक्तिनिश्चयायोगात् नच हर्षादिना ज्ञानानुमानेन तन्निश्चय इतिवाच्यं व्युत्पन्नस्य तथात्वेऽपि मुग्धस्य प्रथमव्युत्पत्तौ तदयोगात् हर्षादीनामन्यतोऽपि सम्भवेन ततस्तदनुमानायोगाच्च तस्मात्कार्यान्वित एव शक्तिरवश्यमङ्गीकरणीया तथात्वेच वाक्यश्रवणानन्तरं कार्यताज्ञानं ततः प्रवृत्तिस्तया च ज्ञानाद्यनुमानं तेन शक्तिनिश्चय इतिभावः न चेष्टसाधनताज्ञानात्प्रवृत्तिसम्भवात् किं कार्यताज्ञानेनेतिवाच्यं सुधामयूषमण्डले तत्सत्त्वेऽपि प्रवृत्तेरदर्शनात् नच कार्यताज्ञानस्य प्रवर्त्तकत्वे कूपपाते तत-

प्रसङ्ग इतिवाच्यम् इष्टसाधनताज्ञानसमानकालस्य कार्यताज्ञानस्य प्रवर्त्तकत्वाभ्युपगमात्तस्मात्कार्यता-ज्ञानस्यैव प्रवर्त्तकत्वमत एव कार्यपराणां लिङ्लोट्-तव्यप्रत्ययघटितपदानामेव प्रामाण्यं नान्येषां कथं वाक्यार्थबोध इतिचेत् असंसर्गाग्रहादिति ब्रूमः तस्मात्कार्यान्वित एव पदार्थे शक्तिरिति अत्र राद्धान्तः इतरान्वित एव पदार्थे शक्तिर्न कार्यान्विते गौरवात् तावतैव व्यवहारोपपत्तेश्च नच कार्यता-ज्ञानाभावे प्रवृत्त्यसम्भवेन शक्तिग्रहो न स्यादिति वाच्यं पुत्रस्ते जात इति श्रवणानन्तरं सिद्धार्थ-ज्ञानादपि मुखविकाशेन हर्षमनुमाय ततस्तस्य ज्ञानजन्यत्वमनुमाय ततस्तस्य वाक्यजन्यत्व-मन्वयव्यतिरेकाभ्यां निश्चित्यावापोद्वापाभ्यां जनि-मत्पिण्डे पुत्रपदस्य शक्तिनिश्चयेन कार्यताज्ञानस्य सर्वत्रातन्त्रत्वात् एतेन यदुक्तं कार्यपराणामेव प्रामाण्यं नतु सिद्धपराणामितरेषामिति निरस्तम् उक्तरीत्या सङ्गतिग्रहसम्भवात् द्वारकानिलयो हरिरित्यादौ शाब्दबोधदर्शनात् ननु पदार्थमात्रे एव शक्तिरङ्गीकार्या नत्वन्वयांशे गौरवात् नचैवं पदानामन्वयांशे शक्त्यभावे ततो वाक्यार्थबोध

इतिवाच्यं समभिव्याहारादेव तदुपपत्तेरिति चेन्न अतिप्रसङ्गात् पदानां यत्रशक्तिरवधारिता तेषां तत्रैवार्थबोधकत्वनियमात् इतरथा घटपदात्पटादि-बोधोऽपि भवेत् अशक्तत्वसाम्यात् ततश्चाशक्तपद-समभिव्याहारान्न वाक्यार्थबोधः कथमपि सम्भाव-नार्हः नच क्रियापदसमभिव्याहृतेनाकाङ्क्षादि-मत्पदवृन्देन स्वस्वार्थे गृहीतसङ्गतिकेन शाब्दबोधः बाधकाभावात्सम्भवतीति वाच्यं तत्तत्पदश्रवणेन तत्तत्पदार्थोपस्थितावन्वयांशे शक्त्यभावेन पदानां समभिव्याहाराद्बोधो शक्य एव तस्मादितरान्विते पदार्थे शक्तिरितिसिद्धं साच शक्तिर्जातिविशिष्ट-व्यक्तावेव न जातिमात्रे तथात्वे व्यक्त्यबोधप्रसङ्गात् नचाक्षेपाल्लक्षणया वा व्यक्तिबोध इतिवाच्यं व्यक्तेः पूर्वोपस्थितिदर्शनेन जातेरवाक्षेपेण लक्षणया वा बोध इत्यपि वक्तुं शक्यत्वात् नाऽपि व्यक्तिमात्रे शक्तिः व्यक्तीनामानन्त्येनातिगौरवात् तस्माज्जाति-विशिष्टव्यक्तावेव शक्तिरितिसिद्धं तथाऽपि जातौ ज्ञाता शक्तिः व्यक्तौ तु स्वरूपवतीति विवेकः ॥

इति शब्दनिर्णयः ॥ ४ ॥

उपपाद्य*ज्ञानेनोपपादकज्ञानसमर्थनमर्थापत्तिः यथा देवदत्तं दिवाऽभुञ्जानं पीनं च दृष्ट्वा तर्क्यते दिवा ऽभुञ्जानस्य रात्रिभोजनं विना पीनत्वमनुपपन्नमतो रात्रिभुञ्जान एवायमिति अत्र तथाभूतपीनत्वमुपपाद्यं तस्य ज्ञानं करणं पीनत्वज्ञानं विना रात्रिभोजनज्ञानस्यानुपपन्नत्वात् रात्रिभोजनाभावे च पीनत्वस्यानुपपत्तिरिति भोजनं तदुपपादकं तस्य ज्ञानं चात्र साध्यमिति विवेकः सैवान्यथानुपपत्तिशब्दाभिधेया सा द्विधा प्रत्यक्षमूला श्रुतिमूला चेति तत्र प्रत्यक्षप्रमाणगोचरोपपाद्यविषयकज्ञानकरणिका प्रथमा देहादिबुद्धिपर्यन्तः पदार्थो यद्यनात्मा न स्यात्तर्हि घटादिवद्ध्वंसाभावप्रतियोग्यपि न स्यात् प्रत्यक्षगृहीतध्वंसाभावप्रतियोगित्वान्यथाऽनुपपत्त्या देहादेरनात्मत्वमिति एवमग्रे ऽप्यूह्यम् इन्द्रियमनोबुद्ध्यादयो यद्यनात्मभूता न स्युस्तर्हि वास्यादिवज्जाग्रदादिसर्वावस्थाननुगता न स्युः प्राणो यदि वाह्यवायु-

---

* येन विना यदनुपपन्नं तत्तत्रोपपाद्यं यस्याभावे यदनुपपत्तिस्तदुपपादकं रात्रिभोजनकल्पनारूपायां प्रमितावर्थस्यापत्तिः कल्पनेति षष्ठीसमासः कल्पनाकरणे पीनत्वादिज्ञाने तु अर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिरिति फलकरणयोरुभयोस्तत्पदप्रयोगः ॥

वज्जन्यो न स्यात्तर्हि घटादिवदचेतनो ऽपि न स्यादित्यादिश्रुतिप्रमाणगोचरोपपाद्यविषयकज्ञान-करणिका द्वितीया आत्मा यदि देहेन्द्रियमनो-बुद्धिप्राणादिभ्यो विलक्षणो न स्यात्तर्हि घटादि-वच्चेतनो ऽपि न स्यात् "एतस्मान्मनोमयादन्य आत्मा विज्ञानमय" इतिश्रुतेः प्रत्यगात्मा यद्यजो नित्यो न स्यात्तर्हि कृतनाशाकृताभ्यागमप्रसङ्ग-निवृत्तिरपि न स्यात् "न जायते म्रियते वा विपश्चि" दितिश्रुतेः प्रत्यगात्मा यदि पारमार्थिकसत्ताश्रयो न स्यात् तदा स्वस्वरूपापत्तिलक्षणमोक्षभागऽपि न स्यात् "स्वेन रूपेणाभिनिष्पद्यते"इतिश्रुतेः अहमर्थो यदि मोक्षान्वयी न स्यात् तर्हि अभयापत्तिलक्षणमोक्षभागपि न स्यात् "अभयं वै जनक प्राप्तोऽसि यदात्मानमेवावेदहं ब्रह्मा ऽस्मी"तिश्रुतेः प्रत्यगात्मा यदि ज्ञानस्वरूपो न स्यात्तर्हि देहादिप्रकाशको ऽपि नस्यात् "यो ऽयं विज्ञानघन"इतिश्रुतेः प्रत्यगात्मा यदि ज्ञानाश्रयो न स्यात्तर्हि तदुपदेशशास्त्रस्य सार्थक्यमपि न स्यात् "जानात्येवायं पुरुषः "विज्ञातारमरे केन विजानीया"दितिश्रुतेः प्रत्यगात्मा यद्यणुपरि-

मात्मको न स्यात् तदा गत्याद्युपदेशोऽपि न स्यात्
"ते धूममभिसम्भवन्ति तेऽर्चिषमभिसम्भवन्ती"
त्यादिश्रुतेः आत्मा यदि ब्रह्मात्मको न स्यात्तर्हि
तादात्म्योपदेशो ऽपि न स्यात् "ऐतदात्म्यमिदं सर्वं
तत्वमसी"त्यादिश्रुतेः आकाशाद्यचेतनजातं यदि
ब्रह्मात्मकं न स्यात्तदा ब्रह्मोपादेयरूपकार्यमपि न
स्यात् ऐतदात्म्यमिति पूर्वोक्तश्रुतेः "स्वयमात्मा-
नमकुरुतेति" श्रुतेश्च वेदान्तशास्त्रप्रयोजनरूपो
मोक्षो यदि पारमार्थिको न स्यात्तर्हि स्वप्नसुखार्थ-
वत्तदर्थकप्रयत्नप्रवृत्तिरपि न स्यात् "आत्मा वा रे
द्रष्टव्यः श्रोतव्य" इतिश्रुतेः शास्त्रप्रयोजनं यदि
पारमार्थिकं न स्यात्तर्हि स्वप्नसुखार्थवत्तदर्थं शास्त्रा-
रम्भो ऽपि न स्यात् "अथातो ब्रह्मजिज्ञासे"ति-
सूत्रात् "निरञ्जनः परमं साम्यमुपैती"तिश्रुतेः
"सदेव सौम्येद"मित्यादिवाक्यं यदि सार्वज्ञ्यादि-
विशेषाश्रयब्रह्मपरं न स्यात्तर्हि ईक्षणबहुभवन-
सङ्कल्पोपदेशो ऽपि न स्यात् "तदैक्षत बहु स्यां
प्रजायेये"त्यादिश्रुतेः ब्रह्म यदि सार्वज्ञ्यादिधर्मवन्न
स्यात्तर्हि जगदुपादानं निमित्तं च न स्यात् सच्च
त्यच्चाभवदि"तिश्रुतेः ब्रह्म यदि सर्वात्मा न स्यात्तर्हि-

परिच्छिन्नमपि न स्यात् "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिश्रुतेः सर्वात्मा यदि वैदिकसर्वशब्दवाच्यो न स्यात्तर्हि सर्वसमानाधिकरणोपदेशोऽपि न स्यात् "नामानि सर्वाणि यमाविशन्ति ॥ सर्वं खल्विदं ब्रह्मे"तिश्रुतेः प्रत्यगात्मा यदि कर्ता न स्यात्तर्हि उभयकाण्डोपदेशोऽपि सार्थको न स्यात् "ज्योतिष्टोमेन यजेत् ॥ सोऽन्वेष्टव्य" इत्यादिश्रुतेः भगवदनुग्रहो यदि तत्साक्षात्कारासाधारणहेतुर्न स्यात्तर्हि सर्वोपायानामपि सार्थक्यं न स्यात् "यमेवैष वृणुते तेन लभ्य" इतिश्रुतेः "शृण्वन्तोऽपि बहव"इतिव्यतिरेकश्रुतेश्च आकाशादिकार्यं यदि सत्यं न स्यात्तर्हि तत्सत्योपदेशोऽपि न स्यात् "सदेव सौम्येदमग्र आसीत् अष्टरूपामजाध्रुवाङ्गैरनाद्यन्तवती अश्वत्थः सनातन" इत्यादिश्रुतेः प्रत्यगात्मनां पुण्यादिकं कर्म यद्यनादि न स्यात्तदा सृष्टिरपि न स्यात् "कर्माविभागादितिचेन्नानादित्वादि"तिसूत्रादितिसङ्क्षेपः ॥ ५ ॥

अथानुपलब्धिप्रमाणम् अभावज्ञानकरणं* ज्ञानमनुपलब्धिः अतीतप्रतीतिविषयरूपोपलब्धि-

---

* अभावग्राहिणीबुद्धिर्यथा भूतले घटानुपलब्धौ घटाभावो गृह्यते

स्तदभावो ऽनुपलब्धिः घटाद्यभावानुभूतौ तस्या असाधारणकारणत्वात्करणत्वमित्यर्थः सा च योग्यता वैशिष्टयेन ज्ञातैव प्रमाणं नान्यथा अत्रेदं यदि स्यादिति तर्कितेन प्रतियोगिसत्त्वेन * प्रसञ्जित उपलब्धिरूपः प्रतियोगी यस्याः सा योग्या † नुपलब्धिः सैवाभावग्रहणे कारणभूतेत्यर्थः अत्र स्फीतालोकवति भूतले यदि घटः स्यात्तर्हि भूतलवदुपलभ्येत आलोकाभावेतु तादृशापादनायोगेन विषयाभावग्रहो निरुद्ध इत्यर्थः नास्तीति प्रत्ययगोचरत्वमभावसामान्यस्य लक्षणं सचाभावश्चतुर्विधः प्रागभावो ध्वंसाभावान्योऽन्याभावो ऽत्यन्ताभावश्च कार्योत्पत्तेः प्राग्भविष्यतीति प्रत्ययगोचरभविष्यत्प्रतियोगिकाभावः प्रथमः यथा मृत्पिण्डे घटाद्यभावः मुद्गरादिपातानन्तरं घटो ध्वस्त इति प्रत्ययगोचरप्रतियोगिकाभावो द्वितीयः यथा कपालेषु घटाभावः अयमयं न भवतीति प्रतीतिविषयो ऽभावस्तृतीयः यथा घटः पटादिर्न यथा वा जीवो न परमेश्वरः स्वतन्त्रो न परतन्त्रः

---

* प्रसञ्जितआपादित स्तर्कितइतियावत् ॥

† उपलम्भाभावोऽनुपलब्धिः ॥

अयमेव हि भेदविभागादिशब्दाभिधेयः एतेन तार्किककपोलकल्पितविभागपृथक्त्वादेः पृथक्पदार्थत्वं निरस्तं प्रमाणहीनत्वात् अत्रेदं कालत्रयेऽपि नास्तीति प्रतीतिविषयो ऽत्यन्ताभावः यथा जीवात्मनि परमेश्वरत्वाभावः सर्वज्ञे ब्रह्मणि अज्ञानाभावस्तदध्यासाभावस्तत्रैव जीवत्वाभावः स्वतन्त्रे पारतन्त्र्याभावः परतन्त्रे स्वतन्त्रत्वाभावश्च प्रत्यगात्मनि जन्मादिविकाराभावः आकाशे स्पर्शाद्यभावः वायौ रूपाद्यभावः अज्ञानाध्यासे श्रौतप्रमाणाभावः जगत्कारणे ब्रह्मणि नानात्वाभावः निर्विशेषे ब्रह्मणि प्रमाणाभावः अवाच्ये लक्ष्यत्वाभावः निर्विशेषे ब्रह्मणि प्रतिबिम्बनयोग्यताभावः तत्रैवाज्ञानाश्रयणायोग्यताभावः अज्ञानविषयत्वयोग्यताभावश्च सद्रूपे कार्ये ऽनिर्वचनीयत्वाभावः अनिर्वचनीयत्वे प्रमाणाभावश्चेति सङ्क्षेपः ॥ ६ ॥

अथोक्तप्रमाणानां प्रामाण्यं परतो ग्राह्यं स्वतो वेति विषये किं तावत्प्राप्तं परतो ग्राह्यमिति अन्यथा संशयाद्यनुपपत्तेः तथाहि ज्ञाने प्रामाण्यं यदि स्वतो ग्राह्यं स्यात्तदा तदनभ्यासदशापन्नज्ञाने ऽप्रामाण्यसंशयो न स्यात् अयम्भावः ज्ञानं ज्ञातं

नवेति आद्ये त्वन्मते प्रामाण्यं ज्ञातमेवेति कथं तत्र संशयः द्वितीये धर्मिज्ञानाभावे सुतरां संशया-सम्भव इति तस्मात्प्रामाण्यमनुमानग्राह्यमेव इदं ज्ञानं प्रमा सम्वादिप्रवृत्तिजनकत्वात् गङ्गायां तज्जलाहरणप्रवृत्तिवत् इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् स्नेहवति जलत्वप्रकारकज्ञानवदित्यादिप्रयोगात् अत्र राद्धा-न्तः प्रामाण्यं स्वत एव ग्राह्यं प्रामाण्यं नाम तद्याथात्म्यं तत्त्वञ्च तद्वति तत्प्रकारकज्ञानत्वं यथा पृथिवीविशेष्यकं यज्ज्ञानं तद्गतगन्धवत्त्वप्रकारकं तदेव प्रमात्वमित्यर्थः स्वतस्त्वपक्षे * ऽपि ज्ञानस्य स्वप्रकाशकत्वात्तज्ज्ञानप्रामाण्यं तेन गृह्यते इति प्राभाकराः ज्ञानमतीन्द्रियं ज्ञानजन्या ज्ञातता प्रत्यक्षा तयाच ज्ञानमनुमीयते जायमानाच ज्ञाना-नुमितिः प्रामाण्यमपि विषयीकरोति इतिभट्ट-मतानुयायिनः अनुव्यवसायेन ज्ञानं गृह्यते इत्यन्ये मुरारिमिश्रादयः एतेषां मते तत्तज्ज्ञानविषयक-ज्ञानेन ज्ञानप्रामाण्यं गृह्यते इतिभावः तदप्यपे-शलम् अनुव्यवसायज्ञानानङ्गीकारात् तत्र प्रमाणा-

---

* स्वतोग्राह्यत्वपक्षे ॥

भावाच्च वस्तुतस्तु यावत्स्वाश्रयभूतप्रमाग्राहक-
समग्रीमात्रग्राह्यत्वं स्वतस्त्वं नचैवम्भ्रमप्रमात्व-
स्यापि ग्रहणापत्तिः ज्ञानसामान्यसामग्र्यास्तुल्य-
त्वादित्याशासनीयं दोषाभावस्याऽपित त्र विशेषणा-
त्वाङ्गीकारात् नचैवं परतस्त्वप्रसङ्गो दुर्वार इति-
शङ्कनीयं आगन्तुकभावरूपहेत्वपेक्षायां परतस्त्वा-
भ्युपगमात् लक्षणे मात्रशब्दो ऽन्यनिरपेक्षत्ववा-
चकः तथाच दोषाभावे सत्यन्यनिरपेक्षत्वे च
सति यावत्स्वाश्रयभूतप्रमाग्राहकसामग्रीग्राह्यत्वं
स्वतस्त्वं तेन प्रामाण्यं गृह्यते यथा चक्षुषा रूपादि-
मद्द्रव्ये गृह्यमाणे तेनैवान्यनिरपेक्षतया तद्गतद्रव्य-
त्वघटत्वादीनां ग्रहोऽपि निर्विवादस्तद्वदित्यर्थः
एवञ्च दोषस्य सत्त्वे संशयस्याऽपि सम्भवात्सर्व-
मनवद्यं किञ्च येषां मते अनुव्यवसायज्ञानं
तद्ग्राह्यं च ज्ञानप्रामाण्यं तेषां मते परतस्त्वप्रवेशो
दुर्वारः आगन्तुकभावरूपहेत्वन्तरापेक्षाया अङ्गी-
कारात् तेनैव स्वतस्त्वपक्षभङ्ग इतिभावः अप्रा-
माण्यं तु इदं रज्जौ सर्पज्ञानमप्रमाणं विपरीतप्रवृत्ति-
जनकत्वात् शुक्तिरजतप्रवृत्तिवदितीतरप्रमाणेन
गृह्यते तस्य तदभाववति तत्प्रकारकत्वलक्षणकस्य

दोषमात्रप्रयोज्यत्वयोगेन पूर्वोक्तलक्षणग्राहक-सामग्रीग्राह्यवस्तुविपरीतत्वादिति सङ्क्षेपः ॥ ७ ॥

शते दशकं सम्भवतीति बुद्धौ सम्भावना सम्भवः अज्ञातवक्तृकं पारम्पर्यप्रसिद्धमैतिह्यम् ॥ ८ ॥

एषुप्रत्यक्षमेकं लोकायतिकस्य चार्वाकस्य देहात्म-वादिनः तच्चानुमानं चेति वैशेषिकस्य तेच शब्दश्चेति साङ्ख्यपातञ्जलयोः तानि चोपमानं चेति नैयायि-कस्य तानि चार्थापत्त्यनुपलब्धीचेति षण्मीमांस-कस्य तानि च सम्भवैतिह्येचेत्यष्टौ पौराणिकस्य वस्तुतस्तु प्रत्यक्षानुमानशब्दाख्यानि त्रीण्येव प्रमाणानि अन्येषामत्रैवान्तर्भावेन पृथग्ग्रहणस्य गौरवमात्रत्वात् तथाहि उपमानस्य दृष्टान्तमात्रै-कविग्रहत्वेनानुमानावयव उदाहरणे ऽन्तर्भावः अर्थापत्तेश्च व्यतिरेकिव्याप्तिरूपतया तत्रैवान्तर्भावः अनुपलब्धेश्चेन्द्रियसहकारितया प्रत्यक्षे ऽन्तर्भाव इत्यर्थः नन्विन्द्रियाणामधिकरणादिग्रहणेनैवो-पक्षीणतया ऽभावप्रत्यक्षे ऽसामर्थ्यात्तदर्थमनुप-लब्धेः पृथक्प्रमाणत्वस्यावश्यमङ्गीकरणीयत्वा-दिति चेन्न औपनिषदानां पक्षे ऽभावस्य भिन्न-पदार्थत्वानङ्गीकारात् किन्तु भाव एव विवक्षा-

विशेषतया ऽभावशब्देनाभिधीयते नतु निरुपाख्यं वस्तु तथाहि घटप्रागभावो मृत्पिण्ड एव ध्वंसाभावश्च कपालरूपः अन्योन्याभावश्च प्रतियोगिरूपः अत्यन्ताभावश्चाधिकरणरूपः एवञ्च मृत्पिण्डादीनामिन्द्रियवेद्यतया प्रमाणान्तरापेक्षाभावात् सम्भवस्यानुमाने ऽन्तर्भावः दशकं शतान्तर्गतं तदविनाभूतत्वात् इत्यनुमानात् ऐतिह्यं च प्रत्यक्षे ऽन्तः स्याद्वादिमेन * दृष्टत्वादिति सङ्क्षेपः तत्र न तावद्ब्रह्मणः प्रत्यक्षप्रमाणविषयत्वं सम्भावनार्हम् अतीन्द्रियत्वात् जात्यादिलौकिकविशेषविरहाद्वा यन्नैवं तन्नैवं गवादिवत् "नचान्तर्वहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इतिश्रुतेस्तस्य सर्वत्रव्यापकत्वेनेन्द्रियेष्वपि सत्वाविशेषात्कथं तत्सन्निकर्षानर्हत्वं एतदुक्तं भवति ब्रह्मणो व्याप्तिरिन्द्रियेष्वङ्गीक्रियते नवा नाऽद्यः तस्येन्द्रियेषु सत्त्वेन तत्सन्निकर्षस्याप्यवश्यम्भावात् प्रत्यक्षसम्भव एव नद्वितीयः परिच्छिन्नत्वापत्तेः सर्वश्रुतिविरोधात्प्रमाणाभावाच्चेति वाच्यं तस्य व्यापकत्वेन सर्वत्र सत्त्वे ऽपि करणानां तत्प्रकाश्यत्वे तत्प्रकाशकत्वाभावात्

---

* पुरुषेणोतिशेषः ॥

न तावत्प्रमाणविषयीभावे पदार्थसद्भावमात्रं प्रयोजकं किन्तु प्रमाणनिष्ठा तद्ग्रहणार्हा तच्छक्तिरेव अन्यथा क्षीरादिपाने रसनेन्द्रियेण तन्माधुर्ये गृह्यमाणे तत्समानाधिकरणरूपादेरपि गृहणापत्तेः तस्य तत्र सद्भावसाम्यात् एवं ब्रह्मणः सर्वसत्त्वे ऽपि करणानां तद्गृहणायोग्यताभावान्न तद्विषयत्वमित्यर्थः यथा वा खद्योतानां सूर्यप्रकाशकत्वायोगस्तत्प्रकाश्यत्वात्तद्वत्प्रकृते ऽपि वोध्यम् "अणोरणीयान् ॥ तस्य भासा सर्वमिदं विभाति" इत्यादयः श्रुतयो ब्रह्मणोऽतीन्द्रियत्वे सर्व प्रकाशकत्वे च प्रमाणत्वेनानुसन्धेया इति सङ्क्षेपः नाप्यनुमानगोचरं ब्रह्म हेतुदृष्टान्तविरहात् नेन्द्रियाणि नानुमानं "नैषामतिस्तर्केणापनेये"तिश्रुतेः "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदि"तिमनुवचनात् "श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् निश्चयात्साधयेदर्थं प्रमाणान्तरमेव चे"तिस्मृतेः "तर्काप्रतिष्ठाना"दितिसूत्राच्च ननु क्षित्यादीनि महाभूतानि सकर्तृकाणि कार्यत्वात् घटादिवदितिप्रयोगात् भूतादिकर्तृब्रह्मभावः सिद्ध्यत्येव तत्कार्यस्य भूतादेर्लिङ्गस्य घटादेर्दृष्टा-

न्तस्य च सत्त्वेनानुमातुं शक्यत्वादुक्तहेतोः स्वरूपासिद्धत्वं किञ्च मन्तव्य इतिश्रुत्या "यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर" इति मनुस्मृत्या चानुमानस्यादरणात् कथमनुमानागोचरत्वं तस्येति चेन्न उक्तानुमानेन सामान्यतः कर्तृमात्रसिद्धेऽपि ब्रह्मणस्तद्विषयकत्वं तदवस्थमेव तस्यान्यप्रमाणाविषयत्वं दुरुपपादं तत्र व्याप्तेः पक्षधर्मतायाश्च शास्त्रमन्तरेण गृहीतुमशक्यत्वात् अयम्भावः उक्तानुमानस्य को वा विषयः कर्तृविशेषो वा स्वभावतो ऽघ्रातदोषगन्धमाहात्म्यं सार्वज्ञ्यसर्वशक्त्याद्यनन्ताचिन्त्यासङ्ख्येयगुणाश्रयं। ब्रह्म वा आद्ये इष्टापत्तेः कर्तृविशेषस्य विवादानवसरत्वात् नद्वितीयः उक्तलक्षणस्य ब्रह्मणः श्रुतिं विना व्याप्त्यादीनां गृहीतुमशक्यत्वात् प्रत्युत कर्तृविशेषे सिद्धे ऽपि यत्र कर्तृत्वं तत्र दोषवत्त्वं कुलालादिवदिति प्रत्यक्षादिगृहीतया सामान्यव्याप्त्या गुणदोषवतो जीवस्यैव कर्तृत्वेन सिद्धेः नोक्तलक्षणस्य परब्रह्मण इति तस्यस्वरूपगुणादीनामलौकिकत्वात् नच शास्त्रे एव तत्स्वरूपगुणशक्तीनां प्रसिद्धिस्तत एव तन्निश्चित्य तद्वतो जगत्

कारणत्वमनुमेयमिति वाच्यं शास्त्रमूलकानुमान-
स्येष्टत्वात् नास्माकमनुमानस्योच्छेदे ऽभिप्रायः
अपितु तस्य स्वतन्त्रत्वमात्रे एव तत्त्वञ्च तव
श्रीमुखेनैव सिद्धमितिभावः एतेन पूर्वपक्षोक्त-
श्रुत्यादीनामपि व्यवस्था निरूपिता भवति तथाच
तर्कादिनिषेधशास्त्रस्य शास्त्रनिर्मूलस्वतन्त्रानुमान-
परत्वेन तद्विधायकशास्त्रस्य च श्रुत्यनुकूलतन्मूल-
कानुमानविषयत्वेन नैराकाङ्क्ष्यात्सर्वथा ऽप्य-
विरुद्धं किञ्च पूर्वोक्तप्रयोगस्यांशतो ऽसिद्धहेतुकत्वा-
न्नोक्तार्थसाधकत्वं महाभूतानीति पक्षे कार्यत्वस्य
हेतोराकाशभागे ऽव्यापनात् त्वन्मते गगनस्याकार्य-
त्वात् नच तस्य पक्षवाह्यत्वान्न दोष इतिवाच्यं
भूतत्वावच्छिन्नस्य पक्षत्वात् नच "तस्माद्वा एत-
स्मादात्मन आकाशः सम्भूत" इतिश्रुत्या तस्य
कार्यत्वमितिवाच्यम् इष्टत्वात् तथाच तयैव ब्रह्मणो
जगत्कारणत्वावगमे ऽनुमानस्याप्रयोजकत्वात्-
न्यायसिद्धान्तभङ्गात् अस्मत्पक्षप्रवेशाच्च तस्मा-
न्नानुमानविषयो ब्रह्मेति सिद्धमिति सङ्क्षेपः २
नाप्युपमानविषयो ब्रह्म तस्य सादृश्याभावात्
तथाहि सदृशज्ञानप्रयोज्यं सादृश्यं यथा गोसदृशो

गवय इति ब्रह्मसदृशपदार्थान्तराभावेन तत्सादृश्य-ज्ञानासिद्धेः "न सन्दृशे तिष्ठति रूपमस्य न तत्स-मश्चाभ्यधिकश्च दृश्यते" इत्यादिश्रुतेः ननु "निरञ्जनः परमं साम्यमुपैति ॥ इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता" इत्यादिश्रुतिस्मृतिभ्यां सिद्धत्वात् तत्सदृशस्य साधर्म्यस्यैव सादृश्यत्वात् तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्य सादृश्यसाम्यसाधर्म्य-पदवाच्यत्वात्कथं सदृशाभाव इति चेत्सत्यं तस्य सत्त्वेऽपि शास्त्रैकगम्यत्वेन प्रत्यक्षप्रमाणागोचरत्वात् अविषयत्वस्य तादवस्थ्यमेव श्रौतोपमानस्य तु शास्त्रान्तःपातित्वादित्यर्थः ननु माऽस्तु सादृश्य-ज्ञानजन्योपमितिविषयं स्यादेव ब्रह्मसादृश्या-भावात् तथाऽपि वैसादृश्यज्ञानजन्योपमितिविष-यत्वं स्यादेव ब्रह्मणः विसदृशानां क्षेत्रज्ञादीनां सत्त्वात् यथा गोविसदृशोऽश्व इति चेन्नासम्भवात् तथाहि कीदृशोऽश्व इत्यादिना तदविदुषा पृष्टे तज्ज्ञापकस्याश्वादिज्ञानाभावे गोविसदृशो द्विशफ-स्वल्पपुच्छविशिष्टव्यक्तिमद्भिन्नोऽश्वः अतिदीर्घ-ग्रीवाविशिष्टव्यक्तिमद्भिन्नो हस्तीतिविषविसदृशं हननासाधारणीभूतौषध्यादिभिन्नममृतमिति ज्ञाप-

नात्मकवचनप्रयोक्तृत्वानुपपत्तेः तथाच ज्ञापकस्य ब्रह्मज्ञानाभावेन ज्ञापकत्वासिद्धेः ज्ञातृत्वपूर्वत्वाज्ज्ञापकत्वस्येतिभावः किञ्च वैसादृश्यज्ञानसत्त्वे ऽपि नोक्तलक्षणब्रह्मसिद्धिः तथाहि यथा गोविसदृशो ऽश्व इतिज्ञानाद्गोभिन्नपदार्थमात्रस्य सामान्यज्ञाने जाते ऽपि अश्वत्वावच्छिन्नैकशफवद्व्यक्तिज्ञानस्यासिद्धिरेव तथा ब्रह्मविसदृशाचेतनाचेतनवस्तुज्ञानात्तद्विसदृशं ब्रह्मेति ज्ञानोत्पत्तावपि सर्वज्ञत्वाद्यसाधारणधर्मावच्छिन्नज्ञानाभावेन जगत्कारणत्वज्ञानासिद्धत्वान्नोपमेयं ब्रह्मेति राद्धान्तः ३ नाप्यर्थापत्तिप्रमाणवेद्यं ब्रह्म तस्य पीनत्वादिज्ञानवदुपपाद्यज्ञानासिद्धेः किञ्चार्थापत्तेस्तर्करूपतया तद्विषयत्वस्यानुमाननिराकरणेनैव निरासो वोध्यः "नैषामतिस्तर्केणापनेयेति" श्रुतेश्च ४ नाप्यनुपलब्धिगोचरत्वं ब्रह्मणः सम्भावनार्हं तस्या अभावकरणत्वात् ब्रह्मणस्तु केवलान्वयित्वेनाभावत्वावच्छिन्नाप्रतियोगित्वात् प्रतियोगिज्ञानसापेक्षत्वादभावस्य तथाचाभावस्य ज्ञाने ऽनुपलब्धिप्रमाणप्रवृत्तिस्तदभावे प्रवृत्तेरेवासम्भवात् कुतस्तद्विषयतामत्यारोतिभावः "अन्तर्वहिश्च तत्-

सर्वं व्याप्य नारायणः स्थित" इत्यादिश्रुतेस्तस्य केवलान्वयित्वे मानत्वात् ५ तस्माच्छास्त्रैकवेद्य-मेव ब्रह्मेति तात्पर्यवानाह भगवान् सूत्रकारः "शास्त्रयोनित्वात्" इतिशास्त्रमेव योनि ज्ञानकारणं ज्ञापकं प्रमाणं यत्र तच्छास्त्रयोनि तस्य भावस्तत्त्वं तस्मादितिविग्रहः इतरप्रमाणाविषयत्वे सति शास्त्रै-कप्रमाणगोचरं ब्रह्मेति यावत् "सर्वे वेदा यत्पद-मामनन्ति ॥ सर्वे वेदा यत्र एकीभवन्ति ॥ तं त्वौप-निषदं पुरुषं पृच्छामः ॥ नावेदविन्मनुते तं बृहन्त" मित्याद्यन्वयव्यतिरेकश्रुतिभ्यः "वेदैश्च सर्वैरहमेव वेद्यः ॥ वेदे रामायणे चैव पुराणे भारते तथा आदावन्ते च मध्ये च हरिः सर्वत्र गीयते नमामि सर्ववचसां प्रतिष्ठा यत्र शाश्वती" त्यादिस्मृतिभ्यश्च एतेन शास्त्रवेद्यं ब्रह्म तज्ज्ञापकं च शास्त्रमितिनित्य-सम्बन्धो ऽप्युक्तः ननु ब्रह्मणः शास्त्रज्ञाप्यत्वे पर-प्रकाश्यत्वप्रसक्त्या स्वप्रकाशत्वहाने तत्प्रतिपादक-शास्त्रव्याकोपाच्चेति चेन्न शास्त्रगतबोधकशक्तीनां-तच्छक्त्यभिन्नत्वात् शक्तीनां च तत्परतन्त्रसत्ता-कत्वेन तदपृथक्सिद्धत्वात् तत्प्रकाशकत्वं च स्वप्र-काशकत्वमेव तस्मान्नोक्तदोषावकाशः नन्वेवं ब्रह्म-

शक्तीनामपरिच्छिन्नत्वेन क्षेत्रज्ञतत्करणेष्वपि सद्भा-
वात्तद्विषयत्वे ऽप्युक्तन्यायेन क्षत्यभावात् स्वप्रकाश-
त्वमेवाङ्गीकार्यं तथा चान्यप्रमाणाविषयत्वोक्तिभङ्ग
इतिचेत्सत्यं पारमेश्वरीशक्तीनां क्षेत्रज्ञतत्करणेषु
व्याप्तिसाम्ये ऽपि तत्तद्बुद्धिव्यवधानेन दोषवत्त्व-
सम्भवात् तद्विषयस्य न स्वप्रकाशत्वयोगः वेदे तु
तद्व्यवधानाभावेन साक्षात्तद्विषतया महद्वैषम्यादि-
तिभावः ननु "यतो वाचो निवर्त्तन्त" इत्यादिश्रुत्या
शब्दाविषयत्वस्याऽपि डिण्डिमायमानत्वात् कथं-
शास्त्रैकवेद्यं ब्रह्मेतिचेन्न श्रुतेः कार्त्स्न्येन वागगोचरत्व-
निषेधपरत्वात् "प्रकृत्यैतावत्त्वं हि निषेधती"ति
सूत्रात् अन्यथा तव पक्षे ऽपि दोषसाम्यात् नन्व-
स्मत्पक्षे ऽपि ब्रह्मणः सत्यादिपदवाच्यत्वानङ्गीकारे
ऽपि तात्पर्येण तत्प्रतिपाद्यत्वाभ्युपगमान्नोक्तदो-
षावकाशः सत्यादिपदं न ब्रह्मवाचकं तत्प्रतिपादक-
वाक्यैकदेशपरत्वात् यन्नैवं तन्नैवं घटादिपदवदित्य-
नुमानादिति चेन्न वाक्ये शक्तिलक्षणयोरभावेन
ब्रह्मणस्तत्प्रतिपाद्यत्वासम्भवेनाश्रयासिद्धत्वादुक्ता-
नुमानवृत्तिहेतोः वाक्यार्थत्वस्यासंसर्गरूपे ब्रह्मण्य-
सिद्धेः सत्यादिपदं ब्रह्मवाचकं अन्यावाचकत्वे सति

साधुपदत्वात् यदेवं तदेवं नारायणादिपदवत् ब्रह्म किञ्चित्पदवाच्यं लक्ष्यत्वात् तीरादिवदिति प्रतिरोधात् "एतमेव ब्रह्मेत्याचक्षते तदेतदक्षरं गार्गि ब्राह्मणा अभिवदन्ती"त्यादिश्रुतेः "यदक्षरं वेदविदो वदन्ती"ति स्मृतेश्च किञ्च सत्यादिपदानां कचिच्छक्तिं विना तत्समूहस्य वाक्यत्वानुपपत्तेः निरर्थकपदसमूहस्याऽपि वाक्यत्वे जरद्गवादिखपुष्पशशशृङ्गादिपदसमूहस्याऽपि लक्षणया ब्रह्मपरत्वं च स्यात् किञ्च ब्रह्मणो ऽवाच्यशब्दवाच्यत्वं नवा आद्ये वाच्यत्वसिद्धिः द्वितीये तेन नोच्यते चेत्तर्ह्यवाच्यत्वासिद्ध्या सुतरां वाच्यत्वापत्तिः नच तस्याऽपि लक्ष्यत्वमेवेति वाच्यम् अवाच्यरूपमुख्यार्थाभावेन शक्यसम्बन्धरूपलक्षणासम्भवात् अनवस्थापत्तेश्च भावे वा ब्रह्म नावाच्यं किन्तु तीरवत् अवाच्यरूपमुख्यार्थसम्बन्धिमात्रमित्यर्थः स्यात् एतदुक्तं भवति अवाच्यशब्दे का वा लक्षणाऽभिप्रेता जहत्स्वार्थाऽजहत्स्वार्था भागत्यागलक्षणा वा नाऽऽद्या गङ्गाशक्यस्य त्यागेनागङ्गारूपतीरे लक्षणावत् अवाच्यपदशक्यस्य वचनाविषयरूपस्य त्यागेनाशक्ये च वाच्यरूपे लक्षणा स्यात् अवाच्यपद-

लक्ष्यं वाच्यमित्यर्थोऽङ्गीकृतः स्यात् नाऽपि द्वितीया वाच्यत्वाविशेषात् त्वन्मते ऽनङ्गीकारादद्वैतभङ्गाच्च नाऽपि तृतीया अभावे भागद्वयाभावात् नन्व-वाच्यरूपमुख्यार्थाभावे ऽपि नञ्समभिव्याहृतवाच्य-शब्देन वाच्यत्वात्यन्ताभावबोधनद्वारा स्वरूपे लक्षणाया पर्यवसानमिति चेन्न वाच्यत्वात्यन्ताभाव-वैशिष्ट्यस्य शक्त्या बोधने वाच्यत्वसिद्धेः मुख्यार्थं विना लक्षणायाश्चासम्भवात् यत्र लक्ष्यत्वं तत्र वाच्यत्वमितिव्याप्तिवत् यल्लक्ष्यं तदवाच्यमिति व्याप्त्यभावात् दृष्टान्ताभावाच्चेति किञ्च लक्ष्यपदे ऽपि लक्ष्यत्वे तीरस्यागङ्गात्ववद्ब्रह्मणो ऽलक्ष्यत्वापत्तिः नचनिधर्मकत्वादिष्टापत्तिरिति वाच्यं वाच्यत्वा-भावमात्रेण लक्ष्यत्वव्यवहारः लक्ष्यत्वाभावमात्रेण-वाच्यत्वव्यवहारश्च स्यात् तत्रापीष्टापत्तौ शब्द-सामान्यवाच्यलक्ष्यबहिर्भूतस्यावस्तुत्वेनाप्रामाणि-कतया ब्रह्मासिद्ध्यापत्तिः नच शक्तेरेव निषेध इतिवाच्यम् किञ्चित्पदशक्यत्वाभावे लक्षणासम्भ-वात् नच परमार्थसदादिपदं कस्यचिद्वाचकं पद-त्वादित्यत्र पदत्वं नाम किम् सुप्तिङन्तत्वं वा शक्तत्वं वा नाद्यः समासपदस्याशक्तत्वेन राज-

पुरुषादौ व्यभिचारात् नान्त्यः साध्यवैशिष्ट्य-प्रसङ्गादिति वाच्यम् असमस्तत्वे सति व्याकरणा-दिनिष्पन्नत्वरूपसाधुपदस्य हेतुत्वात् सत्यादिवाक्यं वाच्यार्थतात्पर्यवत् शब्दयुक्तं वाक्यत्वात् अग्नि-होत्रादिवाक्यवत् विषं भुङ्क्ष्वेत्यादावपि विष-भुज्यादिपदानां प्रकृतबोधविषयार्थवाचकत्वे ऽपि विषादेर्वाचकत्वान्न व्यभिचारः किञ्चावाच्यत्वे लक्ष्यत्वानुपपत्तिः वाच्यार्थसम्बन्धित्वेन ज्ञातस्यैव लक्ष्यत्वात् तज्ज्ञानं च न शब्दभिन्नप्रमाणोपपाद्यं ब्रह्मण उपनिषदेकगम्यत्वात् नाऽपि स्वप्रकाशतया नित्यसिद्धे शब्दवैयर्थ्यात् अवाच्यशब्दस्य च लक्षकस्यैव वक्तव्यत्वात् तत्रापि वाच्यसम्बन्धित्वेन ज्ञेयत्वे ऽनवस्थापत्तेः नच ब्रह्मणः स्वप्रकाशतया नित्यसिद्धत्वे ऽपि आवरणाभिभावकवृत्तिजननेन शास्त्रस्य सार्थक्यं स्वप्रकाशस्यावरणासम्भवात् नच निमित्ताभावान्न वाचकत्वं सत्यादिपदानां लक्षकत्वे सिद्धे निमित्ताभावस्तस्मिंश्च लक्षकत्व-मित्यन्योऽन्याश्रयापत्तेः नच निर्विशेषवाक्येन निमित्ताभावसिद्धिः निर्विशेषवाक्यस्य स्वरूपमात्र-परत्वे प्रवृत्तिनिमित्ताविरोधित्वं निर्विशेषत्वविशिष्ट-

परत्वे च तस्यैव सत्त्वे निर्विशेषपदवाच्यस्यैव सिद्धेः नचावान्तरतात्पर्यजन्यबोधेन विशेषाभाव-विषयकेन निमित्ताभावसिद्धिः निर्विशेषत्वस्यैव विशेषत्वेन विशेषमात्रनिषेधस्य स्वव्याहतत्वात् तस्मात्समस्तदोषगन्धाघ्रातमाहात्म्यमचिन्त्यान-न्तापरिमितस्वाभाविकसद्गुणशक्त्यादिवरुणालयं श्रीपुरुषोत्तमाख्यं परं ब्रह्म वेदान्तशास्त्रप्रमाणैक-गम्यमिति सिद्धम् विशेषार्थस्तु सिद्धान्तजाह्नव्यां द्रष्टव्यः श्रुत्यर्थस्तु यतो देशादिपरिच्छेदशून्या-द्विश्वान्तरात्मनो मुक्तोपसृप्याच्छ्रीपुरुषोत्तमात् मनसेति मनसा सहिता वाचः तत्प्रतिपादने प्रवृत्ता अपि निवर्त्तन्त इत्यन्वयः निवर्त्तने हेतु माह अप्राप्येति तत्स्वरूपगुणादीयत्तामलब्ध्वा ऽकृतार्था इव निवर्त्तन्ते अनन्तत्वेन कात्स्न्यागोचर-त्वात् यथा ऽगाधतोयाब्धौ प्रविष्टा जना यथा-शक्ति तमवगाह्य तद्गाधतामप्राप्य न पुनरावर्त्तते अगाधत्वात् स्नानपानादिदृष्टादृष्टफलैः कृतार्था अपि तत्तलस्पर्शमात्रेऽकृतार्था नह्येतावता तेषां वलहानिः अगाधत्वादेव तथा वेदा अपि तत्स्वरूपगुणादि-निर्णये प्रवृत्ता यथा ऽधिकारं सर्वाऽधिकारिभ्यः

पुरुषार्थचतुष्टयसाधनादिज्ञापनरूपभगवत्कैङ्कर्यपा-
लनेन कृतार्था अपि तदियत्तादिनिर्णयमात्रे ऽकृ-
तार्थाः अतः साधूक्तमकृतार्था इवेति तथाभूता-
कृतार्थत्वं तेषां भूषणमेव भगवदैश्वर्याद्यनन्तत्व-
द्योतकत्वात् एतेन वेदानां तदियत्ताज्ञानादज्ञत्व-
प्रसङ्गोऽपि निरस्तः यदीयत्ता स्याद्वेदाश्च न जानी-
युस्तदोक्तशङ्कावकाशः ननु तदस्ति प्रमाणा-
भावात् नहि खपुष्पादिगन्धाग्रहणे घ्राणेन्द्रिय-
शक्तिहानिः तस्यात्यन्ताभावात् अन्यथा "सोऽङ्ग
वेद यदि वा न वेदे"तिश्रुतेर्ब्रह्मणो ऽपि सार्वज्ञ्य-
हानिप्रसङ्गात् सपुरुषोत्तमः स्वात्मानं गुणादींश्च
याथात्म्येन वेद एव वेत्यवधारणार्थः सर्वज्ञत्वात्
"यः सर्वज्ञ"इतिश्रुतेः इयत्तावच्छेदेन तु न वेद
न जानात्येव तस्या अभावादित्यर्थः ननु निवर्त्तन्त
इति सामान्यपदप्रयोगेनेयत्तापरत्वसङ्कोचने माना-
भावाद्गौरवाच्चेति चेन्न "आनन्दं ब्रह्मणो विद्वान्न
बिभेती"ति मन्त्रोक्तशब्दस्यैव मानत्वात् अन्यथा-
ऽऽनन्दं विद्वानिति प्रयोगवैयर्थ्यात् नन्वत्रायं पुरुषः
"स्वयं ज्योति"रित्यादिश्रुत्यनुसाराद्ब्रह्मणश्चिदविष-
यत्वे सत्यपरोक्षव्यवहारयोग्यत्वेन स्वप्रकाशतया

स्वतः सिद्धत्वात् किमर्थं वाच्यत्वाङ्गीकार इति-
चेन्न स्वं प्रति विषयत्वाभावे स्वव्यवहारजननानुप-
पत्तेः स्फुरणान्तराङ्गीकारे ऽनवस्थापत्तेः अन्यत्र
कृप्तस्य तद्व्यवहारे तद्विषयत्वस्य नियामकस्याव-
श्यकत्वेन तत्त्यागासम्भवात् प्रमेयत्वं प्रमेय-
मित्यादौ प्रमेयत्वस्य स्ववृत्तित्ववदभेदे ऽपि विषय-
विषयित्वोपपत्तेः नच प्रमेयत्वादिकं न केवलान्वयि-
ईश्वरज्ञानविषयत्वरूपप्रमेयत्वस्य केवलान्वयित्वा-
भावे तस्य सार्वज्ञ्यानुपपत्तेः नच छिदाया अच्छे-
द्यत्ववच्चितेश्चिदविषयत्वं मिथ्यात्वानुमित्यादेरपि
स्वविषयत्वानापत्तेः एतेन चिद्विषयत्वं स्वप्रकाशत्व-
मिति निरस्तं घटादेरपि चिदविषयत्वापातात् एतेन
स्वव्यवहारे स्वातिरिक्तसम्विदनपेक्षत्वं स्वावच्छिन्न-
सम्विदनपेक्षत्वं वा तत्त्वमिति निरस्तं स्ववेद्यत्वेनोप-
पन्नत्वात् तवेष्टासिद्धेः अनुभूतिः स्फुरणाविषयः
अपरोक्षव्यवहारविषयत्वात् घटवत् नच जडत्व-
मुपाधिः पक्षेतरत्वात् नच स्वस्मिन्स्ववृत्तिविरोधः
स्वस्मिन् स्ववेद्यत्वे हि कथं विरुद्धं न तावत्स्वजनके-
न्द्रियासन्निकृष्टत्वात् स्वाजनकत्वाद्वा नित्यज्ञानस्यैव
स्वप्रकाशत्वाङ्गीकारात् तव नित्यचिद्विषयत्वस्य तत्

इयं विनैव घटादौ सत्त्वात् नाऽपि विषयविषयि भावस्य सम्बन्धत्वेन द्विष्ठत्वम् अतीतारोपिता सतां ज्ञानदर्शनेन तस्योभयानिष्ठत्वात् नच क्रियाकर्मत्वयोर्विरोधः विषयविषयिभावातिरिक्तकर्मत्वादे*रनङ्गीकारात् नच कर्त्तुः कर्मत्वविरोधः मामहं जानामीति प्रत्यक्षेण "तदात्मानमेवावेदे"ति श्रुत्या च कर्त्तुः कर्मत्वाविरोधात् मिथ्यात्वानुमितीशङ्कानादे † र्विषयत्वस्य दुर्वारत्वात् नच मामहं जानामीत्यादौ साक्षिणः कर्त्तृत्वमहमर्थस्य कर्त्तृत्वाच्चितः कर्मत्वमभेदे तद्द्वयादर्शनादिति वाच्यम् मामहमित्यत्र कर्त्तृकर्मतया प्रतीताहमर्थभिन्नसाक्षिणि मानाभावात् तदात्मानमित्यत्राप्यहमर्थसमानाधिकरणतया प्रतीतात्मन्यहमर्थभेदस्य बाधितत्वात् किञ्च चिदविषयत्वं स्वप्रकाशत्वं घटेऽप्यस्ति नच ज्ञानसामान्याविषयत्वं ब्रह्मासिद्ध्यापत्तेः नच स्वतः सिद्धं तत् विकल्पासहत्वात् तथाहि स्वत इत्यस्य स्वेनैवेत्यर्थोऽभिप्रेतः प्रमाणं विनेति वा नाऽद्यः स्वविषयत्वापत्तेः नान्त्यः उपायान्तरानुपन्यासेन तदसिद्ध्यापत्तेः नृशृङ्गशश-

---

* कृत्यादिविशेषस्यकार्यत्वादिदर्शनात्। † विषयिणएव।

शृङ्गादेरपि सिद्ध्यापत्तेः अन्यथा स्वप्रकाशत्वहानेश्च नच तदसत्त्वव्यावृत्तिफलकं प्रमाणम् नास्ति प्रकृते च वृत्तिविषयतामात्रेण तदस्ति ब्रह्मणो वृत्त्यविषयत्वे तदसतो व्यावृत्त्यसम्भवात् तद्विषयत्वे चाप्रकाशत्वापत्तेः किञ्च तद्विषयकसंशयं प्रति तद्विषयकनिश्चयस्य विरोधित्वात् क्लृप्तत्वेन विषयत्वं विना स्वसंशयविरोधानुपपत्तेः नच विषयत्वाभावेऽपि स्वनिर्वाहकत्वेन स्वसंशयविरोधित्वाद्युपपत्तिः स्वनिर्वाहकपदस्य निर्वहणक्रियाकर्तृत्वकर्मत्वादिमात्रपरत्वात् नच "स्वयं दासास्तपस्विन इत्यादौ दासान्तराभावमात्रेण स्वदासत्वव्यपदेशवत् स्वभिन्नस्वनिर्वाहकानपेक्षत्वमात्रेण स्वनिर्वाहकत्वोपचारः दासान्तराभावे सति स्वदास्यं कुर्वत्येव तपस्विनि तथा व्यवहारेण समाध्यादिषु स्थिते तदव्यवहारेण दृष्टान्तासिद्धेः "स्वाध्यायोऽध्येतव्य" इतिविधौ स्वविषयत्वदर्शनाच्च नच मामहं जानामीत्यादावहमर्थविषयकं ज्ञानं वृत्तिरूपमेव नतु स्वरूपज्ञानं वृत्त्यनुत्पत्तिदशायामामनहम्वेति कदाचित्संशयाद्यापत्तेः घटिकाद्वयं घटोऽयं घटोऽयमिति पश्यन्नेवाह मासमिति धारावहनोत्तरपरामर्शानुपपत्तेश्च

नहि घटाकाराहमाकाराचेति वृत्तिद्वयं युगपत्प्रागुत्पन्नं तद्यौगपद्यानङ्गीकाराच्च अस्तमितआदित्ये याज्ञवल्क्य "किंज्योतिरेवायं पुरुष" इत्यादिप्रश्नपूर्वकं चन्द्राग्निवाग्ज्योतिरप्युक्ता चन्द्रमस्यस्तमिते शान्ते "ऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष" इत्यादीनां ज्ञानसाधनानामभावे किंज्ञानसाधनमिति जनकेन पृष्टे याज्ञवल्क्येनोक्तम् "आत्मैवास्य ज्योतिर्भवती"त्युपक्रमे आत्मशब्दो द्युभ्वाद्यधिकरणान्यायेनेशपरः "अत्रायंपुरुषः स्वयंज्योति" रित्युपसंहारे ऽप्यत्र सुषुप्त्याद्यादौ ज्ञानसामान्याभावे ऽस्य जीवस्यायं परेश एव स्वयंज्योतिर्ज्ञानसाधनं वाचैवायं ज्योतिषाऽऽस्ते" इतिज्योतिः शब्दस्यवाचि ज्ञानसाधने प्रयोगात् त्वदभिमतस्वप्रकाशपरत्वे सदा स्वप्रकाशत्वेन श्रुतावत्रेत्यस्य वैयर्थ्यात् नच जाग्रदवस्थायामादित्यादिज्योतिः सम्भवेन दुर्विवेकतया ऽस्यामवस्थायां सुविवेकतया ऽत्रेति सार्थकं स्वप्रकाशस्याविवेकाद्यसम्भवात् अस्येति षष्ठ्या विषयत्वाभिधानाच्च स्वविषयत्वस्वरूपस्वप्रकाशज्ञानेन सविशेषभिन्नस्वप्रकाशश्च जीवः परेशश्च सिद्धः स्वाभिमतस्वप्रकाशत्वोपपत्तेरिति

सङ्क्षेपः यद्वा वाच इत्यत्र वाक्शब्दो लौकिकवाक्-
परः तत्र दोषवत्त्वेन निषेधसम्भवात् न वैदिकस्य
तथात्वे ह्यौपनिषदत्वभङ्गात् किञ्च श्रुतौ मन-
श्शब्दो ऽपि शास्त्राचार्यसंस्कारशून्यप्राकृतमनोवा-
चकः अन्यथा "मनसैवानुद्रष्टव्य" इतिसावधारणा-
श्रुतिव्याकोपात् एतेन "यद्वाचानभ्युदितं यन्मनसा
न मनुते" इत्यादयः श्रुतयो ऽपि व्याख्याता-
स्तुल्यार्थत्वात् अन्यथा मन्तव्य इतिविधिश्रुति-
विरोधात् यद्वस्तु लौकिक्या वाचाऽभ्युदितं प्रति-
पादितं न भवति तदेव ब्रह्म त्वं विद्धीत्यन्वयः एव-
मेव मनःशब्दस्याऽप्यसंस्कृतमनोवाचकत्वं बोध्यम्
अन्यथा विद्धीतिवेदनविषयत्वोक्तिविरोधात् एव
"प्रवचनेनैव प्रोवाचे"त्यत्रापि प्राकृतवचनवि-
लक्षणश्रौतवचनेनानन्तत्वेन वा प्रोवाच उपदिष्ट-
वानित्यर्थः अन्यथा प्रोवाचेति वचनक्रियापद-
प्रयोगवैयर्थ्यात् सर्वथा प्रमाणाविषयत्वे शश-
शृङ्गादिसाम्यापत्तेः शास्त्रारम्भवैयर्थ्याच्चेति सङ्-
क्षेपः तस्माच्छास्त्रैकवेद्यं परं ब्रह्म श्रीपुरुषोत्तमा-
ख्यमिति सिद्धम् ॥

इति प्रमाणाविषयगिरिनिपातः ॥ ४ ॥

ननु "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु" रित्यादिभिः सर्वज्ञेन जैमिनिना सर्वस्याऽपि वेदस्य क्रियापरत्वेन सूत्रितत्वात्तदन्तःपातिवेदान्तभागस्याऽपि कर्मण्येव समन्वयो युक्तः तथात्वे च कथं शास्त्रैकप्रमाणगम्यं ब्रह्मेत्युक्तसिद्धान्तसम्भवः शास्त्रस्य तद्विषयकत्वाभावात् एतदुक्तम्भवति पञ्चप्रकारवाक्यसमुदायस्तावत्समस्तो वेदः वाक्यानिच विधिनिषेधार्थवादमन्त्रनामधेयाख्यानि तत्र "ज्योतिष्टोमेन यजेत स्वर्गकामः ॥ अग्निहोत्रं जुहोती"त्यादिविधिवाक्यं "ब्राह्मणो न हन्तव्य" इत्यादिकं निषेधवाक्यं "वायुर्वै क्षेपिष्ठा देवते" त्यादयोऽर्थवादाः "इषेत्वा अग्निर्मूर्द्धादिव" इत्यादयो मन्त्राः ज्योतिष्टोमाश्वमेधादयो नामधेया इति तेषां विवेकः तथाचोपक्रमे "अथातो धर्मजिज्ञासे"तिसूत्रे वेदस्याध्यापनविधिकरणकभावनाविधिभावफलवदर्थपरत्वं सूत्रकृता जैमिनिना निरूपितं "चोदनालक्षणोऽर्थो धर्म" इतिद्वितीये लक्षणसूत्रे धर्मे कार्ये चोदनाप्रमाणमिति कार्यपरत्वव्यासं वेदस्य प्रामाण्यं

यत्र प्रामाण्यं तत्र कार्यपरत्वमिति व्याप्त्या निर्णीतं तत्र वायुर्वै क्षेपिष्ठेत्याद्यर्थवादानां स्वार्थप्रामाण्यं नवेति संशय्य पूर्वपक्षमाह "आम्नायस्य क्रियार्थत्वा"दिति आम्नायस्य वेदस्य क्रिया एवार्थो यस्य स क्रियार्थस्तस्य भावस्तत्त्वं तस्मादिति विग्रहः वेदवृत्तिप्रामाण्यस्य क्रियार्थत्वेन व्याप्तत्वहेतो-रित्यर्थः अर्थवादेषु धर्मस्याप्रतीयमानत्वात् तदेव विवृणोति अतदर्थानामानर्थक्यमित्यतो न तेषां सर्वत्र प्रामाण्यमिति प्राप्ते "स्वाध्यायो ऽध्येतव्य इत्यध्ययनविधिना तेषामप्युपात्तत्वान्निष्फलत्वा-भ्युपगमे ऽप्रामाण्यापत्त्या ऽध्ययनविधेरप्यंशतो बाधप्रसङ्गः स्यादित्यभिप्रायेण सिद्धान्तमाह विधिना त्वेकवाक्यत्वादित्यादिना वायुवदित्याद्यर्थ-वादानां "वायव्यं श्वेतमालभेते"त्यादिविधिवाक्यै-रेकवाक्यत्वात् तद्विधेयार्थानां स्तुत्यर्थेन स्तुत्यर्थ-रूपेण द्वारेण प्रामाण्यं स्युरिति मन्त्राणां च प्रयोगसमवेतार्थस्मारकतया सार्थक्यं ननु तदु-च्चारणार्थादृष्टार्थं दृष्टे सम्भवत्यदृष्टस्यान्याय्य-त्वात् नन्वदृष्टस्य प्रकारान्तरेणाऽपि सम्भवान्मन्त्रा-म्नायस्यानर्थक्यमिति वाच्यं मन्त्रैरेव स्मर्त्तव्य-

मिति नियमविध्याश्रयणात् प्रमाणलक्षणे मन्त्राणां विचारः कृतः इषेत्वा इतिमन्त्रे छिनद्मीत्यध्याहारात् शाखाछेदनक्रियाप्रतीतेः अग्निर्मूर्द्धेत्यादौ च क्रियासाधनदेवतादिप्रतीतेः मन्त्राः श्रुत्यादिभिः क्रतौ विनियुक्ताः ते किमुच्चारणमात्रेणादृष्टं जनयन्तः क्रतावुपकुर्वन्ति उत दृष्टेनैवार्थस्मरणेनेति विषये चिन्तादिनाऽप्यध्ययनकालावगतमन्त्रार्थस्य स्मृतिसम्भवाद्दृष्टार्था एव मन्त्रा इतिप्राप्ते राद्धान्तमाह अविशिष्टस्तु वाक्यार्थइति लोकवेदयोर्वाक्यार्थस्याविशेषात् मन्त्रवाक्यानां दृष्टेनैव स्वार्थप्रकाशनेन क्रतूपकारकत्वसम्भवात् फलवदनुष्ठानापेक्षितेन क्रिया तत्साधनस्मरणेन द्वारेण मन्त्राणां कर्माङ्गत्वं मन्त्रैरेव स्मर्त्तव्य इतिनियमस्त्वदृष्टार्थः तत्र ये मन्त्रा यत्र पठितास्तेषां तत्र यदर्थप्रकाशनं प्रयोजनं सम्भवति तदा तत्रैव विनियोगः येषां तु न सम्भवति तेषां यत्र सम्भवस्तत्रोत्कर्षः येषां तु क्वाऽपि न सम्भवति तदुच्चारणस्य त्वगत्या ऽदृष्टार्थत्वं सर्वथा तु तेषां नानर्थक्यमित्यर्थः तथाचार्थवादानां स्तुतिपदार्थद्वारा पदैकवाक्यत्वं विधिभि-

मन्त्राणां तु वाक्यार्थज्ञानद्वारा वाक्यैकवाक्यत्व-
मिति विवेकः अथ नामधेयानां विधेयार्थपरिच्छेद-
कतया ऽर्थवत्त्वं तथाहि "उद्भिदा यजेत पशुकाम"
इत्यत्रोद्भिच्छब्दो यागनामधेयं तेनहि विधेयार्थ-
परिच्छेदः क्रियते तत्र को ऽसौ विशेष इत्यपेक्षायां
उद्भिच्छब्दादुद्भिद्रूपो याग इति ज्ञायते उद्भिदा यागे-
नेतिसामानाधिकरण्ये नामधेयस्यान्वयात् तस्य
च यजिना सामानाधिकरण्यं वैश्वदेवीशब्दोपात्त-
विशेषसमर्पकाऽऽमिक्षापदस्येव वोध्यं सामान्यस्या-
विधेयत्वात् यज्यवगतयागविशेषसमर्पकत्वेन नाम-
धेयस्य सामानाधिकरण्याद्विधेयार्थपरिच्छेदकतया
ऽर्थवत्त्वमिति सिद्धं अथाऽनर्थहेतुकर्मणः सकाशा-
त्पुरुषस्य निवर्त्तकत्वेन निषेधानां पुरुषार्थानुवन्धि-
त्वं यथा विधयः प्रेरणामभिदधन्तः स्वप्रवर्त्तकत्व-
निर्वाहार्थं विधेयस्य यागादेः श्रेयः साधनत्व
माक्षिपन्तः पुरुषं तत्र प्रवर्त्तयन्ति एवं "न कलञ्जं
भक्षये"दित्यादयो निषेधा अपि निवर्त्तनामभिद-
धन्तः स्वनिवर्त्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्ज-
भक्षणादेरनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्त्त-
यन्ति लिङर्थस्तावत्प्रवर्त्तना ऽतस्तेन सम्वध्य-

मानो नञ् प्रवर्त्तनां प्रति निवर्त्तनां गमयति विधिवाक्यश्रवणे ऽयं मां प्रवर्त्तयतीति निवृत्त्यनुकूलव्यापारनिवर्त्तनायाः प्रतीतेः अतः सर्वत्र निषेधेषु निवर्त्तनैव वाक्यार्थः एवं च विधिनिषेधविधुराणां वेदान्तानां सिद्धार्थवस्तुबोधकानामपि मन्त्रार्थवादादिष्वेवान्तर्भावेनाध्ययनविध्युपात्तत्वात् सर्वथाऽऽनर्थक्यनिरासाय परम्परया साध्ये कर्मण्येवान्वयो युक्तः स्वातन्त्र्याभ्युपगमे निष्फलत्वापत्तेः एवं क्रत्वङ्गकर्त्तृप्रतिपादनेनैव तेषां नैराकाङ्क्ष्यं बोध्यं तच्च तत्त्वं पदार्थपराणां वाक्यानां कर्मकर्त्तृदेवतास्तावकत्वात् सर्वस्याऽपि वेदस्य साध्ये कर्मण्येव समन्वय इतिसिद्धं वेदान्तवाक्यानि न ब्रह्मपराणि क्रत्वङ्गकर्त्तृप्राशस्त्यप्रकाशनपरत्वात् अर्थवादवाक्यवदित्यनुमानात् अर्थवादस्त्रिविधः गुणवादो ऽनुवादो भूतार्थवादश्चेति गुणवृत्तिनिरूप्यत्वे सति ❋ गुणविषयको वादः प्रथमः यथाऽऽ"दित्यो यूप" इति श्रुत्या यूपस्य प्रत्यक्षविरोधात्त्वानुपपत्त्यादित्यगुणवत्त्वं कयाचिद्विवक्षया

---

❋ विरोधे गुणवादः स्यादनुवादो ऽवधारिते भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत इति मीमांसककारिका ॥

बोध्यते प्रमाणान्तरसिद्धस्य कथनमनुवादः यथा "ऽग्निर्हिमस्य भेषज"मित्यत्राग्नेर्हिमनिवर्त्तकतायाः प्रत्यक्षसिद्धत्वात्तस्यानुवादमात्रमिति सिद्धार्थयाथा-त्म्यबोधको भूतार्थवादः यथा "वज्रहस्तः" पुरन्द-रस्य वज्रहस्तत्वं यथार्थमेव किञ्च प्रकारान्तरेणार्थ-वादो द्विविधः स्तुतिरूपो निन्दारूपश्च तत्र विधे-यार्थस्तावकः प्रथमः यथा "वायुर्वै क्षेपिष्ठा देवते" त्यादि तस्य विधिशेषत्वेनान्वयः "वायव्यम् श्वेत-मालभेत" इत्यनेनान्वयात् यथा "तद्रुद्रस्य रोदन"-मिति द्वितीयो निषेध्यनिन्दात्मकः तस्य निषेध-शेषत्वेन "बर्हिषि रजतं न दद्या"दित्यनेन निषेधेनान्वयात् तत्र वेदान्तानां मध्ये केषां चित् गुणवादत्वं केषां चिद्धानुवादत्वादिकमिति यथा-योग्यं निर्णेयमिति प्राप्ते राद्धान्तः "तत्तु समन्वया" दिति तुशब्दः पूर्वपक्षनिषेधार्थः पूर्वोक्तरीत्या वेदान्तशास्त्रैकवेद्यं ब्रह्मैव कुतः समन्वयात् सर्व-शास्त्रस्य तत्रैव मुमुक्षुजिज्ञास्ये जगदभिन्ननिमि-त्तोपादानकारणे शास्त्रयोनौ जीवप्रधानकाल-कर्मादिनियन्तरि ब्रह्मरुद्रेन्द्रादिकिरीटेडितपादपीठे निखिलदोषगन्धाघ्रातमाहात्म्ये सार्वज्ञ्याद्यनन्त-

गुणनिलये ब्रह्मणि मुक्तोपसृप्ये समन्वयात् "स विजिज्ञासितव्यः॥ यतो वा इमानि भूतानि॥ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च नारायणात्प्राणो जायते एको ह वै नारायण आसीन्न ब्रह्मा नेशानः तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषो ऽजायत तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोऽपतत् ता इमाः प्रतता आपस्तत्र ब्रह्मा चतुर्मुखोऽजायत नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रः सर्वे वेदा यत्पदमामनन्ति अन्तःप्रविष्टः शास्ता जनानां यं सर्वे देवा नमन्ति य आत्मा ऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो ऽपिपासः सत्यसङ्कल्पः यः सर्वज्ञः सर्ववित् ब्रह्मविदाप्नोति परं प्रधानक्षेत्रज्ञपतिः अक्षरात्परतः पर" इत्यादिश्रुतिभ्यः यद्वा उक्तस्वरुपं ब्रह्मैव वेदान्तेषु समन्वयात् उक्तश्रुतिभ्यः सम्यगन्वयः शक्त्या शक्यत्वेन वाऽन्वयः समन्वयस्तस्मादिति यावत् अथ यदुक्तं सर्वस्याऽपि वेदस्य क्रियापरत्वं तत्तुच्छं ब्रह्मतस्कराणां कपोलकल्पनामात्रत्वात् प्रत्युत समस्तधर्मजातस्य ब्रह्मविविदिषयैव मोक्षासाधारणरूपयोपक्षीणत्वात् कर्मणा

एव मोक्षोपायभूतविद्योत्पादकत्वेन परम्परया ब्रह्मण्येव समन्वयाच्च "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"त्यादि-श्रुतेः एतेनैव यदुक्तं क्रत्वर्थकर्तृप्रतिपादनेन वेदान्ता-नान्नैराकाङ्क्ष्यमिति निरस्तं प्रत्युत कर्मण एव जिज्ञासोर्विशेषणत्वेन तदधिकारित्वसम्पादनेनैव नैराकाङ्क्ष्यात् शास्त्रं न कर्मपरं तस्य जिज्ञासो-त्पादनेनोपक्षीणत्वात् रूपादिज्ञानोत्पादने चक्षु-रादिवदित्यनुमानात् ननु सर्वेषां कारकाणां कर्म-साधनत्वं तावन्निर्विवादं तथाच कर्त्तुरपि कारकत्वा-विशेषात् क्रियाङ्गत्वे कथमप्यनुपपत्तिशङ्कावकाशा-भावात् नच ब्रह्मण आप्तकामतया तद्भिन्नत्वेन कर्मकर्तृत्वाभावादिष्टासिद्धिरितिवाच्यं ब्रह्मणस्त-थात्वेऽपि जीवभिन्नत्वाभावात् तत्त्वमस्यादिवाक्यैः क्रत्वङ्गकर्त्तुः क्षेत्रज्ञस्य ब्रह्मत्वविधानेन स्तूयमान-त्वान्न तद्भिन्नं किमपि ब्रह्मशब्दाभिधेयमस्तीति चेन्न मन्दानामन्धपरम्परोपदेशमात्रत्वात् "अविद्याया-मन्तरे वर्त्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः जङ्घन्यमाना अपयन्ति मूढा अन्धैर्नीयमाना यथाऽन्धा" इतिश्रुतेः नहि कर्मकर्त्रादिसर्वकारक-

कलापनियन्तुः स्वतन्त्रस्य विश्वात्मनः परब्रह्मणः पराङ्गत्वं जीवात्पृथगसत्त्वं चानुन्मत्तैः कैश्चिदपि वक्तुं शक्यं "यदासीत्तदधीनमासीत् तस्य भासा सर्वमिदं विभाति एष सर्वभूतान्तरात्मा अन्तः प्रविष्टः शास्ते"त्यादिश्रुतेः नाऽपि "प्लवा ह्येते ऽदृढा यज्ञरूपाः अन्तवदेवास्य तद्भवति मृत्वा पुनर्मृत्युमापद्यते ऽर्द्यमानः स्वकर्मभि"रित्यादिश्रुतिभिर्निन्दिते कर्मणि वेदान्तानां समन्वयो युक्तः अनाप्तत्वापत्तेः नहि स्वमुखेनैव निन्दां कृत्वा पुनस्तस्मिन्नेव निन्दाविषये स्वयं समन्वीयात्सर्वज्ञो वेदः तथात्वे चोन्मत्तप्रलापवत्तस्याऽप्यप्रामाण्यप्रसङ्गात् नाऽपि वेदान्तानां विध्यङ्गत्वमर्थवादादिवद्वक्तुं शक्यं भिन्नप्रकरणपठितत्वात् विधिसान्निध्याभावाच्च नाऽपि प्रवृत्तिनिवृत्त्यभावरूपभूतार्थबोधकतया वेदान्तानां निष्फलत्वं वक्तुं शक्यं वेदान्तवेद्यब्रह्मज्ञानस्य मोक्षरूपपरमश्रेयःफलवत्त्वात् "तमेव विदित्वा ऽतिमृत्युमेति नान्यः पन्था विद्यते ऽयनाय॥ ब्रह्मविदाप्नोति परं॥ तरति शोकमात्मवित् निरञ्जनः परमं साम्यमुपैति॥ तन्महिमानमिति वीतशोकः॥ जुष्टस्ततस्तेनामृतत्वमेति॥ यदा चर्म-

यदाकाशं वेष्टयिष्यन्ति मानवाः तदा देवमविज्ञाय दुःखस्यान्तं निगच्छती"त्याद्यन्वयव्यतिरेकसावधारणश्रुतिभ्यः "पुरुषार्थो ऽतः शब्दादि"तिसूत्रात् ननु"अक्षय्यं ह वै चातुर्मास्ययाजिन" इत्यादिना कर्मणो ऽपि ब्रह्मवत्स्तुतिश्रवणात् तत्र समन्वयो ऽपि न दोषावह इतिचेन्न वेदविषयः स एव यः सर्वत्र स्तूयते एव नतु क्वाऽपि निन्द्यते कर्मणास्तु स्तुतिनिन्दयोरुभयोर्विषयत्वदर्शनान्न शास्त्रसमन्वितत्वमित्यर्थः "यथेह कर्मचितो लोकः क्षीयते नास्त्यकृतः कृते"नेत्यादिना निन्दापूर्वकश्रेयः प्रतिवन्धकत्वश्रवणात् कर्मस्तुतिस्तु वालानामतत्त्वे तत्त्वप्रेक्षावतां तमोऽपिहितवुद्धीनां सच्छास्त्राचार्यसंस्कारहीनमनस्कानां पशुपुरुषाणां प्रवर्त्तनायैवेति वोध्यम् "एष भूतपाल एष भूताधिपतिः सकारणं कारणाधिपाधिपः न तस्य कश्चिज्जनिता नचाधिपः॥ न तत्समश्चाभ्यधिकश्च दृश्यते॥ पराऽस्य शक्तिर्विविधैव श्रूयते॥ यः सर्वज्ञः स सर्ववित्॥ संसारवन्धस्थितिमोक्षहेतु"रित्यादिना सर्वत्र स्तूयमाने "य आत्माऽपहतपाप्मे"त्यादिना हेयधर्मगन्धास्पृष्टमाहात्म्ये श्रीमुकुन्दे एव परब्रह्मणि

वेदान्तानां समन्वय इतिराद्धान्तः "यतो वा इमानि भूतानि जायन्ते ॥ सदेव सौम्येद मग्र आसीत् ब्रह्म वा इदमेकमेवाग्र आसीत् ॥ ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदाहं ब्रह्मास्मीति ॥ तस्मात्सर्वमभवत् ॥ आत्मा वा इदमेक एवाग्र आसीत् तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ॥ सत्यं ज्ञानमनन्तं ब्रह्म ॥ विज्ञानमानन्दं ब्रह्मे"त्यादिश्रुतिभ्यः सम्बन्धो नाम शक्त्यैव तत्परत्वं न लक्षणादिवृत्त्या जघन्यस्य मुख्यबाध्यत्वात् "यत्परः शब्दः स शब्दार्थ इतिन्यायात् ननु स्यादेतदुपनिषद्भागस्य कथञ्चिद्ब्रह्मपरत्वं तत्र तथात्वदर्शनात्तथाऽपि न पूर्वभागस्य तथात्वं कथमपि शक्यते वक्तुं तस्य तु "यावज्जीवमग्निहोत्रं जुहोति ॥ ज्योतिष्टोमेन यजेत् स्वर्गकाम" इत्यादिना नित्यकाम्यादिकर्मविधायकत्वेन नैराकाङ्क्ष्यत्वश्रवणादिति चेन्न कृत्स्नस्याऽपि वेदस्य ब्रह्मपरत्वमेव कर्मादौ तस्य केनाचिद्भागेन कथञ्चिदन्वयदर्शने ऽपि समन्वयस्तु ब्रह्मण्येव तत्रोपनिषद्भागस्य तावत्साक्षात्तत्स्वरुपगुणादिप्रतिपादनपरत्वात्साक्षादन्वयो निर्विवादः "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा

ब्रह्मसर्वानुभूः ब्रह्मैव ममृतं पुरस्तात् तं त्वौपनिषदं पुरुषं पृच्छामी"त्यादिवाक्यानां न कथमप्यन्यत्र समन्वेतुं शक्यं कपोलकल्पनाया निष्प्रमाणत्वात् तथात्वे श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् "ततस्तु तं पश्यति निष्कलं ध्यायमान" इत्यादिकं शास्त्रं विना प्रत्यक्षादिप्रमाणागोचरत्वाच्च तस्य नित्यकर्मपराणां चाधिकारिसत्त्वशुद्धिसम्पादनद्वारा ब्रह्मविषयकज्ञानाद्युपपादनेन काम्यानामपि संयोगपृथक्त्वन्यायेन तत्रैव परम्परया समन्वय इतिविवेकः न्यायश्च श्रीजैमिनिना सूत्रितः "एकस्योभयत्वे संयोगपृथक्त्व"मितिसूत्रात् एकस्य कर्मण उभयत्वेऽनेकफलसम्बन्धे संयोगः उभयसम्बन्धबोधकतावाक्यस्य तस्य पृथक्त्वं भेदः यथा "खादिरैर्जुहोति खादिरैर्जुहुयाद्वीर्यकाम" इत्येकस्यैव खादिरकरणकस्य कर्मण उभयपरत्वं तथा प्रकृतेऽपि ज्योतिष्टोमादिकर्मणां स्वर्गादिफलकत्वे श्रूयमाणेऽपि "तमेतमात्मानं ब्राह्मणा विविदिषन्ती" तिश्रुतेर्ज्ञानार्थत्वमित्यवगमादित्यर्थः तस्मात्कृत्स्नस्याऽपि वेदस्य साक्षात्परम्परया वा ब्रह्मण्येव समन्वयः तथोक्तं समन्वयाधिकरणे भगवच्चरणैः-

राद्याचार्यैः प्रथमवर्णके प्रत्युत कर्मण एव विवि-
दिषोत्पादनेन परम्परया तत्प्राप्तिसाधनीभूतज्ञानो-
त्पत्त्युपकारकत्वेन समन्वय इतिनिश्चीयते विवि-
दिषाश्रुतेरिति द्वितीयवर्णके ऽपि समस्तश्रुतीनां
साक्षात्परम्परया वा तत्रैव समन्वयादित्यादिना ॥
ननुब्रह्मणः स्वातन्त्र्योक्तिरयुक्ता तस्य कर्मसापेक्ष-
त्वात् "वैषम्यनैर्घृण्येन सापेक्षत्वा तथाहि दर्शयती"
ति सिद्धान्तसूत्रात् अयम्भावः श्रीपुरुषोत्तमः
विचित्रसृष्टिकरणे स्वतन्त्रो वा तत्तत्क्षेत्रज्ञकर्म-
सापेक्षो वा नाऽद्यः तस्य रागाद्यभावेन सुखदुःखा-
द्यवच्छिन्नसृष्टिकरणे प्रवृत्त्यसम्भवात् अन्यथा
वैषम्यनैर्घृण्यप्रसङ्गात् अतो द्वितीय एव पक्षो
ऽकामेनाऽपि त्वयोक्तदोषप्रहाणाये ऽङ्गीकार्यस्तथात्वे
न स्वातन्त्र्यमिति किञ्च कर्मण एवाभीष्टसिद्धौ
परमेश्वरस्याप्रयोजकत्वेन तदभ्युपगमस्य दुरा-
ग्रहमात्रत्वादिति चेन्न तस्यैव कर्मफलदातृत्वात्
स्वातन्त्र्यमेव परमेश्वरस्य वैचित्र्यकरणे व्याज-
मात्रकर्मसापेक्षत्वे ऽपि स्वतन्त्रत्वमेव वैचित्र्ये
कर्मणो हेतुत्वे ऽपि तत्कर्तृत्वे तत्सापेक्षत्वाभावात्
अन्यथा जडात्कर्मणः फलसिद्ध्यसम्भवेन तस्यैव

वैयर्थ्यापत्तेः व्रीह्यादिक्षेत्रफलनिष्पत्तौ वृष्ट्यभावे बीजानां वैयर्थ्यदर्शनात् "फलमत उपपत्ते"रिति-न्यायात् नहि कटुमाधुर्यादिविशेषवतां निम्बाम्रादि-वृक्षाणां तत्तत्फलनिष्पत्तौ पर्जन्यस्यासाधारण-कर्तृत्वस्वातन्त्र्यादिसत्त्वे ऽपि वैषम्यादिप्रसक्तिः स्वातन्त्र्यहानिश्च दृश्यते तत्तद्गुणदोषादेस्तत्तद्बीज-वृत्तित्वात् वृष्ट्यभावे तत्तत्फलानिष्पत्तेश्च तथोत्त-माधमाधिकारादिसुखदुःखादिवैचित्र्यावच्छिन्नसृष्टे जगति श्रीभगवतः स्वातन्त्र्यादियोगे सत्त्वे ऽपि न वैषम्यादियोगः स्वातन्त्र्यप्रहाणिश्च वैषम्यादीनां तत्तद्बीजस्थानीयकर्मवृत्तित्वात् "पुण्यो वै पुण्येन कर्मणा भवती"तिश्रुतेः तदभावे कर्मफलासिद्धेः ननु तथाऽपि कर्मसापेक्षत्वं तदवस्थं तस्य कर्मणः सृष्टिबीजत्वेन त्वयाऽपि स्वीकारादितिचेन्न बीजस्य सत्वेऽपि फलनिष्पत्तौ तस्य पर्जन्यपारतन्त्र्यदर्श-नात् तथा कर्मणः सत्वेऽपि स्वफलनिष्पत्तावीश्वर-परतन्त्रत्वमितिध्येयं नास्माकं कर्मस्वरूपनिषेधे तात्पर्यं तस्याऽपि श्रौतत्वात् किन्तु तत्फलसिद्धौ तस्य परमेश्वरपरतन्त्रत्वनिश्चये एवेतिभावः कर्म-चेतनाधीनं जडत्वात् परजन्यत्वात् घटादिवदिति

प्रयोगात् नचैवं कर्मणो जीवनिर्वर्त्यत्वात्तत्परतन्त्रत्वे ऽपि परमात्मनस्तदप्रयोजकत्वमिति वाच्यं जीवस्य परप्रयोज्यकर्त्तृत्वेन प्रधानकर्त्तृत्वस्य प्रयोजके परमेश्वर एव पर्यवसानात् एवं परमेश्वरस्य स्वातन्त्र्यसिद्ध्या कर्मणस्तद्भावापत्तिलक्षणश्रेयःसाधनज्ञानजनकत्वेनोपक्षीणत्वान्न क्रत्वङ्गत्वं ब्रह्मणः नतरां कर्मणि शास्त्रसमन्वय इतिभावः "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे"तिश्रीमुखगानात् ब्रह्म न कर्माङ्गं स्वतन्त्रत्वात् विश्वात्मत्वात्सर्वनियन्तृत्वात् व्यतिरेके पुरोडाशादिवत् कर्मपरशेषं भवितु मर्हति जडत्वात् परार्थत्वात् इतरजन्यत्वात् पुरोडाशादिवदित्यनुमानात् विस्तरस्त्वाकरे द्रष्टव्यः ॥

इति कर्ममीमांसकाभिमतपक्ष-
गिरिनिपातः ॥ ५ ॥

इत्थं सामान्यतो ब्रह्मणि वेदान्तशास्त्रसमन्वय इतिसिद्धम् अथ किंस्वरूपे ब्रह्मणि शास्त्रस्य समन्वय इतिविशेषाकाङ्क्षायामाहुरेके अखण्डार्थे ब्रह्मणि वेदान्तानां समन्वयः तथाहि द्विविधं वेदान्तवाक्यं पदार्थनिष्ठं वाक्यार्थनिष्ठं च तत्रैकै-

कमपि लौकिकवैदिकभेदेन द्विविधं "तत्र सत्यं ज्ञानमनन्त"मित्यादि तत्पदार्थनिष्ठं "योऽयं विज्ञानघन" इत्यादि त्वंपदार्थनिष्ठं "तत्त्वमसी"तिवाक्यार्थनिष्ठं वैदिकं प्रकृष्टप्रकाशश्चन्द्र इतिपदार्थनिष्ठं सोऽयं देवदत्त इत्यादिवाक्यार्थनिष्ठं लौकिकं तत्र-वाक्यार्थस्याखण्डत्वं नाम असंसृष्टत्वं वाक्यस्याखण्डत्वं च अखण्डार्थकत्वं तल्लक्षणंच अपर्याय-शब्दा(१)नां पदवृत्ति स्मारितातिरिक्त(२)संसर्गा-गोचरप्रमाजनकत्वं ते(३)षा मेकप्रातिपदिकार्थ-मात्रपर्यवसायित्वं वा तत्त्वं चोपक्रमादिभिर्लिङ्गै-र्निश्चीयते तथाच छान्दोग्ये षष्ठे ऽध्याये "सदेव सौम्येदम(४)ग्र आसी"दित्युपक्रमवाक्यं सज (५)

(१) घटः कलश इत्यादौ संसर्गप्रमापके एकार्थपरे ऽतिव्याप्ति-वारणायापर्य्यायशब्दानामिति ।

(२) अप्राप्तयोः प्राप्तिस्संयोग इत्यादिसंयोगलक्षणवाक्ये ऽव्याप्ति-वारणाय पदवृत्तिस्मारितातिरिक्तेति १ पदवृत्तिर्हि शक्तिः पदार्थ-वृत्तिर्लक्षणा साच बहुप्रकारा ।

(३) एकत्वं प्रातिपदिकार्थस्यैकधर्मावच्छेदेन वृत्तिविषयत्वं नत्वेक मात्रव्यक्तित्वम् ।

(४) उद्दालकः पुत्रमुवाच हेसौम्य प्रियदर्शनेदं सर्वं जगदग्रे उत्पत्तेः प्राक्काले सत् अबाधितमेवासीत् एवकारेण जगतः पृथक्-सत्तानिषिध्यते ।

(५) एकमेवाद्वितीयमिति पदत्रयम् ।

सीयविजातीयस्वगतभेदशून्यार्थपरं "ऐतदात्म्यमिदं सर्व"मित्युपसंहारो ऽपि तत्पर एव इदमुपक्रमोपसंहारैकरूप्यं तात्पर्यनिर्णये लिङ्गम् १ तथा "तत्त्वमसी,,तिनवकृत्वो ऽभ्यासः २ निःशेषविशेषशून्यस्य ब्रह्मणो मानान्तराविषयत्वात् अपूर्वता ३ "अत्र वाव किल सौम्य न निभालयस" इतिश्रुतेः देहादिसङ्घातगतमपि प्रत्यग्ब्रह्म तवाज्ञातमित्यर्थः "तस्य तावदेवचिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इतिफलं ४ "अनेन जीवेनात्मना ऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यद्वितीयज्ञानार्थोऽर्थवादः ५ मृदादिदृष्टान्तैः स्वोपादानातिरिक्तं कार्यं नास्तीत्युपपत्तिः ६ एवं षड्भिरुपक्रमादिलिङ्गैर्लक्षणया वेदान्तानामखण्डार्थे तात्पर्यमवगम्यते नच सर्वपदलक्षणा विरुद्धेतिशङ्कनीयं सर्वैरर्थवादैरेकस्याः स्तुतेर्लक्ष्यत्वाङ्गीकारात् तथा प्रकृते ऽप्यदोष इति तन्नासम्भवात् तथाहि आद्ये लक्षणे विषं भुङ्क्ष्वेति वाक्ये ऽतिव्याप्तिः तस्य द्विषदन्नं न भोक्तव्यमित्येतदर्थविषयकत्वात् नच तत्राऽपि अनिष्टसाधनत्वसंसर्गः पदवृत्त्या स्मारितो बोध्यते इतिवाच्यं अनिष्टत्वस्य भोजने ऽनुमानादिना

गम्यत्वे तत्संसर्गस्य तत्र शाब्दत्वाभावात् नच प्रतिपिपादयिषितपदार्थसंसर्गाप्रमापकत्वं विवक्षितमितिवाच्यं चन्द्रब्रह्मादिशब्दार्थानां स्वरूपतो ज्ञाततया ऽप्रतिपिपादयिषितत्वेन संसर्गप्रतियोगित्वेनैव प्रतिपिपादयिषितत्वेन तत्रासम्भवात् द्वितीये लक्षणे ऽपि शीतोष्णस्पर्शवन्तौ पयःपावकावित्याद्यनेकप्रातिपदिकार्थमात्रपरे सेनावनादि * प्रश्नोत्तरे चातिव्याप्तिः नहि धर्मधर्मिभावासहमखण्डार्थत्वं धर्मिभेदसहं नच शीतस्पर्शवत्य आप उष्णस्पर्शवान्पावक इतिसाक्षात्प्रत्येकवाक्यद्वयद्वारा ऽखण्डविषयकबोधद्वयमात्रे तात्पर्यान्न दोष इतिवाच्यं चन्द्रे कलङ्कः सुजने दरिद्रता विकाशलक्ष्मीकुमुदेषु चञ्चला मुखाप्रसादः सधनेषु नित्यशो यशो विधातुः कथयन्ति खण्डितमित्येकस्मृत्युपारूढानां चन्द्रकलङ्कादीनां बहुत्वान्वयवदिहाप्यन्वयोपपत्तेः यशोविधातुः कथयन्ति खण्डितमित्यादाविवैकवाक्यतायां बाधकाभावात् सेनादिप्रश्नोत्तरे ऽतिव्याप्तेरनुद्धाराच्च किञ्च प्रवृत्तिनिमित्तानां भानेऽखण्डार्थत्वहानिः अभाने च

* एकदेशस्था वृक्षा एव वनम् ।

पर्यायत्वमेव नच प्रवृत्तिनिमित्तभेदमङ्गीकृत्यैव सत्यादिपदानां लक्षणाया ऽखण्डशुद्धपरत्वं लाक्षणिकबोधे ऽधिकभाने वाक्यस्याखण्डार्थकत्वहानिरभाने च लक्षणावैयर्थ्यात् नहि शाक्तबोधानधिकविषयकबोधार्थे लक्षणासार्थक्यमिति सङ्क्षेपः अखण्डलक्षणाभावात्तदसिद्धिरित्यर्थः अथ तत्र प्रमाणाभावश्च प्रमाणमात्रस्य सावशेषप्रमाजनने एव पर्यवसानात् ननु सत्यादिवाक्यमखण्डार्थनिष्ठं ब्रह्मप्रातिपदिकार्थनिष्ठं वा लक्षणावाक्यत्वात् तन्मात्रप्रश्नोत्तरत्वाद्वा प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदितिपदार्थविषयकाखण्डार्थत्वानुमानस्य "तत्वमस्या"दिवाक्यमखण्डार्थनिष्ठं आत्मस्वरूपमात्रनिष्ठं वा अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात् तन्मात्रप्रश्नोत्तरत्वाद्वा सो ऽयं देवदत्त इत्यादि वाक्यवदिति वाक्यार्थविषयकाखण्डार्थत्वानुमानस्य च सत्वात्कथमप्रामाण्यमिति चेन्न प्रकृष्टादिवाक्यस्य सखण्डार्थपरत्वेन दृष्टान्तासिद्धेः तत्राऽपि दृष्टान्तान्तरान्वेषणीयत्वे ऽनवस्थाप्रसङ्गात् प्रत्यक्षं निर्विकल्पकज्ञानहेतुरितिमते ऽस्याप्रामाणिकत्वेन प्रमाण-

मात्रस्य सविशेषधीजनकत्वनियमेन साङ्ख्याप्रसि-
द्धेश्च नच प्रमात्वं संसर्गागोचरवृत्तिसकलप्रमावृत्ति-
त्वात् अभिधेयत्ववदिति सामान्यतस्तत्सिद्धेरिति-
वाच्यं प्रमात्वं संसर्गागोचरवृत्तिप्रमा न भवति ज्ञान-
त्वव्याप्यधर्मत्वात् अनुमितित्वादिवदिति सत्प्रति-
पक्षत्वात् मृषासत्यत्वादेरन्यत्र सम्भवेन तात्वि-
कस्य ब्रह्मण्यप्यभावेन लक्षणासम्भवाच्च सत्यादि-
स्वरूपं तु न लक्षणं नहि घटो घटस्य लक्षणं किन्तु
तद्गतासाधारणधर्मः सर्ववादिसम्मतत्वात् नचैवं
स्वरूपतटस्थलक्षणयोर्विभागो नस्यादितिवाच्यं
यावद्रूव्यभावित्वाभावित्वयोस्तद्भेदनियामकत्वात् ।
नच पार्थिवरूपादौ स्वरूपलक्षणे ऽव्याप्तिः रूपत्वाद्य-
वच्छिन्नस्य यावद्द्रव्यभावित्वेनोक्तदोषायोगात् नच
द्वारत्वेन लक्षणे तात्पर्यमिति वाच्यं द्वारेणाखण्डार्थ-
विरोधिस्वरूपस्य प्रागेव ज्ञातत्वेन तन्मात्रज्ञाने द्वारा-
ऽनपेक्षणात् नच संशयविरोधिस्वरूपज्ञाने द्वारापेक्षा
न सर्वत्रेतिवाच्यं भ्रमसंशयो ऽनधिकविषयकस्वरूप-
ज्ञानस्य संशयाद्यविरोधित्वात् प्रकृष्टप्रकाशश्चन्द्र
इत्यादौ व्यभिचाराच्च संशयबुभुत्साद्यन्यथा ऽनुप-
पत्त्या धर्मिणः प्रागेव ज्ञातत्वेन धर्मस्यैव प्रष्टव्यत्वात्

नच प्रकर्षोपलक्षितप्रकाशव्यक्तिस्वरूपमात्रपरत्वा-
दखण्डार्थकं तद्वाक्यं उपलक्षणरूपप्रकारस्य भाने
हि सखण्डार्थतैव अभाने च वाक्यवैयर्थ्यं किञ्च
धर्मिज्ञानाधीनसप्रकारकसंशयादिनिवर्त्तकं मोक्षहेतुं
सप्रकारकं ज्ञानं प्रतिसाधनत्वेन वेदान्तविचार-
विधानान्यथानुपपत्त्या वेदान्तवाक्ये साध्याभाव-
निश्चयाद्बाधः नचाज्ञानसमविषयकज्ञानमेव संशया-
दिनिवर्त्तकं न सप्रकारकं गौरवादितिवाच्यं अज्ञान-
विषयचिन्मात्रविषयकज्ञानस्य संशयादेः प्रागेव
सत्त्वेन तस्य तदविरोधित्वात् भ्रमादिकालागृही-
तस्य भ्रमादिविरोधिज्ञानविषयस्य धर्मस्यैवाज्ञान-
विषयत्वं नतु स्वरूपस्य स्वरूपाज्ञाने संशयाद्यनुप-
पत्तेः नच ब्रह्माकारधीरेव तदज्ञानविरोधिनी द्रव्या-
द्याकारज्ञानात् घटाद्याकाराज्ञाननिवृत्त्यापत्तेः नच
द्रव्याद्याकारज्ञानस्य घटाद्याकारत्वमनुभवविरुद्धं
ज्ञानगताकाराङ्गीकारे साकारवादापत्तेः नचाज्ञान-
तत्कार्यान्यतराविषयकं ज्ञानमज्ञाननिवर्त्तकं रूप्य-
हेत्वज्ञानतत्कार्यान्यतराविषयकेदंशुक्तिमिति ज्ञान-
स्याऽपि रूप्यनिवर्त्तकत्वापत्तेः तस्याऽपि रूप्यहेत्व-
ज्ञानतत्कार्यरूप्यान्यतराविषयकत्वात् अदण्डनि

दण्डीतिभ्रमस्य पुरुषो ऽयमिति ज्ञानेन निवृत्त्या-पत्तेश्च सत्यादिवाक्यतात्पर्यविषयः संसृष्टरूपः संसर्गरूपो वा प्रमाणवाक्यतात्पर्यविषयत्वात्सम्मत-वत् सत्यादिवाक्यं स्वतात्पर्यविषयज्ञानाबाध्यसं-सर्गपरं स्वतात्पर्यविषयज्ञानाबाध्यस्वकरणकप्रमा-विषयपदार्थनिरूप्यसंसर्गपरं वा प्रमाणवाक्यत्वात् अग्निहोत्रादिवाक्यवत् विषं भुङ्क्ष्वेत्यादौ वाक्यार्थ-संसर्गपरत्वाभावे ऽपि स्वकरणकप्रमाविषयपदार्थ-संसर्गपरत्वान्न व्यभिचारः खं छिद्रं कोकिलः पिक इत्यादावभिन्नार्थकत्वे सामानाधिकरण्यायोगेन छिद्रकोकिलादीनां पिकादिपदवाच्यत्वसंसर्गपर-त्वान्न व्यभिचारः नचाप्रयोजकं हेतूच्छित्तेरेव विपक्षे बाधकत्वात् नचाद्यानुमाने संसृष्टरूप इतिसाध्ये संसर्गे संसर्गरूप इतिसाध्येच संसृष्टरूपे पदार्थे व्यभिचारः उभयोरपि प्रमाणवाक्यतात्पर्यविषय-त्वादिति वाच्यं पक्षसमे व्यभिचारस्य दोषत्वात् अन्यतरत्वावच्छिन्नसाध्यत्वे दोषत्वाच्च नचालक्षण-वाक्यत्वं द्वितीये उपाधिः अलक्षणवाक्यस्य लक्षणवाक्यभिन्नत्वरूपत्वं पक्षेतरत्वात् लक्षण-वाक्यभिन्नवाक्यत्वरूपत्वे हि वाक्यत्वस्यैव साध्य-

व्यापकत्वेन दोषवैयर्थ्यात् लक्षणावाक्यस्यैव पक्ष-
त्वेन तदितरत्वात् वेदान्तजन्या प्रमा सप्रकारिका
विचारजन्यज्ञानत्वात् संशयादिनिवर्त्तकत्वाच्च कर्म-
काण्डजन्यज्ञानवत् वेदान्तजन्या प्रमा ब्रह्म-
प्रकारविषया ब्रह्मधर्मिकसंशयादिविरोधित्वात्
ब्रह्मविचारजन्यज्ञानत्वाद्वा कर्मकाण्डविचारजन्य-
ज्ञानवत् नच त्वन्मते ज्ञानमात्रस्यसप्रकारत्वेन
विचारजन्यत्वसंशयविरोधित्वयोर्वैयर्थ्यमिति वाच्यं
निर्विकल्पकप्रत्यक्षाङ्गीकारमते ऽतिव्याप्तिवारक-
त्वात् मतान्तरे तद्रहितस्यैव हेतुत्वात् नच लक्षणा-
वाक्यजन्यत्वमुपाधिः आद्ये सप्रकारकप्रत्यक्षानु-
मित्यादौ द्वितीये ब्रह्मनिष्ठप्रकारविषयकस्वप्रकाश-
त्वाद्यनुमितीश्वरप्रत्यक्षादौ साध्याव्यापकत्वात् नच
लक्षणावाक्यभिन्नजन्यत्वमुपाधिः ईशज्ञाने साध्या-
व्यापकत्वात् जन्यत्वस्यैव साध्यव्यापकत्वसम्भवेन
विशेषणवैयर्थ्यात् विशेष्यभानस्य साधनव्याप-
कत्वाच्च किञ्च दृष्टान्तः साध्यविकलः प्रकृष्टप्रकाश-
शब्देन शक्त्या ऽखण्डार्थाबोधनात् लक्षणायाश्चा-
न्वयानुपपत्त्यादिवीजाभावात् नच लक्षणयैवा-
खण्डचन्द्रत्वबोधः यष्टीः प्रवेशयेत्यादाविव लक्षणा-

वीजतात्पर्यानुपपत्तेः सत्वात् चन्द्रव्यक्तेः संशया-द्यनुपपत्त्या प्रागेव ज्ञातत्वेन तत्रतात्पर्यासम्भवात् चन्द्रस्वरूपाज्ञाने धर्मिधीसाध्यवुभुत्सासंदेहयोश्चन्द्र इत्यनूद्य क इतिप्रश्नस्य चन्द्रशब्दस्यार्थवत्त्वज्ञाने-नाप्रातिपदिकतया तदुत्तरसुब्विभक्तेश्चायोगात् नच चन्द्रस्वरूपज्ञाने ऽपि विपर्ययविरोधिज्ञानानुदय-समये तदुदयार्थं प्रश्नो युज्यते ज्ञानविशेष एव विरोधी शङ्खः श्वेतो न पीत इत्यादिपरोक्षज्ञाने भासते यादृशं श्वैत्यस्वरूपं पीताभावो वा तादृश-मेवापरोक्षधीविषयदशायां विपर्ययविरोधीति विप-र्ययविरोधिधीकालीनमेवासङ्कीर्णं स्वरूपं तज्ज्ञान-मेवविपर्ययविरोधीति वाच्यं अपरोक्षविपर्ययं प्रत्य-परोक्षत्वेनैव हि निवर्त्तकत्वं शङ्खश्वेतानुमितौ सत्या-मपि निवृत्तिस्तु न दृष्टा नवा युक्ता अतश्च व्यावृत्ते-र्व्यावर्त्तकस्य वा वैशिष्ट्यमेव पृष्टं तदेव चोत्तरितं नच यश्चन्द्रस्तत्र चन्द्रत्वं तमो नक्षत्रादिव्यावृत्ति-श्चास्तीति मया ज्ञायते स्वरूपन्तु न ज्ञायते इत्यनु-भवेन व्यावर्त्तकव्यावृत्तिविशिष्टस्याजिज्ञासितत्वेन जिज्ञासितं चन्द्रस्वरूपमेव विपर्ययविरोधिज्ञान-विशेषं जनयता प्रकृष्टादिवाक्येन वोध्यतेऽइति-

वाच्यं सामान्यतो व्यावृत्त्यादिज्ञाने ऽपि पुरोवर्त्य-
परोक्षचन्द्रव्यक्तिनिष्ठतया चन्द्रो नक्षत्रादिव्यावृत्त
इतिविशेषतो ज्ञानाभावात् नच चक्षुःसन्निकर्षादि-
सत्त्वाच्चन्द्रत्वादिकमपि किं न ज्ञायत इतिवाच्यं
पद्मरागत्वादेरिव कासाञ्चिज्जातीनामुपदेशसह-
कृतेन्द्रियवेद्यत्वेन व्यक्तिप्रत्यक्षे ऽपि चन्द्रत्वस्या-
प्रत्यक्षत्वोपपत्तेः एतेन चन्द्रव्यावृत्तिर्बोध्यते व्यक्ति-
विशेषो वा नाऽऽद्यः या शुक्तिः सा रजतादि-
भिन्नेति व्यावृत्तिज्ञाने ऽपि शुक्तिस्वरूपाज्ञान-
तत्कार्यविपर्ययादिदर्शनवत् यश्चन्द्रः स नक्षत्रादि-
विलक्षण इतिज्ञाते ऽपि चन्द्रस्वरूपाज्ञानतत्कार्य-
विपर्ययादिदर्शनात् नान्त्यः आवश्यकत्वात् व्यक्ते-
रेव बोध्यत्वेन व्यावृत्तिबोधवैयर्थ्यादिति निरस्तं
संशयज्ञाने ऽपि प्रश्नाद्यनुपपत्त्या व्यक्तेः प्रागेव
ज्ञातत्वात् शृङ्गग्राहकतया व्यावृत्तेर्व्यावर्त्तकस्य वा
व्यक्तिनिष्ठतया बोधनीयत्वात् अन्यथा कश्चन्द्र
इतिप्रश्नस्य चन्द्र इत्येवोत्तरं स्यात् नतु प्रकृष्ट-
प्रकाशइत्यादिकं नच स्वरूपमात्रस्य ज्ञेयत्वेऽपि
स्वरूपज्ञानस्य तावत्पदार्थज्ञानाधीनत्वे सत्येव
तावत्पदार्थेतरव्यावृत्तिफलत्वेन सर्वपदानां सार्थ-

क्यमिति वाच्यं तावत्पदैर्धर्मिणि तावद्व्यावर्त्तक-
धर्मवैशिष्ट्यावोधे तावत्पदार्थेतरव्यावृत्तेरसम्भवात्
व्यावृत्तेः शाब्दबोधाभावे फलवत्त्वासम्भवात्
पदार्थान्तरवैयर्थ्यानुद्धाराच्च किञ्चोत्तरस्य प्रकृष्टत्वा-
दिविशिष्टबोधपरत्वाभावे तात्पर्यतो यः कश्चि-
च्चन्द्र इत्येव बोधनात् वस्तुतो यः कश्चिच्चन्द्रः
स्यात्तात्पर्यविषये चायं चन्द्र इतिलक्षणलक्ष्यरूपो-
द्देश्यविधेयविभागाभावेन चन्द्रबुभुत्साया अनिवृत्तेः
कश्चन्द्र इतिप्रश्नस्योत्तरं न स्यात् शाक्तबोधगृही-
ताधिक्यस्य लाक्षणिकबोधाभावे लक्षणावैयर्थ्याच्च
एकपदलक्षणयैव व्यक्तिधीसम्भवे ऽनेकपदलक्षणा-
वैयर्थ्याच्च किञ्च स्वरूपस्य प्रागेव ज्ञातस्य बुभुत्साद्य-
सम्भवेनोत्तरे धर्मवाचकपदानुरोधेनच प्रश्ने धर्म-
बोधकपदमध्याहार्यं तत्सूचककिंशब्दस्य सत्त्वात्
किञ्च ब्रह्मपदस्य यौगिकत्वेन ब्रह्मप्रातिपदिकार्थ-
मात्रनिष्ठत्वे ऽपि नाखण्डार्थकत्वसिद्धिः तस्य सवि-
शेषसद्गुणाश्रयवस्तुवाचकत्वश्रवणात् अथ कस्मा-
दुच्यते ब्रह्मेति "बृहन्तोऽस्मिन् गुणा" इति श्रुतेः
"महद्गुणं त्वाद्यमनन्तमाहु"रितिस्मृतेश्च ना ऽपि
तस्य विशेष्यमात्रे तात्पर्यम् आत्मस्वरूपज्ञानस्य

सदैव सत्त्वात् अन्यथा जगदान्ध्यापत्तेः किञ्च सर्वस्योत्तरस्य प्रश्ननिर्धारितधर्मिनिष्ठानिर्धारितैकधर्मपरत्वाद्विरुद्धश्च हेतुः धर्मिनिर्धारणे संशयाद्यभावेन धर्मस्यैव निर्धारणीयत्वात् प्रश्नानधिकविषयकस्यानुत्तरत्वाच्च अन्यथा प्रश्नस्यैवोत्तरत्वं स्यात् ननु ब्रह्मादिपदानां सविशेषपरत्वे ऽपि प्रातिपदिकार्थविशेष्यमात्रपरत्वे एव तात्पर्यमवगम्यते अन्यथा निर्विशेषज्ञानाभावे मोक्षलक्षणफलासम्भवादिति चेन्न सप्रकारकज्ञानस्यैव मोक्षासाधारणहेतुत्वश्रवणात् "ब्रह्मविदाप्नोति परं ॥ यदा पश्यः पश्यते रुक्मवर्णं" इत्यारभ्य परमं साम्यमुपैती"त्यादिश्रुतेः "भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरं सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छती"तिस्मृतेश्च किञ्चैवं कर्मकाण्डमखण्डकर्मपरं वैद्यादिशास्त्रं चाखण्डौषधादिपरं स्यात् नच तत्रविशिष्टकर्मादिपरत्वे बोधकाभाव इतिवाच्यं प्रकृतेऽपि साम्यात् न"न्वेकधैवानुद्रष्टव्य" मित्यनेकप्रकारनिषेधकं "उदरमन्तरं कुरुते" इत्यादिभेदनिषेधकं केवलोनिर्गुणश्चेति गुणनिषेधकं "एकमेवाद्वितीय"मितिद्वितीयमात्रनिषेधकं सर्वतो

ऽनवच्छिन्नवस्तुपरावनन्तब्रह्मशब्दौ च बाधकमिति चेन्न तेषामप्यैक्यद्वितीयाभावादिविशेषसंसृष्टपरत्वेन वेदान्तस्याखण्डार्थकत्वासिद्धेः विशेष्यमात्रपरस्य विशिष्टपरेणाविरोधाच्च नच द्वारतयोपस्थितमैक्यद्वितीयाभावादिकं विरोधित्वात् सत्यत्वे तत एवाद्वैतहानिः नन्वाभिन्नमैक्यादिकमिति नाद्वैतहानिः स्वाभिन्नस्वरूपज्ञाने द्वारत्वायोगात् नच स्वरूपस्यैव कल्पितधर्मत्वं तज्ज्ञानस्य तात्त्विकभेदाद्यविरोधित्वात् अपि चैक्यादिवाक्यं यदि संसृष्टार्थकं न स्यात्तर्हि वाक्यमेव न स्यात् आकाङ्क्षायोग्यतासन्निधिमत्त्वाभावात् येन विना यस्य स्वार्थान्वयाननुभावकत्वं तस्य तेन सहाकाङ्क्षा एकादिपदार्थसंसर्गअपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वं हि योग्यता अव्यवधानेनान्वयप्रतियोग्युपस्थितिः सन्निधिः एतत्त्रयं शाब्दबोधस्य संसर्गाविषयत्वे हि न सम्भवति ननु येन विना यस्य तात्पर्याननुभावकत्वं तस्य तेन सहाकाङ्क्षातात्पर्यविषयश्च क्वचित्संसृष्टः क्वचिदखण्डः अव्यवधानेन शाब्दबोधानुकूलार्थोपस्थितिमात्रमासत्तिः तात्पर्यविषयाबाध एव योग्यता अन्वयांशस्य

सर्वत्र वैयर्थ्यादिति चेन्न पदार्थानां प्रागेव ज्ञातत्वेन संसर्ग एव वाक्यतात्पर्यसम्भवेनाखण्डे आकाङ्क्षाद्यसम्भवात् नहि प्रत्येकपदैर्निश्चिते एवार्थे वाक्यतात्पर्यसम्भव इत्यर्थः किञ्च प्रथमाध्यायतृतीयपादीयाधिकरणानारम्भ एव स्यात् विषयादिपञ्चकाभावात् विशिष्याज्ञातो हि विषयः साधारणधर्मधीजन्यश्च संशयः मिथ्यासत्यैकप्रकारालम्बिनौ च पूर्वपक्षसिद्धान्तौ एकप्रकारेण निर्धारणाधीनं च प्रयोजनं तच्च पञ्चकं त्वन्मते तत्पदप्रतिपाद्ये निर्विशेषे न सम्भवति एतेन व्यावृत्ताकारेणाज्ञातं ब्रह्मविषयः अद्वैताद्युपलक्षिताखण्डार्थज्ञानं च निर्धारणं तदधीनप्रयोजनं मुक्तिः कल्पितप्रकारालम्बिनौ पूर्वपक्षसिद्धान्तौ संशयोऽपि कल्पितसमानधर्मधीजन्य एवेति नानुपपत्तिरितिनिरस्तं निर्विशेषेऽव्यावृत्ताकारस्यालीकत्वात् स्वरूपनिर्धारणस्य सदैवसत्त्वात् कल्पितप्रकारालम्बिसिद्धान्तस्याप्रामाणिकत्वापत्तेः "ब्रह्मविदाप्नोति पर" मित्यनेनैव स्वरूपस्य ज्ञातत्वसिद्धौ सत्यादिवाक्यवैयर्थ्यात् नचासाधारणं स्वरूपमज्ञातमेव स्वरूपे द्वैविध्याभावात् किञ्च स्वरूपेण ज्ञातस्य

विधेयस्योद्देश्यसंसृष्टतयैव वोध्यत्वं तच्चाखराडे युक्तं किञ्च शुद्धादन्यत्र सत्यत्वाद्यसम्भवात् सत्यादिवाक्यस्य लक्षणाया ऽखराडार्थत्वे शुद्धे सत्यत्वादेरभानात् पर्य्यायतादुर्वारा नहि विशिष्टेमृषाभूतेपरिच्छिन्ने सत्यत्वानन्तत्वादिकं घटते येन वाच्यार्थं विशिष्टमादाय पर्यायत्वनिरासः स्यात् नचासदादिव्यवृत्तिवोधेन सार्थक्यं व्यावर्त्तकस्य सत्यत्वादेस्तात्पर्यतो ऽर्पणं विना व्यावृत्त्यसिद्धेः नच स्वरूपेणैव व्यावृत्तिः आत्मनस्त्वन्मते ऽव्यावृत्तत्वात् अन्यथा ब्रह्मत्वापत्तेः तथोक्तं सुरेश्वरवार्त्तिके "अव्यावृत्ताननुगतं वस्तु ब्रह्म समश्नुते एतच्च दुर्लभं तस्य द्वितीये सति लक्षणा" मितिव्यावृत्तिभेदेनाखराडार्थत्वहानेश्च किञ्च सत्यज्ञानादिपदलक्ष्यस्य गङ्गादिपदलक्ष्यस्य तीरस्यागङ्गात्ववत् असत्यत्वजडत्वपरिछिन्नत्वाद्यापत्तिर्दुर्वारा नच जहल्लक्षणानङ्गीकारान्नोक्तदोषावकाशः यदि तीरादौ नदीत्ववत् ब्रह्मण्यप्यभिधावलात् सत्यत्वादिकं न प्रतीयेत तदैवं स्यान्नतु तदस्तीति वाच्यं काकेभ्यो दधि रक्षतामित्यत्र पदार्थैकदेशकाकत्वत्यागाद्व्यक्तेरत्यागाद्विभवति जहदजहल्लक्षणा तत्र दध्युपघातकत्वेना-

काकस्य मार्जारादेरिवांशे ऽसत्त्वादिबोध आवश्यको ऽन्यथा लक्षणावैयर्थ्यात् किञ्चासत्यादिव्यावृत्तीनां सत्यत्वे ब्रह्माभिन्नत्वे च ब्रह्मपदेन तल्लाभात् शेष-वैयर्थ्यं तद्भिन्नत्वे चाद्वैतहानिः तासां मिथ्यात्वे शुक्तेः शुक्तितो व्यावृत्तेर्मिथ्यात्वे शुक्तित्वस्य शुक्तिस्वप्न-सत्ताकत्ववदनृतव्यावृत्तिर्ब्रह्मणि मिथ्यात्वे ऽनृतस्य-ब्रह्मसमसत्ताकत्वं स्यात् किञ्चासद्व्यावृत्तिद्वारा यद्बोधितं तदेव ज्ञानादिपदैरज्ञानादिव्यावृत्तिद्वारा बोध्यते चेत्पदान्तरवैयर्थ्यं नच तावत्पदैर्विना त्रितयव्यावृत्तं ब्रह्म न सिद्ध्यते इतिवाच्यं व्यावृत्तीनां प्रकारतया भाने वस्तुगत्या त्रितयव्यावृत्तब्रह्म-बोधस्यैकपदेनैव सम्भवात् ननु सत्यादिवाक्ये-लक्षणाङ्गीकारान्न पदवैयर्थ्यशङ्कावकाश इतिचेन्न प्रत्येकपदोपस्थिते स्वरूपमात्रे लक्षणावैयर्थ्यात् अधिकसंसर्गादिभाने ऽखण्डार्थकत्वहानिः वाक्य-लक्षणायाः क्वाप्यसत्त्वाच्च नच गम्भीरायां नद्यां घोष इत्यादौ विनिगमनाविरहात्पदलक्षणासम्भ-वात् वाक्यलक्षणाचरमोपस्थितनदीपदस्यैव लाक्षणिकत्वात् गम्भीरपदस्य तात्पर्यग्राहकत्वात् अर्थवादे ऽप्येकपदे लक्षणा पदान्तराणि तात्पर्य-

ग्राहकाणि विषं भुङ्क्ष्वेत्यादेः(१)गच्छ गच्छसि(२) चेत्कान्तेत्यादेश्च शब्दविधया(३)प्रामाण्याङ्गीकारे गौरवात् किञ्च शाब्दत्वावच्छिन्नं प्रति शक्तपदज्ञातत्वेन शक्तिज्ञानत्वेनैव हेतुत्वं नतु वृत्तिमत्पदज्ञातत्वेन गौरवात् अतः सर्वपदलाक्षणिकत्वे ऽन्वयानुभवो न स्यात् लाक्षणिकपदैरन्वयप्रतियोग्युपस्थितौ कृतायां यदवशिष्टं शक्तं पदं तदेवान्वयानुभावकं अर्थवादपदानां लाक्षणिकत्वेऽपि तदेकवाक्यतापन्नं विधिपदमेवानुभावकं "विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु"रिति न्यायात् तथाच सत्यादिपदानां लाक्षणिकत्वे ऽन्वयानुभवानुपपत्तिरेव नच लक्षणायैकदेशत्यागेऽपि शक्यस्यैवानुभवो ऽङ्गीक्रियते शक्यमात्रस्यैव बाधे लक्षणावैयर्थ्यात् किञ्च शक्यैकदेशत्वाङ्गीकारे

---

(१) विषभोजनस्येष्टसाधनत्वोक्त्या शत्रुगृहान्नभोजनस्यानिष्टसाधनत्वमाक्षिप्यते यद्वा आप्तप्रमाणविरुद्धोपदेष्टृत्वेन कोपोऽनुमीयते कोपेच तत्र प्रसक्तशत्रुगृहान्नभोजनस्यहेतुत्वम् कल्पयित्वा तत्र कर्त्तव्य तानुमानन्तल्लक्षणा जन्मनामरणाऽनुमानन्तेनचतत्साधनीभूतायागेतरकर्त्तव्यता ऽनुमानम्प्रत्यनुमानपरम्परैवलक्षणाअनन्यलभ्यस्यैवशब्दार्थत्वात् ।

(२) गच्छगच्छसिचेत्कान्तपन्थानस्सन्तुते शिवाः ममापिजन्मतत्रैवभूयाद्यत्रगतोभवान् ।

(३ वाक्यलक्षणाया ।

बाध्यत्वमप्याकामस्याऽपि तत्रावश्यं प्राप्तं तथाच मिथ्यात्वस्याप्यवश्यम्भावात् सत्यादिवाक्यलक्ष्यो मिथ्या वाच्यैकदेशत्वात् तव मते घटत्वादिवत् द्वितीयवाच्यैकदेशत्वेत्यनुमानादित्यलं विस्तरेण एवमेव तत्त्वमस्यादिवाक्यस्याऽप्यखण्डार्थपरत्व-निरासो बोध्यः धर्मिमात्रस्यावान्तरेण पदेन प्रत्य-क्षेण च सिद्ध्याद्युपदेशवैयर्थ्यात् ननु सार्वज्ञ्यासार्व-ज्ञ्यादि विशेषधर्माश्रययोरैक्योपदेशस्यायोग्यता-पराहतत्वात् विरुद्धाकारस्याविवक्षया ब्रह्मानुभवा-विषयत्वरूपस्त्यागो नत्वपायः तस्य चरमसाक्षा-त्कारसाध्यत्वात् तथाच तत्तेदन्ते इवानपगते अपि सार्वज्ञ्येनाश्रयाभेदविरुद्धे इति चेन्न तत्तेदन्तयोः कालभेदेनैकत्रैव सम्बन्धसम्भवेन दृष्टान्तासिद्धेः नहि तत्तेदन्ते एकत्रैककालावच्छेदेन प्रतीयेते येन विरोधः स्यात् नच सार्वज्ञ्यासार्वज्ञ्यादिकं कालभेदेनैकत्र वर्त्तते येन सोऽयं देवदत्त इति-दृष्टान्तः स्यात् तत्तेदन्तयोः प्रत्यभिज्ञायामभाने तात्कालिकैतत्कालिकपिण्डभेदासिद्ध्यापत्त्या पिण्ड-स्य क्षणिकत्वापत्तेः एतेन तद्देशकालविशिष्टे एतद्देशकालवैशिष्ट्यं एतद्देशकालविशिष्टे तद्देश-

कालवैशिष्ट्यं वा विशिष्टयोरैक्यं वा सोऽयमिति-
वाक्येन प्रतिपाद्यते नाऽद्यः तत्कालादेरिदानीं-
सत्त्वापत्तेश्च नद्वितीयः एतत्कालादेस्तदानीं सत्त्वा-
पत्तेः नाऽपि तृतीयः बाधात् इतिनिरस्तं पक्षत्रये
ऽपि दोषासंस्पर्शात् पदे ऽन्विततया ज्ञाते एवे
तरान्वयधीः स्यात्तस्य तत्र विशेषणत्वं इदन्ता-
न्विततया ज्ञाते एव पिण्डे तत्तान्वयधीस्तत्ता-
न्विततया ज्ञाते एवेदन्तान्वयधीः सोऽयमित्येक-
स्मिन्पिण्डे भवतीति तत्तादिकस्य विशेषणत्वम्
अत एव धीकले विद्यमानस्यापि धर्मान्तरमुत्थाप्य-
व्यावर्त्तकस्य काकवद्गृहमित्यत्र न विशेषणत्वं
दण्ड्ययमासीदित्यत्र दण्डस्य विशेषणत्वं काको-
त्थापितोत्तृणत्वान्विततया च ज्ञाते गृहे देवदत्तीय-
त्वान्वयधीर्नतु काकान्विततया किञ्च सोऽयमिति
प्रत्यभिज्ञानाखण्डविषया तत्र प्रत्यक्षे शब्दवृत्ते-
र्लक्षणाया असम्भवात् तत्तेदन्तोल्लिखितत्वेन
तत्र निःप्रकारकत्वस्यानुभवपराहतत्वात् तदनुल्लेखे
त्वभिज्ञातो वैलक्षण्यानुपपत्तेः शाब्दप्रत्यभिज्ञा
ऽपि नाखण्डार्था स्वप्रत्यभिज्ञानगतस्यैव परं प्रति
बोधनात् नच प्रत्यक्षस्य लक्षणानपेक्षत्वे ऽपि

बाधादेव स्वरूपाभेदमात्रविषयकत्वमितिवाच्यं विद्यमानतयेदन्तायाः अतीतायास्तत्ताया अवगाहिनः प्रत्यक्षस्य विरोधलेशाभावात् किञ्च स्वप्रकाशस्वरूपाभिन्नाभेदस्य नित्यासिद्धत्वेनोपदेशवैयर्थ्यात् तदस्फुरणे बुभुत्सानुपपत्तेः भ्रमकालज्ञातानधिकबोधकान्महावाक्याद्भेदभ्रमानिवृत्त्यसम्भवात् ननु तदादिपदद्वयजन्यसार्वज्ञ्याद्युपलक्षितस्वरूपमज्ञाननिवर्त्तकमिति चेन्न स्वरूपभिन्नसार्वज्ञ्यादेरुपलक्षणतया भाने श्रुतेरखण्डार्थत्वहानेः अभाने भ्रमनिवर्त्तकत्वासम्भवात् यदप्युक्तं तत्त्वमसीति वाक्यस्य सत्यादिवाक्यात् तत्पदाच्च प्रमेयावैलक्षण्येऽपि धर्मिद्वयपरामर्शित्वेन भेदभ्रमनिवर्त्तकत्वात्प्रामाण्यमिति तन्न युक्तं प्रमेयावैलक्षण्येऽज्ञातज्ञापकत्वरूपप्रामाण्यासम्भवात् धर्मिद्वयावगाहित्वे प्रमेयावैलक्षण्यस्य श्रुतेरखण्डार्थकत्वस्य चासिद्ध्यापत्तेः किञ्च श्रुत्या प्रत्यक्षसिद्धजीवमनूद्य ब्रह्मत्वं बोध्यं श्रुतिसिद्धब्रह्मानूद्य तस्य जीवत्वं वा उभयानुवादेनाभेदो वा विधेयः उपजीव्यप्रत्यक्षादिविरोधात्पक्षत्रयस्यासम्भवात् नच प्रतियोग्यनर्थकतयोपजीव्यमिदं रूप्यमिति नेदं

रूप्यमित्यस्य बाधकं स्यादिति वाच्यं यत्प्रामाण्यं यत्प्रामण्याधीनं तद्धि तस्योपजीव्यं नहि नेदं रजतमित्यस्य प्रामाण्यमिदं रूप्यमिति प्रामाण्या-धीनं ब्रह्मादिरूपधर्मिज्ञानं प्रामाण्यमिति भवति तदुपजीव्यं ननु सार्वज्ञ्यादिविशिष्टं न तद्धर्मिकं किन्तु ब्रह्मस्वरूपमात्रं विशिष्टधर्मिज्ञानप्रामाण्य-मैक्यं ज्ञानप्रामाण्येनापेक्षते किन्तु स्वरूपज्ञान-प्रामाण्यमात्रं अन्यथेदं रजतमित्यस्याऽपि धर्मि-ज्ञानत्वेनोपजीव्यतया निषेधज्ञानप्रामाण्ये रूप्यत्व-विशिष्टे इदं ज्ञानप्रामाण्यमुपजीव्यं स्यादिति चेन्न इदन्त्वविशिष्टस्यैव धर्मित्वेन रजतवैशिष्ट्यस्य धर्मित्वाप्रयोजकत्वात् किञ्चासाधारणसार्वज्ञ्यादि-धर्मावच्छेदेन ब्रह्मणो ऽनुद्देश्यत्वे साधारणधर्मेण स्वरूपेण वा उद्देश्यता वाच्या तत्राद्ये इष्टापत्तिः चित्त्वादिसाधारणधर्मेण ह्यैक्यस्यास्माभिरप्यङ्गी-कारात् द्वितीये ब्रह्मैक्यासिद्धेः असाधारणब्रह्म-स्वरूपोद्देश्यस्यासाधारणधर्मं विना ऽसम्भवात् नच सार्वज्ञ्यादिविशिष्टस्योद्देश्यत्वे ऽपि नोपजीव्य-विरोधो विशिष्टयोरैक्यानङ्गीकारात् तत्त्वम्पदलक्षि-तयोरैक्याङ्गीकाराच्चेति वाच्यम् उद्देश्यतावच्छेद-

कसार्वज्ञ्याद्यवच्छेदेन विधेयस्याभेदस्यासिद्धौ वाक्यवैयर्थ्यापत्तेः नच चित्त्वेनैक्यस्येष्टत्वेऽपि तदाश्रयैक्यं त्वदिष्टम् आश्रयाणां सर्वज्ञत्वाज्ञत्वतत्तद्व्यक्तित्वादिना भेदेऽपि चित्त्वेनाभेदेन वाक्यस्योपपत्त्याश्रयाणां तद्व्यक्तित्वादिना भेदाबोधत्वात् नहि प्रमेयं चेत्यत्र सकलव्यक्तिभेदः प्रतीयते लक्षणास्वीकारे मुख्यार्थत्वेन सर्ववेदस्याऽपि मुख्यार्थत्यागापत्तेः महावाक्यान्तःपातित्वादितरवाक्यानामिति यावत् ननु तत्त्वम्पदयोर्नामुख्यार्थत्वं भागलक्षणाया शक्यैकदेशपरित्यागेऽपि विशेष्यांशस्यापरित्यागादिति चेन्न तथा ऽप्यमुख्यार्थस्यापरिहारात् शोणो धावतीत्यत्र सर्वशक्यार्थग्रहणेऽपि मुख्यार्थत्वाभावात् अन्यथा लक्षणावैयर्थ्यात् शक्यार्थत्यागस्योभयत्राविशेषात् नच प्रस्तरादिवाक्यस्यान्यशेषत्वाल्लक्षणा न मुख्यार्थत्वं युक्तम् अनन्यशेषे सोमेन यजेतेत्यादौ वैयधिकरण्येनान्वये उद्देश्यत्वोपादेयत्वानूद्यत्वविधेयत्वप्रधानवोधनत्वरूपाविरुद्धात्रिकद्वयाप्रत्यासामानाधिकरण्यान्वये सोमलतायागयोर्भेदग्राहकप्रत्यक्षाविरोधाय मत्वर्थलक्षणाश्रयणेन मानान्तरविरोधादेव लक्ष-

णाया मुख्यार्थाश्रयणे बीजत्वात् अवाच्ये ब्रह्मणि सर्ववेदस्य तत्र लक्षणाया मुख्यार्थपरत्वावश्य-कत्वात् नन्ववाच्ये ब्रह्मणि वेदस्य लाक्षणिकत्वे ऽपि नामुख्यार्थकत्वं तात्पर्यविषयीभूतार्थकत्वं हि मुख्यार्थकत्वम् नतु शक्यार्थमात्रबोधकत्वं चा-मुख्यार्थकत्वम् नतु लाक्षणिकत्वमात्रमिति चेन्न मञ्चाः क्रोशन्ति गङ्गायां घोष इत्यादौ पुरुषादि-तात्पर्यकमञ्चादिशब्दानां मुख्यार्थकत्वापत्तेः लोक-वेदयोर्मुख्यार्थकत्वामुख्यार्थकत्वनियमस्य भङ्गा-पत्तेश्च तात्पर्यस्यानियतत्वात् गङ्गायां घोष इत्यादौ कदाचिद्गङ्गापदस्य तीरे घोषपदस्य मत्स्यादौ लक्ष-णाया दृष्टत्वात् अतः शक्यार्थबोधकत्वमेव मुख्यार्थकत्वं लाक्षणिकत्वमेवामुख्यार्थकत्वं "न विधौ परः शब्दार्थ"इतिविधौ लक्षणानिषेधो ऽसङ्गतः स्यात् तात्पर्यविषयीभूतार्थबोधनस्य लाक्षणिकत्वेनापि सम्भवेन शक्यार्थस्यामुख्य-त्वायोगात् मुख्ये ऽर्थे शब्दवृत्तेर्जघन्यतायाः कैश्चि-दप्यनङ्गीकारात् अतो भवतो राद्धान्ते वेदस्या-मुख्यार्थकत्वं दुर्वारम् अन्यशेषताप्रतिपादके"स-मिधो यजती"त्यादौ वेदे तण्डुलान्पचेदित्यादौ

लोके वा मुख्यार्थव्यवहाराच्च मानान्तरविरुद्धे द्वैते सदा निर्णीते चाखण्डार्थे चैतन्ये तात्पर्यासम्भवाच्चेति सङ्क्षेपः ॥

इत्यखण्डार्थगिरिनिपातः ॥ ६ ॥

एवं परपक्षं निरस्य स्वपक्षमुपन्यसन्त्यन्ये अथ तत्त्वमसीत्यत्र पदद्वये प्रातिपदिकलक्षणापेक्षया पदैकदेशाविभक्तौ लक्षणा लघीयसी अस्तु वा तच्छब्दात्परत्र तृतीयादिविभक्तेः "सुपांसुलुगि" त्यादिना प्रथमैकवचनादेशो वा लुग्वा तथाच तेन त्वं तिष्ठसि तस्मै त्वं तिष्ठसीति वा ततः सञ्जात इति वा तस्य त्वमिति वा तस्मिन्त्वमिति वा वाक्यार्थः "अनेन जीवेनात्मनाऽनुभूतः ॥ येपीयमानो मोदमानस्तिष्ठति ॥ सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा ऐतदात्म्यमिदं सर्वं" इतिवाक्यशेषात् नच सार्वज्ञ्यादिविशेषणस्य त्यागे ऽपि विशेष्यांशस्यात्यागाद्भागलक्षणा च जहत्स्वार्थविभक्तलक्षणाऽपेक्षया ज्यायसीति वाच्यं भागलक्षणाया हि वाच्यान्तर्गतत्वेन प्रागधीस्थस्य वाधकात्यक्तस्य पुनः स्वीकारः जहल्लक्षणायामधीस्थस्यात्यक्तस्यैव स्वीकारः अतस्त्यक्त-

स्वीकाराद्वरमधीस्थस्वीकारः किञ्च शाक्तबोधा-
विषयीकृतस्याभेदादेर्लाक्षणिकबोधे भानाङ्गीकारे
श्रुतेः सखण्डार्थकत्वापत्तेः तदनङ्गीकारे लक्षणा-
वैयर्थ्यात् यद्वा शब्दो नित्यः शब्दत्वात् घट-
वदित्यत्र यथा दृष्टान्तानुसारादनित्य इतिपद-
च्छेदस्तथा भेदबोधकनवदृष्टान्तानुसारादतत्त्वम-
सीति पदच्छेदः निर्मुक्तत्वपूर्णज्ञानानन्दत्वा-
दिना नञा सादृश्यबोधनात् तथाहि यथा
परिभ्रमणेन श्रान्तः सूत्रबद्धः पक्षीशङ्कुमेवाश्रयति
तथा जागरादौ परिभ्रमणेन श्रान्तो जीवः
सुषुप्त्यै परेशं संश्रयतीत्याह "यथा शकुनिः
सूत्रेण प्रबद्ध" इत्यादिना १ ननु मत्तो ऽन्यश्चे-
त्तनश्चेन्मया ज्ञायेतेत्यत्राह "यथा मधुकरैः सङ्-
गृहीता रसा अयममुष्याह" मितिस्वभेदं न
जानन्ति तथा जीवे विद्यमानो ऽप्यविवेकिभिर्न
स्वभिन्नतया ज्ञायते परेश इति "यथा सोम्य
मधुकृत" इत्यादिना २ ननु रसैरचेतनैर्विद्यमानो
मा ज्ञायि चेतनेन कुतो न ज्ञायेतेत्यत्राह यथा
चेतनाभिरपि नदीभिः समुद्रे मिलिताभिरियं गङ्गा
ऽहं यमुनेतिभेदो न ज्ञायते तथा त्वयि स्थित

ईशस्त्वया न ज्ञायत इति "इमाः सौम्ये"त्यादिना २ ननु भवतु जीवे ईशो जीवस्य तदधीनत्वं कुतस्तत्राह यथा वृक्षस्य विघातिनि विद्यमाने ऽपीशानुग्रहात्सुखमवस्थानं तदभावे विघातकाभावे ऽपि शुष्कता तथा जीवस्य मानुषादिदेहे ऽपीशाधीनत्वमिति "यथा सोम्य महतो वृक्षस्ये" त्यादिना ४ ननु सूक्ष्ममपि स्वस्वरूपं ज्ञायते तथेशो ऽस्ति चेज्ज्ञायेतैवेति तत्राह "यथा वटबीजे महान्वटो यत्सूक्ष्मतया सन्नपि नोपलभ्यते एवं जीवान्तर्गतो हरिर्न दृश्यते इति न्यग्रोधफलमित्यादिना ५ ननु तद्धर्मे गृह्यमाणे ऽपि स न गृह्यते इति कथं जानीयां तत्राह "यथा जले प्रक्षिप्तलवणधर्मे क्षारत्वेन गृह्यमाणे लवणं न गृह्यते तथा वटावस्थानहेतुसामर्थ्ये गृह्यमाणे ऽपि स न गृह्यते इति लवणमुदकेइत्यादिना ६ ननु तर्हीशस्याज्ञेयत्वात्तज्ज्ञानसाधनवैयर्थ्यं तत्राह "यथा चौरैः कश्च पुरुषो बद्धाक्षो देशान्तरे मुक्तः पृष्ट्वा पृष्ट्वा स्वदेशमायाति तथा दुर्ज्ञेयो ऽपीशो गुरूपदेशादिना यथा सोम्यपुरुषमित्यादिना ७ ननु वृक्षदेहे जीवस्येश्वराधीनत्वमुक्तं मानुषदेहे कथं

तज्जानीयात्तत्राह "रोगग्रस्तव्यापारः स्वपार्श्वस्थान् यथा न वेद तथा सुषुप्तौ सन्नो जीवस्तं न वेदेतिपुरुषं सौम्योपतापिन"मित्यादिना ८ ननु-यो मत्तो ऽन्य ईश इति जानाति यश्चाहमेव ब्रह्मेति वेद तयोः कीदृशं तत्राह "यथा कश्चन पुरुषो राजभटैरानीतश्चौरोऽयमिति यदा स चौरस्तदा दण्ड्यो यदि न चौरस्तदा न तथा योऽहं ब्रह्मेति वेद परकीयब्रह्मत्वापहारकत्वाद्दण्ड्यः मद्भिन्नं ब्रह्मेति जानन्न दण्ड्य इति पुरुषमित्यादिना ६ तस्मात्सर्वेषामपि दृष्टान्तानां भेदपरत्वा"त्तत्त्वमसीति वाक्यस्याऽपि भेदपरत्वं युक्तं तस्माद्भेद एव सर्ववेदान्तसमन्वय इतितत्तुच्छमित्याहुरेके तार्किकादिमतप्रवेशात्सर्ववेदान्तविरोधात् "तं सर्वं परादाद्यो ऽन्यत्रात्मनः सर्वं वेदे"ति निन्दाश्रवणाच्च ननु भेदस्याऽपि श्रुतिस्मृत्यादिमानासिद्धत्वात्कथं प्रत्याख्यानं तथाहि "द्वा सुपर्णा सयुजा सखाया ॥ ज्ञाज्ञौद्वावजावीशानीशौ ॥ यआत्मानमन्तरोयमयति ॥ ऋतं पिबन्तौ सुकृतस्ये"त्यादिश्रुतीनां "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च उत्तमः पुरुषस्त्वन्य" इत्यादिस्मृतीनां चात्र मानत्वात् "भेद-

व्यपदेशाच्चान्यः ॥ उभयमपिभेदेनैनमधीयते" इति-
सूत्रैस्तासां भेदपरत्वेन व्याख्यातत्वात् "यदा पश्यः
पश्यत्यन्यमीशं तन्महिमानमिति वीतशोकः ॥ पृथ-
गात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्व-
मेती"त्यादिश्रुतिभिर्भेदज्ञानस्य मोक्षहेतुत्वोक्तेः
"अस्त्यन्यो भूतात्मा स वा एषो ऽभिभूतः प्राकृतैर्गु-
णैरित्यथो ऽभिभूतत्वात्सम्मूढः सम्मूढत्वादात्मस्थं
भगवन्तं कारयितारं नापश्यदि"ति मैत्रायणीय
श्रुत्या जीवेशभेदस्य स्पष्टं प्रतिपादनात् "निरञ्जनः
परमं साम्यमुपैति ॥ यक्ष्यन् क्रीडन्रममाणा" इति-
मोक्षे ऽपि भेदश्रवणाच्च नच "तयोरन्यः पिप्पलं
स्वाद्वत्ती"तिसत्वं अनश्नन्नन्यः तावेतौ सत्वक्षेत्रज्ञौ
तदेतत्सत्वं येन स्वप्नमभिपश्यति अथ योऽयंशारीर
उपद्रष्टा क्षेत्रज्ञ इतिपैङ्गिरहस्यब्राह्मणेन बुद्धिजीव-
परतया ऽयं मन्त्रो व्याख्यात इतिवाच्यं सत्वशब्देन
जीवस्य क्षेत्रज्ञशब्देनेशस्योक्तेः रजनीं घोरसत्व-
निषेवितां महिषीं ससत्वां "क्षेत्रज्ञं चापि मां
विद्धी"त्यादौ प्रयोगे जीवेशयोः प्रसिद्धत्वात्
धान्येन धनमितिवत् येनेति भेदे तृतीया शारीरं-
जीवेति य उपद्रष्टा उदासीनो ऽन्तर्यामी परेशः नच

"तत्र पर्येति यक्ष्यन् क्रीडन्नि"त्यादिश्रुत्युक्तोऽवान्तरमोक्ष इतिवाच्यं "स्वेन रूपेणाभिनिष्पद्यते इतिस्वरूपाविर्भावरूपपरमोक्षोक्तेः "नित्यो नित्यानां चेतनश्चेतनानां ॥ अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इत्याद्याः श्रुतयः स्पष्टं भेदमाहुः नच द्वौ चन्द्राविति वत्कल्पितभेदपरा इति वाच्यं अजोऽन्य इत्यादेर्मृषाभेदपरत्वे ऽप्रामाण्यापत्तेः एतच्छ्रुतिविरोधात्वदभिमतश्रुतेरन्यपरत्वोपपत्तेः नच प्रत्यक्षप्राप्तभेदवादिका भेदश्रुतिर्दुर्वलेति वाच्यं वर्त्तमानमात्रग्राहिप्रत्यक्षागृहीतत्रैकालिकभेदपरत्वेन श्रुते रननुवादकत्वात् नचाजोऽन्य इत्यादौ त्रिकालावाध्यत्वबोधकपदाभाव इतिवाच्यम् वर्त्तमानादिकालोदासीनतया बोध्यमानभेदस्यश्रुतिप्रामाण्यवशात्त्रिकालावाध्यत्वसिद्धेः "नत्वेवाहं जातु नास"मिति भेदव्याप्यवहुत्वस्य प्रत्यक्षायोग्यातीतादिकालसम्बन्धोक्तेः स्मृतेश्च श्रुतिव्याख्यारूपत्वात् किञ्च प्रत्यक्षस्य प्रामाण्यं नवेति आद्ये तत एव भेदसिद्धेः श्रुतेर्नित्यानुवादकताऽस्तु द्वितीये श्रुतेरनुवादकत्वासिद्धेः नच ज्ञातज्ञापकत्वमनुवादकत्वेन तन्त्रं नतु प्रमाणा-

गृहीतं ग्राहित्वमिति वाच्यं अप्रमाणगृहीतमात्र-
ग्राहित्वेन शुक्तिरूप्यबोधकवाक्यवक्तुरत्यन्ता-
प्रामाण्यापत्तेः इष्टापत्तौ च तद्दृष्टान्तेन वेदमात्रे
ऽपि तत्त्वापत्तेः अनुवादकत्वे ऽपि तद्वति तत्प्रकार-
कत्वरूपयाथार्थ्यप्रामाण्यहानेश्च नचैवं शास्त्रस्य
वैयर्थ्यमितिवाच्यं पिशाचभेदे प्रत्यक्षे ऽपि यथा
पिशाचो ऽप्रत्यक्षस्तथेशभेदे प्रत्यक्षे ऽपीशस्या-
प्रत्यक्षेण तच्छास्त्रस्य सार्थकयात् किञ्चौपनिषदस्य
ब्रह्मणः शास्त्रातिरिक्ते ऽन्यत्राप्राप्तेस्तद्धर्मिकस्य
तत्प्रतियोगिकस्य वा भेदस्य न शास्त्रनिरपेक्ष-
प्रत्यक्षादिना प्राप्तिः नच प्रतियोगिग्रहार्थं शास्त्रा-
पेक्षत्वे ऽपि स्वसमानविषयकप्रमाणपूर्वकत्वानिय-
मेन प्रत्यक्षस्य भेदप्रमापकत्वापत्तिरिति वाच्यं
स्वनिरपेक्षप्रमाणगृहीतग्राहित्वेनैव ह्यनुवादकत्वं
अन्यथा स्मृतिगृहीतग्राहित्वेनानुवादकत्वापत्तेः
तथाच श्रुतिसापेक्षप्रत्यक्षगृहीतग्राहित्वेन न श्रुते-
रनुवादकत्वमितिसिद्धं नच माऽस्तु भेदश्रुतीनाम-
नुवादकत्वं व्यावहारिकभेदपरत्वेन नैराकाङ्क्ष्याङ्गी-
कारादिति वाच्यं तासामप्रामाण्यापत्तेः नचार्थ-
वादवाक्यवदुपपत्तिरिति वाच्यं तत्तात्पर्यविषयस्य

प्राशस्त्यस्यैव भेदवाक्यार्थस्याबाधितस्यासत्त्वात् न चाभेदश्रुतिविरोधेन प्रतीयमने ऽर्थे ऽप्रामाण्य-मिष्टं अभेदश्रुतेरखण्डचिन्मात्रपरत्वेन भेदा-विरोधित्वात् नहि धर्मिमात्रबोधकं मानं तद्धर्म-वैशिष्ट्यविरोधि नचावान्तरतात्पर्येण भेदाभावो महातात्पर्येणाखण्डं बोध्यते ऽवान्तरतात्पर्यमादाय विरोधोपपत्तिरिति वाच्यं अवान्तरतात्पर्ये विष-यस्य भेदादेर्निषेधकाभावेन तात्त्विकत्वापत्तेः महा-तात्पर्यजन्यबोधस्य सर्वाविरोधित्वात् अवान्तर-तात्पर्यजन्यबोधस्य व्याघातेन विहितानिषेधक-त्वात् नच भेदाद्यभावो ब्रह्मैवेतिवाच्यं तज्ज्ञानस्य भेदाविरोधित्वात् किञ्च "यो वेद निहितं गुहायां परमे व्योमन् सो ऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते"त्यत्र सर्वकामावाप्तिफलोक्तेः शुद्धज्ञान-फलोक्तेश्च त्वया ऽपि शुद्धब्रह्मविषयत्वेन स्वीकृताया-भूमविद्यायाः फलोक्त्यवसरे तस्य तस्य सर्वेषु लोकेषु कामचरो भवति पञ्चधा सप्तधेति भेदोक्तेः "परं ज्योतिरुपसम्पद्यते" त्यत्रापि स्वरूपाभिव्यक्ति-फलोक्तेः "तदा विद्वान् पुण्यपापे विधूय निरञ्जन" इत्यत्राऽपि कर्मक्षयोक्तेश्च त्वन्मते ऽपि भेदभोगादि-

परेषु फलाध्यायान्तपादस्थेषु जगद्व्यापारवर्जं "सङ्कल्पादेव तच्छ्रुतेः भोगमात्रसाम्यलिङ्गाच्चे"त्यादिसूत्रेषु प्रक्रान्तशुद्धविद्यायाः फलस्यैव वक्तव्यत्वाच्च पृथगात्मानं प्रेरितारं चे"तिभेदज्ञानान्मोक्षोक्तेश्चेति भेदस्य पारमार्थिकत्वसिद्धिः नच सगुणोपासनया ब्रह्मलोकं गतस्याऽपि न स पुनरावर्त्तते इत्यादिश्रुत्या दैनन्दिनसर्गाद्यसम्बन्धो बोध्यते "सर्गे ऽपि नोपजायन्ते" इत्यादिस्मृतेरिति वाच्यं सङ्कोचेमानाभावात् नच यो वेदनिहितमितिश्रुतेर्वैषयिकसुखानां ब्रह्मानन्दान्तःपातित्वविधायका "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"तिश्रुत्यन्तराच्च तद्बलान्नानाकामावाप्तेः शुद्धज्ञानफलत्वमितिवाच्यं अशब्दार्थत्वात् वैषयिकाणां मृषाभूतानां ब्रह्मानन्दे ऽन्तर्भावासम्भवाच्च नच तस्य सर्वेष्वित्यादेर्निर्गुणविद्यास्तावकत्वेनाप्युपपत्तिरिति ॥ वाच्यं निर्गुणविद्याया एवालीकत्वात् नच परमं साम्यमैक्यमेव अपदार्थत्वात् स्वरूपभिन्नैक्यस्य तत्प्राप्तेश्च तवालीकत्वात् नच "यदा पश्यत्यन्यमीश"मित्यत्रान्यपदेन देहादिभिन्नमिति न तेन जीवेशभेदासिद्धिः देहात्मभेदस्य प्रत्यक्षत्वेन श्रुते-

वैयर्थ्यात् ईश्वरे देहाद्यभेदस्याप्राप्तत्वेन निषेधासम्भ-वाच्च तस्माद्भेदश्रुतीनां पारमार्थिकभेदपरत्वमेवेति सिद्धम् किञ्च भेदः पारमार्थिक एव षड्विधतात्पर्य-निर्णायकलिङ्गोपेतश्रुतिगम्यत्वात् तथाह्यथर्वणि "द्वासुपर्णा"त्युपक्रमः "परमं साम्यमुपैती"त्युप-संहारः १ "तयोरन्यःअनश्नन्नन्यः अन्यमीश"-मित्याद्यभ्यासः २ शास्त्रैकगम्येश्वरप्रतियोगिकस्य कालत्रयावाध्यभेदस्य शास्त्रं विना ऽप्राप्तेरपूर्वता ३ "पुण्यपापेविधूये"तिफलं४"तस्य महिमानमिती" त्यर्थवादः ५ "अन्योऽनश्न"न्नित्युपपत्तिः ६ अत्र "भेदव्यपदेशात् ॥ पृथगुपदेशा"दित्यादिसूत्रैर्व्या-ख्यातो द्विशब्दो भेदपरस्तदाक्षेपको वा द्वित्वसङ्ख्यै-वैक्यविरोधिनीति वा भवत्युपक्रमो भेदपरः तद्भि-न्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यं नायं किन्तु तत्सदृश इतिसादृश्यैकयोरेकतरनिषेधेनान्यतर-विधानात् गगनं गगनाकारमित्यादि तत्सदृशवस्त्व-न्तरनिषेधपरं गगनाद्येकदेशस्य तदेकदेशसादृश्यपरं वा कल्पान्तरीयगगनसादृश्यं वेत्युपसंहारो भेदपरः अन्यमीशमित्यत्रेशतो ऽन्यत्वं पश्यतीति प्रकृतो जीव एव प्रतियोगितया सम्बन्धादित्यभ्यासो ऽपि

भेदपरः नचाथर्वणे प्रथममुण्डके "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"त्तिशौनकप्रश्नानन्तरं "द्वे विद्ये वेदितव्ये" इतिविद्याद्वयमवतार्यपरामुक्त्वा "ऽथपरा यया तदक्षरमधिगम्यते ॥ यत्तदद्रेश्यमग्राह्य"मित्यादिपरविद्याविषयाक्षरप्रश्नोत्तरेणाभेदस्यैवोपक्रम इतिवाच्यं इन्द्राद्यवान्तरार्थपरत्वे ऋगाद्याएवापरविद्या उत्तमाक्षरपरत्वे तु ता एव परा इत्युक्तस्य सिद्धये तदर्थस्याक्षरस्य सर्वोत्तमत्वं प्रतिपादयितुं सर्वकारणत्वं ह्यक्षरस्योक्तं नत्वभेदः साकल्येनादृश्यत्वादिकः "अदृश्यत्वादिगुणको धर्मोक्ते"रिति सूत्रात् नच द्वितीयमुण्डके "पुरुष एवेदं विश्वं ॥ ब्रह्मैवेदं वरिष्ठमितिमध्ये ऽभेदोक्तिरितिवाच्यं" सर्वं समाप्नोषिततोऽसि सर्व इत्यनुसारात् पुरुषस्य विश्वव्यापकत्वोक्तेः सत्ये ब्रह्मणि यथा श्रुता नतु विश्वस्मिन् विश्वाभेदस्यासम्भवात् त्वया ऽनङ्गीकाराच्च तृतीयमुण्डकान्ते "परे व्यये सर्व एकीभवन्ति स यो ह वै तत्परमं ब्रह्मैव भवती" त्यैक्यरूपफलेनोपसंहार इतिवाच्यं अभूततद्भावार्थकच्विप्रत्ययेन त्वत्प्रतिकूलस्य प्रागविद्यमानस्य निर्मुक्तत्वादिना सायं गोष्ठे गाव एकीभवन्तीत्यादि-

वदेकस्थानस्थत्वादिना कीटभृङ्गन्यायेन वाजी-
वेशाभेदस्योक्तेः अभेदं परमं ब्रह्मेत्यसङ्गतं किञ्च
अन्तर्यामिब्राह्मणे ऽपि षड्विधतात्पर्यलिङ्गोपेतवाक्यं
भेदे प्रमाणं तथाहि वेत्थ त्वं काप्यान्तर्यामिण"
मित्युपक्रमः "एष ते आत्मान्तर्यामी"त्युपसंहारः
१ "एष ते आत्मे"त्याद्येकविंशतिकृत्वो ऽभ्यासः
२ अन्तर्यामित्वस्याप्राप्ततया ऽपूर्वता ३ "स वै
ब्रह्मविदि"तिफलं ४ तच्चेत्त्वं याज्ञवल्क्यसूत्रम-
विद्वांसं तच्चान्तर्यामिणं "ब्रह्मगवीरुदजसे मूर्द्धा
ते विपतिष्यतीतिनिन्दारूपोऽर्थवादः ५ "यस्य
पृथिवी शरीरं यं पृथिवी न वेदे"त्याद्युपपत्तय
इति ६ नजाने न ह्येतत्सर्वं वेदेत्येकविज्ञानेन
सर्वविज्ञानप्रतिज्ञापूर्वकं "ब्रह्म वा इद मग्र आसी-
त्तदात्मानमेवावेदाहं ब्रह्मास्मी" ति तस्मात् सर्व-
मभव"दित्यभेदेनोपक्रम्य षष्ठाध्यायान्ते मैत्रेयी-
ब्राह्मणे यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कम्पश्ये-
दित्यभेदेनैवोपसंहार इतिवाच्यं इन्द्रादिदेवानां
ज्ञानाद्यत्फलं ब्रह्मज्ञानात्तत्तदधिकं फलं भवती-
त्येकविज्ञानश्रुत्यर्थात् यत्र सुषुप्तौ ज्ञानज्ञेयादिकं
"ह्यात्मैव स्वयमेवाभूत्तत्केन साधनेन कं पश्येत्"

स्वेनैव स्वयमेवपश्येदित्यर्थः करणकर्मान्तरस्य तदा-
नीमभावात् अन्यथा "भेदेनैनमधीयते इत्यन्त-
र्यामिप्रकरणस्य भेदपरत्वं बोधयता सूत्रेण विरोधः
नच व्यावहारिकभेदपरमिदं सूत्रमिति वाच्यं एवं
तर्हि बौद्धो ऽपि वेदव्याख्याता तच्छास्त्रं च वेद-
व्याख्यानं स्यात् सो ऽपि ब्रह्मसूत्राणि व्याख्या-
यान्ते मिथ्यैवैषो ऽर्थः वास्तवं तु शून्यमेव तत्त्व"
मितिभवानिव वदेत् असद्वेत्यादिवाक्यं तस्य
तात्त्विकं स्यादितिभावः किञ्च ऐक्यं स्वरूपभिन्न-
मभिन्नं वा नाद्यः अद्वैतभङ्गात् नाऽन्त्यः तस्य
मृषात्वेन भेदस्य सत्यत्वप्रसङ्गात् तत्त्वमस्यादीनां
सखण्डार्थकत्वापत्तेश्च नच स्वरूपमेवेति वाच्यं
शास्त्रवैयर्थ्यात् अज्ञानाद्यधिष्ठानतया स्वरूपस्य
सदाभानात् ऐक्याभिन्ननिर्विशेषब्रह्मस्वरूपस्यावरणे
जगदान्ध्यापत्तेः किञ्चाभेदे ऽभेदत्वपारमार्थिक-
त्वासद्वैलक्षण्यादीनि वस्तुतः सन्ति नवेति आद्ये
सद्विजातीयत्वापत्ते द्वितीये ऽभेदत्वहानिः नचात्म-
स्वरूपाण्येव तानीति वाच्यं आत्मस्वरूपस्य सर्वै-
रपि स्वीकृतत्वेन त्वद्रीत्यनित्यत्वेन च त्वच्छास्त्रा-
विषयत्वात् नच जीवावृत्तिधर्मानाधिकरणत्वं

तदितिवाच्यं जीवावृत्तिधर्मानधिकरणत्वस्य शून्ये ऽपि सत्त्वेन तस्यापि जीवाभिन्नत्वापत्तेः नच शून्यं निःस्वरूपमात्मा तु स स्वरूप इतिवाच्यंस्वरूप-त्वादिधर्महीनस्यैक्यस्य सस्वरूपत्ववच्छून्यस्यापि सस्वरूपत्वसौलभ्यात् किञ्च तदवृत्तिधर्मनिषेधेन तद्वृत्तिधर्मविधानमेव विशेषनिषेधस्य शेषाभ्यनुज्ञा-फलकत्वात् नच विशेषनिषेधे ऽपि नशेषाभ्यनुज्ञा वायौ न नीलंरूपमित्यस्य रक्तं प्रत्यनभ्यनुज्ञात्वा-दिति वाच्यं विशेषनिषेधशेषाभ्यनुज्ञान्यप्रकारा-सम्भवे तस्य तथात्वनियमात् वायौ नीरूपतृतीय-प्रकारत्वं सत्त्वात् नहि ब्रह्मणि धर्मबोधकमानवत् वायौ रूपबोधकमानमस्ति वस्तुतस्तु जीवावृत्ति-धर्मानधिकरणत्वं सर्वज्ञत्वादिविशिष्टे त्वदभिमते निर्धर्मके वा नाऽद्यः व्याघातात् अल्पज्ञत्वेनानुभूतो यो जीवस्तदवृत्तिसर्वज्ञत्वादेस्तत्र सत्त्वात् नच जीवावृत्तिधर्मानधिकरणत्वोपलक्षितात्मस्वरूपं परै-र्नाङ्गीक्रियते इतिवाच्यं तादृशधर्मानधिकरणत्वस्य ब्रह्माभिन्नस्योपलक्षणतया बोधे श्रुतेः सखण्डार्थ-त्वापत्तेः अबोधे ज्ञातमात्रज्ञापकत्वेन वैयर्थ्यात् नित्यसिद्धस्य निर्विशेषस्य धर्मान्तरोपस्थानेन

व्यावर्त्यत्वरूपोपलक्षितत्वायोगाच्च तस्मादैक्यस्या-
सिद्धत्वाद्भेदस्य च तात्पर्यनिर्णायकोपक्रमादि-
षड्लिङ्गोपेतवाक्यसिद्धत्वाच्च भेदे एव वेदान्त-
शास्त्रस्य समन्वय इतिचेन्नेत्याहुरन्ये उपादानत्वा-
नङ्गीकारात् एतदुक्तं भवति ब्रह्मण उपादानत्वा-
भावे कार्ये व्याप्तसम्भवात् परिच्छिन्नत्वापत्तिरप्या-
वश्यकी तस्य निमित्तमात्राङ्गीकारे कारणविज्ञानेन
सर्वकार्यविज्ञानरूपश्रौतप्रतिज्ञाभङ्गो दुर्वारः नहि
निमित्तकारणज्ञानेन सर्वकार्यज्ञानसम्भवः तथात्वे
च कुलालादिज्ञानादपिमृन्मयमात्रस्य ज्ञानमङ्गी-
कार्यं देवानां प्रियैः नतु तदस्ति सर्वानुभव-
विरोधात् "जन्माद्यस्ययतः" ॥ यतो वा इमानि
भूतानीत्यादिशास्त्रप्रामाण्यात् जगज्जन्माद्यभिन्न-
निमित्तोपादानकारण एव ब्रह्मणि शास्त्रस्यसम-
न्वयप्रतिपादनात् अन्यथा "यत्प्रयन्त्यभिसन्वि-
शन्ती"तिकारणश्रुतेर्बाधप्रसङ्गात् नहि निमित्त-
कारणे कार्यस्य लयः सम्भवतीति भावः तस्माच्चि-
दचिद्विशिष्टं निखिलहेयप्रत्यनीकं सार्वज्ञ्यादिसम-
स्तकल्याणगुणाकारं श्रीपुरुषोत्तमाख्यं परं ब्रह्म
वेदान्तानां प्रतिपाद्यमितिराद्धान्तः ननु सदेव

सोम्येदमग्रआसीदेकमेवाद्वितीय',मित्यादिना ॥
सजातीयत्वादिभेदशून्यत्वश्रवणात् कथमुक्तार्थ-
सिद्धिरिति चेन्न तादृक्षस्य जगद्व्यापारासम्भवात्
मायाङ्गीकारेण चेत् किं तदानीं निर्विशेषचिन्मात्रं
ब्रह्ममाया तिष्ठतीति जानातीति नवाजानाति चेत्
ज्ञानमात्रस्य कथं ज्ञातृत्वं नजानामीति चेत्
अज्ञत्वात्कथमङ्गीकरोति अपिच यत्किञ्चिच्छक्ति-
योग्यं मायाङ्गीकारानन्तरमभ्युपेयते भवद्भिः तत्पूर्वं
मायाङ्गीकारानुगुणशक्त्यभ्युपगमे निर्विशेषत्व-
हानिः किञ्च तदानीं किं मायाविलक्षणं ब्रह्म उता-
वैलक्षण्येन मायात्मकं आद्येवस्तुपरिच्छेदप्रसक्तेः
द्वितीये ऽङ्गीकारवचनं निरर्थकं सत्यं ज्ञानमित्यादि-
लक्षणवाक्यस्य वैयर्थ्यं सजातीयादिभेदस्य व्या-
वृत्त्यर्थं हि लक्षणं तदन्यानिष्ठतन्निष्ठधर्मवत्त्वं हि
नान्यथा नच शिष्योपदेशार्थमध्यारोपापवादन्या-
येनेदमुच्यते असर्पभूतायां रज्जौ सर्पारोपवत्
वस्तुन्यवस्त्वारोपो ऽध्यारोपः तत्र वस्तुसच्चिदा-
नन्दाद्वितीयं ब्रह्म अज्ञानादिजडजातमवस्तु अज्ञानं
सदसद्भ्यांमानिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि-
भावरूपं चाहमज्ञ इत्यनुभवादन्यथानिर्विशेषस्य

कारणत्वासम्भवादितिवाच्यं तर्ह्येवं जगन्मिथ्यात्ववादे शिष्याचार्ययोस्तदुपदिष्टज्ञानस्य च तदन्तर्गतत्वेन शिष्यार्थं कल्पितमित्यपि वक्तुमशक्यत्वात् कल्पिताचार्योपदिष्टेन कल्पितशिष्यस्य का वा ऽर्थसिद्धिः निर्विशेषचिन्मात्रातिरिक्तं सर्वं मिथ्येतिवदतो मोक्षार्थश्रवणादिप्रयत्नो निष्फलः अविद्याकार्यत्वात् शुक्तिरजतादौ रजताद्युपादानप्रयत्नवन्मोक्षप्रयत्नो व्यर्थः कल्पिताचार्यायत्तज्ञानकार्यत्वात् शुकप्रह्लादवामदेवादिप्रयत्नवत् तत्त्वमस्यादिवाक्यजन्यज्ञानं न बन्धनिवर्त्तकं अविद्याकल्पितवाक्यजन्यत्वात् स्वयमविद्यात्मकत्वात् अविद्याकल्पितज्ञात्राश्रयत्वात् कल्पिताचार्यायत्तश्रवणजन्यत्वाच्च स्वाप्नबन्धनिवर्त्तकवाक्यजन्यज्ञानावदित्यनुमानात् नचाचार्यतज्ज्ञानयोः कल्पितत्वे ऽपि स्वप्नदृष्टसिंहभयेन प्रबोधवत् ज्ञानोत्पत्तिसम्भव इतिवाच्यं दृष्टान्तवैषम्यात् तथाच दृष्टान्ते स्वप्नसिंहरूपासद्विषयकज्ञानं प्रतिसद्रूपदोषस्य पारमार्थिकस्य कारणत्वं ज्ञानस्य भयं प्रतिभयस्य प्रबोधं प्रतिप्रबुद्धस्य देवदत्तस्याऽपि पारमार्थिकत्वं च दार्ष्टान्ते तु सर्वस्याऽपि मिथ्यात्वेन दृष्टान्तानुपपत्तेः अपिच

नारायणः परं ब्रह्मेत्यादिश्रुतिसिद्धो नारायणः प्रथमो गुरुः ब्रह्मणा कल्पितः पूर्णब्रह्मश्रीपुरुषोत्तमो ऽर्जुनेन कल्पितः कल्पिता तदुपदिष्टा सर्वशास्त्रमयी गीतेतिदुःसिद्धान्तो ऽयं प्रज्ञामानिभिः कथं न विचारणीयः अथैतत्सिद्धान्तनिष्ठैरपि स्वस्वगुरौ कल्पितत्वस्यावश्यभावनीयत्वात् तथात्वे च गुरुरेव परं ब्रह्म गुरुरेव परा गतिः सहि विद्यातस्तं जनयति "यच्छ्रेष्ठं जन्म तस्मै न द्रुह्येत कदाचने,, त्यादिश्रुतिव्याकोपात् नचाज्ञानदशासत्त्या एव जाते तु ज्ञाने तत्केन कं पश्येदितिश्रुतेर्न द्वैतदर्शनमिति वाच्यं एवमद्वितीयात्मसाक्षात्कारनष्टमूलाज्ञानतत्कार्यस्य द्वैतदर्शनपूर्वकोपदेशासम्भवात् वाधितानुवृत्त्या तत्सम्भव इति न वाच्यंसम्यग्ज्ञानसमये वाधितानुवृत्तिस्तिष्ठति नवा आद्ये "ज्ञानेन तु तदज्ञानं येषां नाशित" मितिप्रमाणविरोधात् नहि रज्जुसाक्षात्कारे सर्पभ्रमानुवृत्तिर्दृष्टेति अनुभवविरोधात् द्वितीये सम्यग्ज्ञानसमये द्वैतदर्शनकृतोपदेशस्य सुतरामसम्भवात् किञ्च "नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मया ऽच्युते" तितत्साक्षात्कारेणाज्ञाने नष्टे कथमर्जुनस्य

द्वैतदर्शनरूपभगवदनुज्ञसिस्तद्वचनानुगुणकर्त्तव्यवि-षयकाभविष्यत्करणीयप्रतिज्ञा युद्धादिषु प्रवृत्तिश्च सम्भवतीति मामाणयं परमेश्वरे सर्वथैव वाधिता-ऽनुवृत्तिकथा दुःसम्पादा तस्याश्चाज्ञानयोगात् तन्नि-वृत्तिसाध्यत्वात् भगवतस्तु सार्वज्ञ्यादिना स्वभावतो ऽपास्तदोषत्वेन कथमप्यसम्भवात् "यः सर्वज्ञः सर्ववि"दित्यादिश्रुतेः द्विचन्द्रदर्शनस्या ऽपि स्वक-रणदोषसद्भावपूर्वकानुवृत्तितया दृष्टान्तीकरणा-सम्भवाच्च अतो मिथ्यात्वेनापि द्वैतदर्शनासम्भवो भगवतः अन्यथा "समस्तदोषरहितं विष्णवाख्यं परमं पदं शुद्धं महाविभूताख्य" इत्यादिशास्त्र-वाधात् अथ रज्जौ सर्पवन्निर्विशेषे ब्रह्मण्यारोपि-तस्य प्रपञ्चस्य को वा द्रष्टा ब्रह्मैवेति चेत् ज्ञान-मात्रस्य कथं द्रष्टृत्वं मायायोगेनेति चेन्माया-सम्बन्ध आगन्तुकः स्वाभाविको वा आद्ये ब्रह्मणो विभुत्वाभावप्रसक्तेः द्वितीयश्चेत् तर्ह्यग्रे ऽपि माया-सवलमेवेति सिद्धं अद्वितीयवाक्यस्य विशिष्टपरत्वं सजातीयादिभेदशून्यत्वहानिश्च नच सवलत्वे ऽपि अग्रे प्रपञ्चाप्रतीतिरिति वाच्यं कारणाभावात् ईक्षणाभाव एव कारणमितिचेत् तदभावे कारणं

वक्तव्यं इच्छैवेति चेत् तर्ह्यग्रे ऽपि इच्छाविशिष्ट-मेवेति सिद्धं अद्वैतहानिश्च अङ्गीकरणात्प्राग्माया ऽस्ति नवा नान्त्यः अजामेकामिति श्रुतिवाघात् तत्कार्यभूतजीवकर्माद्यभावेन कृतनाशाकृताभ्या-गमप्रसङ्गाच्च आद्ये च किमाश्रिता सा ब्रह्माश्रिता चेत्तर्हि सर्वदा विशिष्टस्यैव ब्रह्मणः सिद्धिः नच मामाया अपारमार्थिकत्वान्न दोष इतिवाच्यं विकल्पासहत्वात् अपरमार्थो नाम किं मिथ्या वा ब्रह्मसमसत्ताकाभावो वा नाऽद्यः अज्ञानं त्रिगुणा-त्मकं ज्ञानविरोधिभावरूपमितिस्वसिद्धान्तविरो-धात् मया ऽध्यक्षेण प्रकृतिरित्याद्युक्त्या कारणा-सत्त्वेकार्याभावाच्च असतःकारणत्वासिद्धेः नच स्वाप्नशिरश्छेदनकार्यं प्रति स्वाप्नचौरस्य कारणत्व-दर्शनान्नोक्तदोष इतिवाच्यं "वैधर्म्याच्च न स्वप्नादि-व"दिति सूत्रे स्वप्नजागरितयोर्वैधर्म्योक्तेः जाग्र-त्सृष्टेः स्वाप्नसादृश्यत्वासम्भवात् तथाच "सत्वाच्चा-वरस्येति सूत्रे यथा कारणं ब्रह्म त्रिषु कालेषु सत्वं न व्यभिचरति तथा कार्यमपीति कार्यस्य सत्यत्व-प्रतिपादनात् अन्यथा "असत्यमप्रतिष्ठं ते जगदा-हुरनीश्वर"मित्यासुरसिद्धान्तप्रसङ्गात् "गौरनाद्य-

न्तवती विकारजननीमजामष्टरूपामजां ध्रुवां ॥ प्रकृतिं पुरुषं चैव विद्ध्यनादीउभावपी"त्यादिशास्त्र-विरोधाच्च नहि मिथ्याभूतपदार्थः अक्षरत्वध्रुव-त्वादिशब्दैर्व्यपदिश्यते द्वितीयः यच्च इष्टापन्नः अस्माभिरपि मायायाः कौटस्थ्यसत्ताऽनभ्युपग-मात् परिणामादिविकारवत्वाच्च अत एवा नृतादि-पदैरुपचर्यते तत्कार्यमप्यनित्यत्वाविर्भावतिरो-भावादिना स्वप्नादिदृष्टान्तैरुपचर्यते विरागादि-जननार्थं नह्युत्पत्तिविनाशयोगो मिथ्यात्वे नियाम-कं किन्त्वनित्यत्वे एव "अन्तवन्त इमे देहा ॥ आद्यन्तवन्तः कौन्तेय ॥ आगमापायिनो नित्याः अनित्यमसुखं लोक"मित्यादिना ऽनित्यत्वस्यैव गानात् किञ्चैकमेवाद्वितीयमितिश्रुतिरपि वस्त्वन्त-रविशिष्टस्यैवाद्वितीयत्वमाह श्रुत्यर्थस्तु इदम्वि-भक्तनामरूपंवहुत्वावस्थं जगत् अग्रे सृष्टेः प्रागे-कमेवाविभक्तनामरूपकतया एकावस्थापन्नमेवा-द्वितीयमाधारान्तरशून्यं च सदेवासीदिति मूलम-नाधारमित्यादिनैकार्थ्यात् सच्छब्दः असत्कार्य-व्यावृत्यर्थः एवकारेण वहु स्यामितिसृक्ष्यमाण-कार्यवहुत्वावस्था व्यपदिश्यते सर्वासां कारणा-

अचकश्रुतीनामेकवाक्यार्थत्वावयदम्भावात् तत्र "विष्णुस्तदासीद्धरिरेव निष्फलः एको हवै नारायण आसीन्न ब्रह्मा नेशानः किं तदा ऽऽसीन्नै-वेह किञ्च नाग्रआसीन्मूलमनाधारामिमाः प्रजाः प्रजायन्ते इत्यनुसारात् तद्धेदं तर्ह्यव्याकृतमासी-तन्नामरूपाभ्यां व्याक्रियते इतिनामरूपव्याकरण-मात्रश्रवणाच्चायमेव श्रुत्यर्थः अन्यथा परस्पर-व्याघातप्रसङ्गात् वाराहेच "मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितं मयि सर्वं लयं याति तद्ब्रह्मा-द्वयमस्म्यहं भारतेच ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे आभूतसम्प्लवे प्राप्ते प्रलीने प्रकृतौ महान् एकस्तिष्ठति सर्वात्मा सतु नारायणः प्रभु"रित्यादि-स्मृतेश्च तदानीं सूक्ष्मचिदचिद्विशिष्टं ब्रह्मासीदिति विशिष्टस्यैवाद्वितीयत्वं सिद्धं अन्यथाजीवाभावे कृतनाशादिप्रसङ्गात् कर्माभावे विषमसृष्ट्यसिद्धेश्च नात्मा श्रुतेः न जायते म्रियते वा विपश्चित् ॥ न कर्माविभागादितिचेन्नादित्वादितिशास्त्रात् नचानेन जीवेनात्मना ऽनुप्रविश्यनामरूपे व्याकरवाणीति श्रुत्या ब्रह्मण एव जीवभावापत्तिविधानादभेद एव जीवब्रह्मणोरङ्गीकार्यं इतिवाच्यम् विकल्पासहत्वात्

सङ्कल्पपूर्वकं जीवभवनं निर्विशेषस्याभिप्रेतं उप-
हितस्य वा नाऽद्यः तस्यसङ्कल्पशून्यत्वात् नद्वितीयः
शुद्धसत्त्वोपाधिकस्य मलिनसत्त्वोपाधिकः संसारी
स्यामिति सङ्कल्पो न युज्यते न ह्यनुन्मत्तः स्वस्या-
नर्थं सङ्कल्पयति किञ्च सङ्कल्पे ऽपि उपहितः
स्वोपाधिपरित्यागेनान्यथाभवने यदीश्वरस्तर्हि
निर्विशेष एव किं न स्यात् नच विद्योपाधिविशि-
ष्टस्यैवाधिकत्वं सम्भवति विद्याविद्ययोसाङ्कर्यापत्तेः
तयोरत्यन्तविरोधेन सामानाधि करण्यासम्भवश्च
सर्वज्ञः संसारीतिमहद्विरोधात् किञ्चा "न्तःप्रविष्टः
शास्ता जनानां सर्वात्मे" त्यनेन स्वस्य स्वयमेव-
शास्तेत्यसम्भवः अग्निरात्मानं दहतीतिवत् किञ्च
स्वस्मादभिन्नं जीवं जगत्कारणं ब्रह्म जानाति नवा
नाद्यः स्वस्मादभिन्नस्य दुःखं स्वदुःखमेवेति जान-
तस्तद्धिताकरणासम्भवात् किञ्च ब्रह्मणोजीवत्वे
स्वेनैव स्वाज्ञाननिवृत्त्या तस्यैव मोक्ष्यमाणत्वात्तद-
विद्याकल्पितानां मोक्षार्थं श्रवणादिप्रयत्नोपदेशो
व्यर्थ एव अविद्याकार्यत्वात् शुक्तिरजतादौ
रजताद्यापादनप्रयत्नवत् किञ्चेक्षणबहुभवनस-
ङ्कल्पात्प्राग्जीवाः सन्ति नवा नान्त्यः कृतनाशा-

कृताभ्यागमप्रसङ्गात् "अजोह्येकः भुक्तभोगामजोऽन्यः अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते" इत्यादिशास्त्रव्याकोपाच्च नाऽद्यः तर्हि जीवविशिष्ट एव तर्हि कथं तत्वमस्यादिना तदैक्योपदेश इतिचेन्न शास्त्रे उभयथा व्यपदेशोदृश्यते तत्रस्रष्टृत्वसृज्यत्वनियन्तृत्वनियम्यत्वसर्वज्ञाल्पज्ञत्वस्वातन्त्र्यपराधीनत्वादिना भेदः तत्वमस्यादिना चाभेदः तयोर्मुख्यत्वसिद्धये ब्रह्मणोंऽशइत्यभ्युपगन्तव्यः "अंशो नाने" तिसूत्रात् "ममैवांशो जीवलोके जीवभूतः सनातन" इतिभगवद्वचनाच्च नचैकवस्त्वेकदेशवाचकोंऽशशब्दः ब्रह्मणो निरवयवत्वेन त्वया ऽपि निरंशत्वमेवैष्टव्यमन्यथा ऽनित्यत्वप्रसङ्गात् तद्गतदोषाणां ब्रह्मण्येव प्राप्तिप्रसङ्गाच्चेति वाच्यं विशेषणरूपांशाभ्युपगमात् यथागवाश्वगतशुक्लकृष्णादीनां गोत्वादिविशिष्टानां गोत्वादिविशेषणान्यंशाः यथा वा देहिनो मनुष्यादिदेहोंऽश स्तद्वदेकवस्त्वेकदेशत्वं ह्यंशत्वं विशिष्टस्यैकवस्तुनो विशेषणमंश एव तथाच विवेचकाः विशिष्टे वस्तुनि विशेषणां ऽशोयं विशेष्यांशोऽयमिति व्यपदिशन्ति विशेषणविशेष्ययोरंशांशित्वे ऽपि स्वभाववैलक्षण्यं

दृश्यते एवं जीवपरयोर्विशेषणविशेष्ययोरंशांशित्वं स्वभावभेदश्चोपपद्यते एवं तयोर्वैलक्षण्यस्वभाव-पराभेदश्रुतयः पृथक्सिद्ध्यनर्हविशेषणानां विशे-ष्यपर्यन्तमाश्रित्याभेदश्रुतयःप्रवर्त्तन्तइतिराद्धान्तः त्वमयमादिशब्दानांजीवशरीरकब्रह्मवाचकत्वेनैका-र्थाभिधायित्वान्मुख्यार्थत्वमेव नच सन्मात्रं ब्रह्मै-वानाद्यविद्यया तिरोहितं सज्जीवत्वं भजते तन्नाशे च स्वरूपापत्तिर्मोक्ष इति घटे भिन्ने यथाऽऽकाश आकाशः स्याद्यथापुरा एवं देहेमृतेजीवोब्रह्मसम्प-द्यतेपुनरितिवचनादितिवाच्यं नित्यमुक्ताखण्डै-करसप्रकाशनिर्विशेषनिरंशज्ञानमात्रा स्वरूपस्य तिरोधानासम्भवात् प्रकाशमात्रैकस्वरूपस्य ज्ञानस्य तिरोधाने स्वरूपनाशप्रसङ्गात् तिरोधानं नाम वस्तु-स्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः प्रकाश एव च स्वरूपं तस्य तिरोधाने स्वरूपनाश एव इतरथा तदसम्भव इत्यर्थः नच प्रकाशस्य नित्यत्वे ऽपि तद्वैशद्यमात्रं तिरोहितमितिवाच्यं वैशद्यंस्वरूपतो ऽभिन्नं भिन्नं वा नाद्यः उक्तदोषस्यतादवस्थ्यात् द्वितीये सविशेषस्यापत्तेः श्लोकार्थस्तु यथाशब्द-गुणको महावकाशप्रद आकाशो घटाकाशावस्थायां

अल्पावकाशप्रदत्वेन वर्तमानो घटदोषाऽसंस्पृष्टो ऽवतिष्ठते घटे भिन्ने तु पुरा ऽऽकाशः महावकाशप्रदः स्यात् तथा स्वभावतः सत्य सङ्कल्पत्वादिगुणको ऽसंसारीजीवः संसारदशायां अल्पज्ञो ऽनीशः तथाऽपि जन्ममरणादिदेहधर्मवर्जित एवावतिष्ठते देहे मृते स्थूलसूक्ष्मोपाधिनिवृत्तौ पुनर्ब्रह्म सम्पद्यते सम्पद्याविर्भावः स्वेन शब्दादित्यनुसारेणाविर्भूत-गुणाष्टको वृहद्गुणविशिष्टो भवतीति "ब्रह्मणो महिमानमवाप्नोति सचानन्त्याय कल्पते" इत्यादि-श्रुते नच सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवती" तिपरजीवयोरैक्यश्रवणमिति वाच्यं "प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किञ्च न वेदनान्तर मितिस्वापदशायां जीवस्यसर्वज्ञेन ब्रह्मणा निरस्तसमस्तश्रमस्य वाह्याभ्यतरज्ञान-लोपः श्रूयते ह्यन किञ्चित् ज्ञस्य तदानीमेव सर्व-ज्ञेन सता स्वेन परिष्वङ्गः सम्भवति सता सौम्ये-त्यत्राऽपि न जीवपरयोरैक्यमुच्यते अपितु सुषुप्तौ नामरूपानुसन्धानाभावात्प्रलय इव ब्रह्मणि लयः प्रतिपाद्यते स्वमपीतोभवति स्वात्मनि ब्रह्मणि लीनो भवति नतु स्वस्मिन्नेव स्वस्य लयः सम्भवति

सतेतितृतीयास्वारस्यात् सम्पत्तिशब्दस्य परिष्वङ्ग-शब्दैकार्थ्यान्न स्वरूपैक्यसम्भवः "सुषुप्त्युत्क्रान्त्योर्भेदेने"तिसूत्रात् तस्माच्चेतनाचेतनवस्तुजातं पर-ब्रह्मविशेषणभूतं तदुभयविशिष्टं सार्वज्ञाद्यचिन्त्या-परिमितकल्याणगुणाकरं जगदुदयविलयाद्यभिन्न-निमित्तोपादानकारणं ब्रह्मेति तत्र चेतनविशिष्टं चाचेतनविशिष्टं च विशिष्टे तयोरद्वैतं विशिष्टा-द्वैतमित्याचक्षते तत्रैव वेदान्तनां समन्वय इति-राद्धान्तः अत्र ब्रूमः एतदुक्तिर्न रमणीया विशे-षणासम्भवात् तथाहि व्यावर्त्तकत्वं तावद्विशेष-णत्वं यथा रामो दासरथिरित्यादिप्रयोगे रामशब्दो हि भार्गवबलरामरघुनाथेषु त्रिष्वपि शक्तस्तदुच्चा-रणे त्रयाणामप्युपस्थितिः समाना तत्परत्वात्तस्य यत्परः शब्दः सशब्दार्थ इतिन्यायात् तत्र दाश-रथिशब्दो द्वाभ्यां व्यावर्त्याभ्यां व्यावृत्तं रघुनाथ-मुपस्थापयति एवञ्च भार्गवबलरामौ तेन व्यावर्त्यौ स्तः दाशरथिशब्दस्य व्यावर्त्तकत्वाद्विशेषणत्वं तेन श्रीरघुनाथश्च व्यावृतः तथाच व्यावर्त्तकस्य विशे-षणस्य व्यावर्त्ययोः सतोः साफल्यात्सामञ्जस्य-मितिविदुषा प्रक्रिया प्रकृतेतु चेतनाचेतनात्म-

विशेषणयोः सतोरपि व्यावृत्तरूपे विशेषे ब्रह्मणि सत्यपि व्यावर्त्यस्यान्यपदार्थस्याभावाद्विशेषण-सङ्ग्रहस्य निःफलत्वमेव चेतनाचेतननियन्तृभ्यः पदार्थेभ्यस्तत्वत्रयेभ्यो भवतामपि तत्वान्तरानभ्यु-पगमात् व्यावृत्तव्यावर्त्यसद्भावसापेक्षत्वनियमाद्वि-शेषणसाफल्यस्य व्यावर्त्याभावे व्यावृत्तासिद्धौ विशेषणासिद्धेः कुतो विशिष्टत्वम् किञ्च विशेष्य-रञ्जकविशेष्यज्ञानहेतुत्वं वा विशेषणत्वं "स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषण" मितिवचनात् यथाऽतसीपुष्पशङ्काशो गोविन्द इत्यत्राऽतसीपुष्प-सादृश्यविशेषणजन्यज्ञानेन गोविन्दपदार्थो रज्यते ध्यातृबुद्धावुपस्थाप्यते इतिविवक्षायामपि नोक्ते-ष्टसिद्धिः असम्भवात् चेतनाचेतनयोरेकतरज्ञाने तदुभयज्ञाने वा विशेष्यभूतस्य ब्रह्मणोरञ्जकत्वा-भावादुपस्थापकत्वासम्भव एव अन्यथा ऽहमर्थ-तया ज्ञातजीवस्य देहादिरूपेण ज्ञाता चेतनस्य पुंसो ब्रह्मज्ञानोपस्थितिप्रसङ्गात् तस्मादापातरम-णीयमेवेदं विशिष्टाद्वैतब्रह्माभ्युपगममतमिति-भावः ननु स्वाभाविकभेदाभेदपक्षो ऽपि दोष-बाहुल्यादसम्भव एव तथाहि ईश्वरः स्वरूपेणैव

देवासुरनरतिर्यगादिभेदेनावस्थित इतितदात्मकत्व-वर्णनात् तथाच सत्येकमृत्पिण्डारब्धघटशरावादि-गतान्युदकाहरणादिसर्वकार्याणि यथा तस्यैव भवन्ति एवं सर्वजीवगतसुखदुःखादिकं सर्वमीश्वर-गतमेव स्यात् घटशरावादिसंस्थानानुपयुक्तमृद्द्रव्यं यथाकार्यान्तराननिवतं एवं सुरासुरपशुमनुजादि-जीवत्वानुपयुक्तेश्वरांशः सार्वज्ञ्यादिगुणाकरः नंच स एवेश्वर एकांशेन कल्याणगुणाकर सएवा न्यांशेन हेयगुणाकार इतियुक्तं द्वयोरंशयोरी-श्वरत्वाविशेषात् कस्तेन लाभः एकस्यैवैकांशेन नित्यदुःखित्वमंशान्तरेण सुखित्वं ॥ किञ्चांशान्त-रेण सुखित्वमपि नेश्वरत्वाय कल्पते यथा देव-दत्तस्यैकस्मिन्हस्ते चन्दनपङ्कलेपकेपुराद्यलङ्कारः एकस्मिन्हस्ते मुद्गरादिपातोज्वालाप्रवेशश्च तद्व-दीश्वरस्यैव स्यादिति ब्रह्माज्ञानवादादपि महत्या-पीयानयं पक्षः अपरिमितदुःखस्य पारमार्थिकत्वा-भ्युपगमात् संसारिणामनन्तत्वेन दुस्तरत्वादिति-चेन्न उक्तशङ्काया महद्भ्रान्तिकल्पितत्वात् अस्माभिः स्वरूपभेदस्य स्वाभाविकत्वाभ्युपगमात् नोक्तदोष-संपृक्तवातलेशस्पर्शावकाशः अन्यथा स्वाभाविक-

भेदाभेदपक्षहानेः*यदि जीवपरयोः स्वरूपेणाभेदो ङ्गीकृतः स्यात्तर्हि भवदुक्तदोषकल्पनाऽवकाशः सतु नास्त्येवेत्यर्थः नचैवं परपक्षप्रवेशः उत्तरभाविनामेव पूर्वसिद्धसिद्धान्तोपजीवित्वनियमात् युष्मत्पक्षस्यै- वास्मत्पक्षानुगामित्वसिद्धिः किञ्चाहोमनीषापूर्व- पक्षारोपकाणां स्वप्रयुक्तवज्रस्य स्वसिद्धान्तपर्वते पातो नाऽलोचितः श्रीमद्भिः सार्वज्ञ्यादिगुणाढ्ये भगवति परब्रह्मणि श्रीपुरुषोत्तमे चेतनाचेतनयोः पापादिजाड्यादिसंपृक्तयोर्वैशिष्ट्याङ्गीकारात् तथाहि सार्वज्ञ्यादिविशिष्टस्य ब्रह्मणश्चेतनाचेतनविशेषणे- नाऽऽधारत्वमभिप्रेतं केवलस्य वा नान्त्यः निर्विशेष- त्वानभ्युपगमात् इतरथा सार्वज्ञादीनामव्याप्यवृत्ति- त्वप्रसङ्गात् मायावादप्रवेशाच्च किञ्च सार्वज्ञादि- विशिष्टस्य ब्रह्मणश्चेतनाचेतनविशिष्टस्य चेतरेतर- भिन्नत्वे विशिष्टद्वयसिद्ध्या विशिष्टाद्वैतभङ्गात् चेत नादिविशिष्टप्रदेशस्य सार्वज्ञ्यादिहीनत्वापत्त्या निय- न्तृत्वभङ्गाच्च तथात्वे च त्वदुक्तिवज्रनिपातः तथाहि यथा कस्य चिन्मानवस्य देहैकदेशेचन्दना गुरु-

---

*यस्मिन्सतियस्योत्पत्तौकारणविलम्बाद्विलम्बोनभवतितत्तस्य स्वाभाविकं यथाग्नेरुष्णत्वस्योत्पत्तौ कार्ष्ठविलम्बाद्विलम्बोनभव- तीति ॥

लेपादिदेशान्तरे च त्तारकर्दमादिलेपनं परिहासार्थं बालैर्लीलया क्रियते तथा प्रकृतेऽपि परमेश्वरस्यैक-देशे मङ्गलगुणगणादिविविधभूषणयोगो देशान्तरेच सर्वदोषसम्पन्नजीवादियोगस्तस्मान्महावीभत्सितो-ऽयं भवतां सिद्धान्तः नाप्याद्यः विशिष्टैवैशिष्ट्या-पत्या विशिष्टाद्वैतसिद्धान्तभङ्गात् किञ्च सार्वज्ञ्यादि-समस्तकल्याणगुणाढ्यस्यैव यदि चेतनादिवैशि-ष्ट्याभ्युपगमो ऽभिप्रेतः तर्हि सर्ववस्त्रभूषणायुधादि-दिव्यालङ्कारसम्पन्नस्य पुंसोऽतिजीर्णवीभत्सित-नीलवस्त्रायोभूषणादिवेष्टनवत् सर्वदिव्यगुणगणा-द्यलङ्कृतस्य भगवतः परब्रह्मण उपर्यपरिमित-दुःखाद्यवच्छिन्नजीववैशिष्ट्यमभ्युपगतं स्यात् तस्मा-न्मायावादादपि महद्दुष्टो ऽयं पक्षः तत्पक्षे सार्व-ज्ञ्यादिविशिष्टस्य भिन्नत्वाङ्गीकारात् भवन्मते तूत्त-मगुणभूषणस्यैव पापावच्छिन्नजीववैशिष्ट्याङ्गी-कारात् किञ्च तन्मते कल्पितत्वाङ्गीकारेण कदा-चिन्निवृत्तिसम्भावना ऽपि भवतिभवन्मतेतु कदा-चिदपि कथमपि निवृत्तिमनोरथस्याप्यसम्भवः यावदात्मवृत्तित्वाङ्गीकारात् तस्मान्महत्यापीयानयं पक्षः श्रेयोर्थिभिरुपेक्षणीयः अपिच ब्रह्मणो

विशिष्टाद्वैतत्वाङ्गीकारे ऽपि तस्य चेतनाचेतनाभ्यां स्वभावतोभेदस्तयोश्च परस्परं भेदः स्वाभाविक एवाभ्युपगम्यते भवद्भिरपि अन्यथा स्वभावसाङ्कर्य-प्रसङ्गात् एवञ्च भेदस्याभेदस्य च स्वाभाविकत्व-मङ्गीकृत्य पुनर्विशिष्टाङ्गीकारे गौरवमात्रत्वाद्वरी-यस्त्वं स्वाभा(१)विकभेदा(२)भेदगत्तस्यैव लाघवा-दिति सङ्क्षेपः एतदुक्तम्भवति वेदान्तशास्त्रे विवि-धानि वाक्यानि दृश्यन्ते भेदपराण्यभेदपराणि भेद-निषेधपराणि निषेधसामान्यपराणि (३) च तत्र "नित्यो नित्यानां जहात्येनां भुक्तभोगामजो ऽन्यः पृथगात्मानं प्रेरितारं च मत्वा प्रधानक्षेत्रज्ञपतिः अक्षरात्परतः परः तस्मिंल्लोकाः श्रिताः सर्वे भीषा-ऽस्माद्वातः यद्भूतयोनिं प्रवदन्ति धीराः एषयोनिः सर्वस्य सर्वांल्लोकानीशते ईशनीभिः सर्वस्य शरणं सुहृत् तमीश्वराणां परमं महेश्वरं स्वाभाविकी ज्ञानबलक्रिया(४)च भेदव्यपदेशाच्चान्यः" अधिकं

(१) शक्तिशक्तिमतोर्भेदम्पश्यन्तीपरमार्थतः ॥

(२) अभेदञ्चानुपश्यन्तियोगिनस्तत्वचिन्तका इतिसाङ्ख्यभाष्ये द्वितीयाध्याये पञ्चमसूत्रव्याख्यायामुद्धृत्यकौर्मवाक्यम् ॥

(३) अन्तर्यामिजगद्रूपीसर्वसाक्षीनिरञ्जनः ॥

(४) भिन्नाभिन्नस्वरूपेणस्थितोवैपरमेश्वर इतिबृहन्नारदीयतृती-तीयाध्यायेनारदोक्तिः सनकादिकं प्रतिच ॥

तु "भेदव्यपदेशात् विवक्षितगुणोपपत्तेश्च सर्वोपेताचे"त्यादीनि "आत्मा वा इदमेक एवाग्र आसीत् एको ह वै नारायण आसीत् सदेव सौम्येदमग्र आसीत् तत्त्वमस्ययमात्मा ब्रह्म आत्मैवेदं सर्वं सर्वं खल्विदं ब्रह्म अहं ब्रह्मास्मी" ति"तदनन्यत्वमारम्भणशब्दादिभ्य"इत्यादीनि ॥ "सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेद" इत्यादीनि "अथात आदेशो नेतिनेतिअस्थूलमन"ण्वित्यादीनि च क्रमशो ज्ञेयानि श्रुतिसूत्राणि न तेषामितरेतरबाध्यबाधकभावो वक्तुं शक्यः तुल्यबलत्वात् तथा च सर्वेषामपि स्वार्थप्रामाण्यसिद्धये भिन्नाभिन्नं ब्रह्मवेदान्तशास्त्रविषयत्वेनाभिप्रेतं भगवतः सूत्रकारस्य एतदभिप्रायवता तद्धटकसूत्राणि प्रणीतानि अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयते एके उभयव्यपदेशात्त्वहिकुण्डलवदित्यादीनि अतश्चैवमेषां समन्वयः तत्र तत्त्वमस्यादिभिश्चिदात्मनो ब्रह्मतादात्म्योपदेशात्तेषां ब्रह्मात्मकत्वेन तदायत्तस्थितिप्रवृत्तिकत्वेनतद्व्याप्यत्वेन तदाधेयत्वेन च स्वार्थपरत्वं समञ्जसं तत्र ब्रह्मात्मा यस्य चेतनाचेतनवस्तुजातस्य

तद्ब्रह्मात्मकं तस्य भावस्तत्वं तेन "ऐतदात्म्यमिदं सर्वं ॥ एष मे आत्मा एष ते आत्मा एष सर्व-भूतान्तरात्मा आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ अहमात्मा गुडाकेश ॥ वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव" चेत्यादिश्रुतिस्मृतिसूत्रेभ्यः विश्वात्मा स्वतन्त्रसत्ताश्रयः परब्रह्म श्रीपुरुषोत्तमः स्वतन्त्रसत्वञ्च स्वाधीनत्वे सति स्वायत्तस्थितिप्रवृत्तिकत्वं नियन्तृत्वादिवत्तत्समानाधिकरणासाधारणधर्मविशेषः तस्यच भगवद्ब्रह्मात्मसन्नारायण-पुरुषोत्तमवासुदेवादिशब्दवाच्ये श्रीकृष्ण एवान्वयः तस्यैव सर्वनियन्तृत्वात् नियन्तृत्वस्वतन्त्रसत्त्वयोः सामानाधिकरण्यनियमात् "एतस्याक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ॥ भीषाऽस्माद्वातः पवते आत्मा हि परमः स्वतन्त्रोऽधिगुणः न तत्समश्चाभ्यधिकश्च दृश्यते स कारणं कारणाधिपाधिपः न तस्य कश्चिज्जनिता नचाधिपः बुद्धिर्ज्ञानमसम्मोहः तपाम्यहमहं वर्षं" इत्याद्य-न्वयव्यतिरेकसाधारणश्रुतिस्मृतिभ्यः एतदेव सर्वात्मत्वं स्वतन्त्रसत्त्वञ्च पुरस्कृत्याभेदवाक्यजातस्य प्रवृत्तिः स्वतन्त्रसत्ताश्रयस्य श्रीपुरुषोत्तमस्यैकत्वात्

एवं तस्य विश्वात्मनः स्वतन्त्रस्य श्रीकृष्णस्य पर-ब्रह्मणस्तदात्मीयनियम्यपरतन्त्रसत्वाश्रयं चिद-चिद्रूपं विश्वमितिफलितं परतन्त्रसत्त्वं नाम परायत्तास्थितिप्रवृत्तिकत्वं तच्च नियम्यवर्गाश्रितं तदसाधारणधर्मत्वात् "यदासीत्तदधीनमासीत् तमेव भान्तमनुभाति स कारयेत्पुण्यमथापि पापं ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वे"तिश्रवणात् जगद्वशे वर्त्तते ऽदः कृष्णस्य सचराचरं अहं सर्वस्य प्रभव" इत्यादिश्रवणाच्च परतन्त्रसत्त्वं द्विविधं कूटस्थविकारिभेदात् तत्र कौटस्थ्यं च जन्मादिविकारशून्यत्वे सति शाश्वतत्वं तदधिकरणं च क्षेत्रज्ञे पुरुषादिपदार्थभूतं चेतनवस्तु "न जायते म्रियते वा विपश्चित् न जायते म्रियते वा कदाचि"दित्यादिश्रुतिस्मृतिभ्यः विकारत्वे सति प्रवाहरूपेण नित्यत्त्वं द्वितीयं तदधिकरणं चाचे-तनं मायाप्रधानप्रकृतिक्षेत्रादिपदार्थरूपं "अजा-मेकां गौरनाद्यन्तवती त्रिगुणां तज्जगद्योनिरनादि-प्रभवाप्ययं तदेतदक्षयं नित्यं जगन्मुनिवराखिल" मित्यादिश्रुतिस्मृतिभ्यः एवं परतन्त्रसत्वमादाय-भेदशास्त्रस्य प्रवृत्तिस्तस्यैव तेषां नैराकाङ्क्ष्यं च तथैव

भेदनिषेधपराणां चेतनाचेतननिष्ठस्वतन्त्रसत्त्वमा-
दाय प्रवृत्तिः नेतिनेतीत्यादि सामान्यनिषेधवा-
क्यानां च ब्रह्मणः सर्ववैलक्षण्यज्ञापनेन प्रवृत्तिश्चेति
निरवद्यं इतरेतु वीप्सायुक्तेन निषेधेन भूतपञ्चकं
सूक्ष्मं च वासनारूपं यत्किञ्चिदचेतनजातमनात्म-
रूपं पर्युदस्य शुद्धमात्मरूपमुपदिष्टं भवति नेति-
नेत्यादिश्रुत्या न पुनः प्रपञ्चस्यैवाभावः प्रतिपाद्यते
अतत्परत्वाद्वाक्यस्य तत्रैषाक्षरयोजना "न ह्ये-
तस्मा"दितिनेतिन प्रपञ्चप्रतिषेधरूपादादेशना-
दन्यत्परं चादेशनं ब्रह्मण अस्तीति कृत्वा नेति-
नेतीत्युक्तमितिश्रुत्यभिप्राय इत्याहुः अन्येतु नेति-
नेतीतिवीप्सया विषयजातस्य सर्वस्य निषेधेन
ह्यविषयः प्रत्यगात्मा निषेधावधिभूत इति निः
संशयं ज्ञानं भवति एवं नेतीति ब्रह्मोपदशं कृत्वा
किंह्युपदिश्यते तत्राह एतस्मान्नेतिनेत्यादिष्टात्
ब्रह्मणो ऽन्यद्व्यतिरिक्तं नास्ति यस्मात्तस्मान्नेति
नेतीत्युच्यते ब्रह्मणो नामधेयकथनव्याजेनापि
स्वरूपमाह नामधेयमिति किं तत्सत्यं तद्व्याचष्ट
श्रुतिः प्राणा इतिप्राणशब्देन लिङ्गशरीरमुच्यते
तस्य सत्यत्वं स्थूलदेहापेक्षया स्थापित्वं द्रष्टव्यं

एष परमात्मा सत्यस्यापि परं सत्यमितिवस्तुगतिः ब्रह्मणो यद्रूपद्वयं सपरिकरं प्रधानं एतावत्त्वं इयता-परिच्छिन्नं तत्प्रकृतैतावत्त्वं तदेव प्रतिषेधति नेतिने-तीतिश्रुतिः इतिशब्दस्य प्रधानत्वेन प्रकृतपरामर्शि-त्वात् ब्रह्म तु न प्रधानेन प्रकृतं अतो न तन्निषेधः यस्मात्ततः प्रपञ्चनिषेधात्परं भूयो ब्रह्मास्तीति ब्रवीतीत्यर्थः वस्तुतस्तु नेतीति नञ्भ्यां प्रकृत-स्थूलसूक्ष्मत्वादिधर्मवत् जडवस्तुतदवच्छिन्नजीव-वस्तुविलक्षणं ब्रह्मेति प्रतिपाद्यत इत्याह भग-वान्सूत्रकारः प्रकृतैतावत्त्वं निषेधति ततो विद्-धातिच भूय इति प्रकृते यत् स्थूलसूक्ष्मत्वादि-धर्मवद्वस्तु जडाजडवर्गः ब्रह्मगतं चैतावत्त्वं इदं इत्थं इयदिति परत्र वृत्तिप्रमितत्वंनेतिनेतीति-श्रुतिर्निषेधति नतु ब्रह्मणः उभयप्रकारत्वं ह्यस्पृ-ष्टाखिलदोषत्वमचिन्त्यापरिमितसार्वज्ञ्यादिधर्मवत्त्वं चेतिकुतः ततो ऽनन्तरम्भूयो ऽपरिमितं ब्रह्मण उभयगुणादीन् वदति प्रतिपादयतीत्यक्षरार्थः "अथात आदेशो नेति नेती" त्यादिना प्रकृतै-तावत्त्वं निषिध्य न ह्यस्मादिति नेत्यन्यत्परमस्ति अथनामधेयं "सत्यस्य सत्यं प्राणा वै सत्यं

तेषामेष सत्यमित्युत्तरत्र भूयस्त्वश्रवणात् तत्र
सत्यस्य परतन्त्रसत्ताश्रयस्य सत्यस्वतन्त्रसत्ताश्रयं
सत्यशब्दार्थं श्रुतिरेव स्पष्टयति प्राणा इति प्राण-
शब्दः प्राणावच्चेतनोपलक्षणार्थः तथाच प्राण-
स्तदवच्छिन्नाश्चेतनाः परतन्त्रसत्ताश्रयाः तेषां पर-
तन्त्रसत्ताकानां सत्यं स्वतन्त्रसत्यं चेतनादिवर्गादि-
यत्तावच्छेदेन निर्देश्यादत्यन्तविलक्षणं परं ब्रह्म-
निखिलहेयगन्धाघ्रातमाहात्म्यं समस्तकल्याण-
गुणैकार्णवमित्यर्थः "सर्वस्य वशी सर्वस्येशानः
संसारबन्धस्थितिमोक्षहेतुः अक्षरात्परतः पर
इत्यादिश्रुतिभ्यः एतदभिप्रायमादाय पूर्वाचार्यैर-
प्युक्तं नेतिनेति च निषेधिताश्रयस्तद्विशेषविषयोपि
सम्मत इत्यादिना तथैवाह भगवान्सनत्सुजातः
तस्यैव नामादिविशेषरूपैरिदं जगद्भाति महानु-
भावनिर्देश्यसम्यक्प्रचरन्ति वेदास्तद्विश्ववैरूप्य-
मुदाहरन्तीति विश्ववैरूप्यं स्थौल्यादिधर्मवतो
विश्वस्माद्विलक्षणमित्यर्थः अलं प्रासङ्गिकेन ननु
यदुक्तं सर्ववाक्यानां तुल्यबलत्वं तदयुक्तं भेद-
वाक्यानां प्रत्यक्षप्रामाण्यानुवादकत्वात् दुर्बलत्वं
अभेदवाक्यानां निरवकाशत्वात् प्रबलत्वं घट-

लिङ्गोपेतत्वाच्च स्वार्थपरत्वमिति चेन्न भूयो निरस्तत्वात् भेदस्याऽपि षट्लिङ्गोपेतवाक्य-गम्यत्वसाम्यात् किञ्चन तावत्प्रत्यक्षप्रमाणा-विषयत्वं भेदस्य सत्यं प्रत्युत घटो ऽस्ति पटो ऽस्ती-त्यादिप्रत्ययेषु घटाद्यधिष्टानभूताद्वितीयसन्मात्र-स्यैव प्रत्यक्षविषयत्वाङ्गीकृतत्वाद्विवरणाकारैः जीव-ब्रह्मभेदप्रत्यक्षादीनामप्रसरादित्यादिना तथात्वे चाद्वितीयसन्मात्रस्यैव घटाद्यधिष्ठानतया प्रत्यक्षा-वगतत्वेन तत्प्रतिपादकाभेदवाक्यानामेवानुवाद-कत्वं तव श्रीमुखेनैव सिद्धं प्राप्तार्थज्ञापकत्वाद्दुर्ब-लत्वं अन्यथास्वाभ्युपगतसिद्धान्तभङ्गात् तथात्वं नालोच्यते मनीषिभिः पण्डितम्मन्यैः किञ्च तथात्वे भेदस्य केनापि मानान्तरेणाप्राप्तत्वात् तद्विषयक-वाक्यानामेव प्राबल्यमितिपूर्वोक्तहेतोः स्वरूपा-सिद्धत्वमित्यर्थः ननु "अथयो ऽन्यां देवतामुपा-सते ऽन्यो ऽसावन्यो ऽहमस्मीति न स वेद यथा पशुः यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति इह नानेव पश्यति नान्योऽतो ऽस्ति द्रष्टा ॥ यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं

भवती"त्यादिना भेदनिन्दाश्रवणाद्दुर्बलत्वं भेद-श्रुतीनामिति चेन्न आपातोक्तेः न तावद्यो ऽन्यां देवतामितिश्रुतिविरोधः तस्या श्रीवासुदेवविश्वात्मे-तरोपासननिषेधपरत्वादिष्टतमो निषेधो ऽस्माकं श्रुत्यर्थश्च वेदान्तरत्नमञ्जूषायां पूर्वाचार्यैर्विस्तृतः "यो वै स्वां देवतामतियजति परस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवती"तिश्रुत्यन्त-दैक्यार्थात् "वासुदेवं परित्यज्य यो ऽन्यं देव-मुपासते तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ईश्वरो भगवान् विष्णुः परमात्मा सनातनः शास्ता चराचरस्यैको यतीनां परमागतिः ध्यायते ऽर्चयते यो ऽन्यां विष्णुलिङ्गं समाश्रितः कल्प-कोटिशतेनापि न गतिस्तस्य विद्यते ॥ अन्तवत्तु फलं तेषां देवान् देवयजो यान्ति आब्रह्मभुवनां-ल्लोका मामुपेत्य तु कौन्तेये"त्यादिस्मृतेश्च वेद-विद्भिरभिधीयते पशुर्योऽन्यदेवसमुपासक इतिपूर्वा चार्योक्तेश्च नाऽपि "यत्र त्वस्ये"ति श्रुतिविरोधः पूर्वमेवव्याख्यातत्वात् नापि "नेह नानेतिश्रुति-विरोधः तस्या उक्तलक्षणाकारणानेकनिषेधपरत्वात् इहशब्दस्यैवात्र निगमनात्वात् इह ब्रह्मणि सर्व-

दोषास्पृष्टमाहात्म्ये समस्तकल्याणगुणालये जगज्जन्माद्यभिन्ननिमित्तोपादानकारणे नानात्वं पश्यन्नित्यसंसारीभवतीति तात्पर्यार्थः "नाऽपि नान्योत"इतिश्रुतिविरोधः तथाहि अतः उक्तलक्षणात्सर्वान्तरात्मनः परब्रह्मणः श्रीपुरुषोत्तमादन्यो जीवक्षेत्रज्ञादिपदार्थः स्वतन्त्रसत्तावच्छिन्नो द्रष्टा नास्ति सर्वस्य तत्प्रयोज्यत्वेन करणसादृश्यात् नापि "यदाह्ये"वेति श्रुतिविरोधः तस्या उदरोपाधिविशिष्टब्रह्मोपासननिषेधपरत्वात् उदरं ब्रह्मेति शर्कराक्षा इतिश्रुतिप्राप्तोदरालम्बनप्रतीकरूपमन्तरं कुरुते यः तस्य भयं भवती"त्यर्थः शर्करापिहितदृष्टित्वादपरिच्छिन्नं न पश्यतीतिभावः "द्वितीयाद्वा" इत्यादिश्रुतिरपि स्वतन्त्रसत्ताकद्वितीयपदार्थमात्रनिषेधपरत्वेन नैराकाङ्क्षापरतन्त्रसत्ताकवस्तुनो भयहेतुत्वाभावात् सर्वं समञ्जसमिति यावत् किञ्च विश्वात्मा परब्रह्मसार्वज्ञादिधर्मनिलयः सर्वशक्तिः स्वतन्त्रसत्ताश्रयस्तत्पदार्थः तदात्मकश्चेतनस्त्वं पदार्थः उक्तलक्षणतत्पदार्थाभिन्नतदात्मकत्वं पदार्थावच्छिन्नसर्वान्तरात्मा वासुदेवस्त्वं पदार्थो ऽसीति तादात्म्योपदेशार्थः सच शक्यत्वा-

न्मुख्य एव ब्रह्मणः सर्वात्मत्वस्वतन्त्रसत्ताश्रयत्वा-
भ्यां सर्वशब्दवाच्यत्वात् ननु ब्रह्मणः श्रीपुरुषोत्त-
मस्य सर्वात्मनस्तत्पदार्थत्वेन विवादावसरः श्रौत-
त्वात् परन्तु जीवान्तरात्मनस्त्वं पदार्थत्वं ह्यघटितं
तस्य जीववाचकत्वेन प्रसिद्धत्वादितिचेन्न विश्वात्म-
त्वेन सर्वशब्दवाच्यत्वादेवेतिब्रूमः तथाहि यथा
"ऽग्नेर्ढगि"त्यत्राग्निशब्दोऽग्निशब्दस्यैव वाचकः "अ-
ग्नौ जुहोती"त्यत्र सएवाग्निशब्दो दाहकत्वादिधर्मा-
वच्छिन्नाग्निपरः एवं तस्योभयवाचकत्वं तावन्मुख्य-
मेव तयोः शक्यत्वादिति शाब्दिकानां राद्धान्तः
तथैव प्रकृतेऽपि सर्वेषाञ्चेतनाचेतनवस्तुमात्रवाच-
कानां तत्तत्पदार्थवाचकत्वेऽपितत्तत्पदार्थान्तरात्म-
भूतब्रह्मवाचकत्वमविरुद्धं ब्रह्मणः सर्वात्मत्वात् यथा
च चतुर्मुखादिशरीराणि तदवच्छिन्नास्तच्चेतपिता-
रश्च चतुर्मुखादिशब्दवाच्याः तेषां शक्या एव ते
तैः स्वशक्त्यैवाभिधीयन्ते इति निर्विवादः एवमेव
तेषां चतुर्मुखादि पिण्डतदवच्छिन्नक्षेत्रज्ञाभिधान-
परत्वेऽपि तत्तत्पदार्थान्तरात्मत्वाद्ब्रह्माभिधानपरत्व-
मपि सुशक्यं वक्तुमितिभावः एतदभिप्राय-
माश्रित्य वस्तुजातस्य ब्रह्मतादात्म्यमुद्घोषयन्ति

श्रुतयः "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मेतत् नारायणः परोध्याता ध्यानं नारायणः परः विश्वमेवेदं पुरुषः सर्वं खल्विदं ब्रह्म स ब्रह्मा स शिवः स ब्रह्मा स ईशानः ब्रह्मा च नारायणः शिवश्च नारायणः शक्रश्च नारायण" इत्यादिना ननु यदुक्तं ह्यग्निशब्दस्योभयपरत्वं तत्तु पाणिनिस्मृतिप्रमाणसिद्धत्वान्न विवादास्पदं प्रकृते तु प्रमाणाभावात् दृष्टान्तवैषम्यमिति चेन्न "नामानि सर्वाणि यमाविशन्ति सर्वे वेदा यत्पदमामनन्ति नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती वेदैश्च सर्वैरहमेव वेद्य" इत्यादिशास्त्रस्यैव मानत्वात् तत्सिद्धं भगवतः सर्वात्मत्वं विश्वस्यच तदात्मकत्वेन तादात्म्योपदेशार्हत्वमितिश्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः ब्रह्मात्मकत्वादिति वेदविन्मतमितिसम्प्रदायोक्तेः किञ्च परमात्माधीनस्थितिप्रवृत्तिकत्वेनाऽपि जगतस्तत्तादात्म्योपदेशो वक्तुं शक्यः यद्यदायत्तस्थितिप्रवृत्तिकं तत्तादात्म्योपदेशार्हमिति व्याप्तिराम्नायते छान्दोग्यैः प्राणसम्वादे"न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाचक्षते प्राणो

ह्येवैतानि सर्वाणि भवन्ती"त्यादिना किञ्च ब्रह्म-व्याप्यत्वेनापि वस्तुजातस्य तत्तादात्म्यं सूपपन्नं "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयते ऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ मया ततमिदं सर्व"मितिश्रुतिस्मृत्योस्तत्र मान-त्वात् "यो ऽयं तवागतो देव समीपे देवतागणः सत्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् सर्वं समाप्नोषि ततो ऽसि सर्व इति तादात्म्यघटकस्मृतेः एवं ब्रह्मणः स्वतन्त्रसत्ताश्रयत्वात् चेतनाचेतन-योश्च परतन्त्रसत्तावच्छिन्नस्वरूपत्वात् भेदः इतरे-तरात्यन्तवैलक्षण्यात् तत्र चेतनस्याऽणुत्वेन निर्दे-शार्हत्वं ज्ञानादिगतधर्मसङ्कोचादियोगाच्च अचेत-नस्य च स्थूलत्वादिना परिणामादिविकारवत्वात् ब्रह्मणस्तु तयोर्वैलक्षण्येनैव स्वरूपगुणादिभिर्नित्य-निर्दोषत्वात् "अस्थूलमनणिव"त्यादिश्रुतेः एतेन भोक्तृभोग्यनियन्तृगतस्वाभाविकभेदनिर्णयेन चेत-नानामपीतरेतरभेदो बोध्यते "चेतनश्चेतनानां अजो ह्येको जुषमाणो ऽनुशेते जहात्येनां भुक्त-भोगामजो ऽन्य" इत्यादिश्रुतेः तथैवाभेदोऽपि स्वाभाविकः ब्रह्मणः सर्वात्मत्वनियन्तृत्वव्यापकत्व-

स्वतन्त्रसत्त्वसर्वाधारत्वयोगात् "एषसर्वभूतान्त-रात्मा अन्तःप्रविष्टः अन्तर्बहिश्च आत्माहिपरमः स्वतन्त्रो ऽधिगुणाः तस्मिंल्लोकाः श्रिताः सर्वेइत्यादि-श्रुतिभ्यः तयोश्चब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्व-तदधीनसत्त्वतदाधेयत्वादियोगेन तदपृथक्सिद्ध-त्वादभेदोऽपि स्वाभाविक इतिसिद्धं किञ्च चेतना-चेतनरूपं जगत् ब्रह्मपृथक्सिद्धियोग्यं ब्रह्मात्म-कत्वात् मृद्धटादिवत् तन्नियम्यत्वात् जीवशरीरवत् तद्व्याप्यत्वादाकाशघटादिवत् तदधीनत्वात् प्राणा-यत्तेन्द्रियवर्गवत् तदाधेयत्वात् भूतभौतिकवदित्या-द्यनुमानान्यपि पूर्वोक्तश्रुतिमूलकान्यत्रानुसन्धेयानि "एतदात्म्यमिदं सर्व"मितिश्रुतेः "वासुदेवात्म-कान्याहुः क्षेत्रं क्षेत्रज्ञ एव चेतिस्मृतेश्च एतदुक्तं भवति यथा घटो द्रव्यं पृथिवीद्रव्यमित्यादौ द्रव्यत्वा-वच्छिन्नेन सह घटत्वावच्छिन्नपृथिवीत्वावच्छिन्नयोः सामानाधिकरण्यं मुख्यमेव विशेषस्य सामान्या-भिन्नत्वनियमात् एवं प्रकृते ऽपि सार्वज्ञ्याद्यनन्ता-चिन्त्यापरिमितविशेषावच्छिन्नेनापरिच्छिन्नशक्ति-विभूतिकेन तत्पदार्थेन परब्रह्मणा स्वात्मकचेतना-चेतनत्वावच्छिन्नयोस्तदात्मकरूपयोस्त्वमादिपदार्थ-

योः सामानाधिकरण्यं मुख्यमेवेति सुव्यक्तं एतदर्थकानि "तत्त्वमस्ययमात्मा ब्रह्मे"त्यादीनिसमानाधिकरणबोधकानि श्रौतवाक्यानि "क्षेत्रज्ञं चापि मां विद्धि सदसच्चाहमर्जुन मत्तः सर्वमहं सर्वे मपि सर्वं सनातने सकलमिदमहञ्च वासुदेव" इत्यादिस्मृतिवाक्यान्यप्यनुसन्धेयानि श्रेयोऽर्थिभिर्मनीषिभिः तस्मात् स्वभावतो हेयगन्धाघ्रातमाहात्म्यदिक्कटे ऽचिन्त्यानन्तस्वाभाविककल्याणगुणशक्तिवैभवेपरब्रह्मणिभगवति श्रीपुरुषोत्तमे वेदान्तानां समन्वय इतिसाम्प्रदायोराद्धान्तः अथ किं वा भेदाभेदस्वरूपमभिप्रेतमित्यत्र केचित् एकमेव स्वाभाविकानन्तसार्वज्ञ्यादिधर्माश्रयं ब्रह्म ह्यनादिनित्योपाधिना जीवभावमापद्यते तत्त्वमस्यादिनोपदिष्टाभेदज्ञानाच्च मुच्यते तथा चौपाधिकभेदनिवृत्तिफलकमभेदविषयकं ज्ञानं वेदान्तैरुपदिश्यते तथा चौपाधिको भेदो वस्तुतो ऽभेद इतिवेदान्तशास्त्रार्थ इति वदन्ति तत्तुच्छं असम्भवेन विकल्पासहत्वात् तथाहि किमुपाधिनाछिन्नो ब्रह्मखण्डो ऽणुरूपो जीवः उताच्छिन्न एवाणुरूपोपाधिसम्वलितो ब्रह्मप्रदेशविशेषः उतोपाधिसंयुक्तं

ब्रह्मस्वरूपं उतोपाधिसंयुक्तं चेतनान्तरं अथोपाधि-रेवेति विवेचनीयं नाद्यः ब्रह्मणो च्छेद्यत्वात् अन्यथा निरवयवश्रुतिव्याकोपात् जीवस्य सादित्वापत्तेस्तद्विषयकाजत्वादिशास्त्रबाधाच्च एकस्य द्वैधीकरणं हि छेदनं तथाच जीवानां तवाप्यसङ्ख्येयत्वाभ्युपगमेनासङ्ख्येयखण्डं ब्रह्मैव स्यात् नापि द्वितीयः ब्रह्मण एव प्रदेशविशेषे उपाधिसम्बन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः किञ्चोपाधौ गच्छति सति उपाधि ना स्वावच्छिन्नब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तप्रदेशभेदात् क्षणे क्षणे बन्धमोक्षौ स्यातां आकर्षणे चाच्छिन्नत्वनिरवयवत्वसर्वगतत्वादिभङ्गात् किञ्चाच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां जीवानां ब्रह्मण एव प्रदेशत्वेनैकत्वप्रतिसन्धानं स्यात् प्रदेशभेदादप्रतिसन्धानमितिपक्षे एकस्याऽपि स्वोपाधौ गच्छति सति सएवाह*मितिप्रतिसन्धानं न स्यात् नाऽपि तृतीयः ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापातात् तदतिरिक्तानुपहितब्रह्मासिद्धिश्च स्यात् सर्वेषु देहेष्वेक एव जीवः स्यात् नापि

---

* ब्रह्मैवाहमितिनस्यात्प्रदेशभिन्नत्वात् ।

चतुर्थः ब्रह्मणो ऽन्य जीव इति जीवगतमौपाधिकत्वं परित्यक्तं स्यात् परपक्षप्रवेशाच्चनापिचरमः चार्वाकपक्षाभ्युपगमः अथोपाधिनाब्रह्मणोजीवभावेसार्वज्ञ्यादिधर्मा आच्छादिताः स्वरूपं वा नाद्यः असम्भवात् तथाहि सार्वज्ञ्यादयः स्वाभाविकाधर्मा औपाधिकावानान्त्यः औपाधिकत्वेउपाधेःसत्त्वमसत्त्वं वा सत्त्वेऽपि ब्रह्मभिन्नत्वमभिन्नत्वं वा भिन्नत्वे ऽपि स्वप्रयुक्तत्वमन्यप्रयुक्तत्वं ब्रह्मप्रयुक्तत्वं वा नाद्यः आत्माश्रयात् न द्वितीयः अनवस्थानात् न तृतीयः अन्योऽन्याश्रयात् प्रयोजकस्यनित्यत्वेनानिवृत्तिप्रसङ्गाच्च अभिन्नत्वेचौपाधिकभेदासिद्धेः उपाधिर्ब्रह्मेतिसामानाधिकरण्यघटितप्रतीत्यापत्तेश्चनाप्यसत्यः परमतप्रवेशापत्तेः अनङ्गीकाराच्च अथ स्वाभाविकत्वपक्षे तेषां स्वरूपभिन्नत्वमभिन्नत्वं वा भिन्नाभिन्नत्वं वा अत्यन्तभेदे शास्त्रविरोधः एवं गुणान् पृथक् पश्यन्नित्यादिनिषेधश्रवणात् नाभिन्नत्वं ब्रह्मणा तेषां सामानाधिकरण्यापत्तेः तथात्वे च "आनन्दं ब्रह्मणो विद्वान् ॥ परा ऽस्य शक्ति"रितिव्यधिकरणश्रुतिव्याकोपात् नापि चरमः स्वाभाविकभिन्नानां ह्यत्र-

रणासम्भवात् अस्मत्पक्षप्रवेशाच्च अन्यथा स्वरू-
पस्यावरणापत्तेः स्वरूपावरणाङ्गीकारपक्षे तु सार्व-
ज्ञ्यादिहानेः किञ्चोपाधेरपि सत्त्वनित्यत्वाभ्यां
अनिवृत्तिप्रसङ्गात् किञ्चोपाधि सहेतुको निर्हेतुको
वा नाद्यः अनवस्थानात् नान्त्यः मुक्तस्याऽपि
पुनर्बन्धप्रसङ्गात् किञ्च ब्रह्मणः सार्वज्ञ्यादयो-
व्याप्यवृत्तयः उत संयोगवदेकदेशवृत्तयः आद्ये
सर्वज्ञस्य सर्वस्यापि बन्धयोगेनिर्मोक्षप्रसङ्गो जग-
दान्ध्यापत्तिश्च द्वितीये तद्गुणानां परिच्छिन्नत्वेन
किञ्चित्करत्वापत्तेः मायावादपक्षप्रवेशापत्तेश्च
किञ्च मोक्षावस्थायां जीवः स्वरूपेण तिष्ठति न
वा नाद्यः उपाधिविगमेऽपि जीवस्वरूपस्य विद्य-
मानताङ्गीकारे औपाधिकभेदवादो दत्ततिलाञ्जलिः
स्यात् स्वरूपेणैव भेदोऽङ्गीकृतः नद्वितीयः स्वरूप-
नाश एव मुक्तस्वरूपं स्यात् तथात्वे च प्रच्छन्न-
बाह्यात् मायावादिनः को वा विशेष इति त्वयैव
चिन्तनीयः तैर्जीवेशयोरुभयोरपि स्वरूपनाशो
ऽभ्युपगम्यते भवद्भिस्तु जीवमात्रस्वरूपनाश इत्ये-
तावति भेदेऽपि जीवस्वरूपनाशः समान एवेत्यर्थः
अथ परैरपि विवरणेन तावद्ब्रह्मणो जातिव्यक्ति-

भावो गुणगुणिभावः कार्यकारणभावो विशिष्ट-स्वरूपत्वमंशांशिभावो वा विद्यते मानाभावात् नच तदभावे भेदाभेदौ दृश्येते नच "ममैवांशो जीव-लोक" इतिस्मृतेरंशांशितेति वाच्यं "निष्कलं निष्क्रिय"मिति निरंशत्वप्रतिपादकश्रुतिविरोधात् "पादो ऽस्य विश्वाभूतानीतिश्रुतिर्नांशांशिभावं ब्रूते किन्तु ब्रह्मानन्त्यप्रतिपादनाय जीवस्याल्पमात्रत्व-माह अन्यथा सांशस्य ब्रह्मणो घटादिवदवयवार-भ्यत्वप्रसङ्गात् ननु स्वाभाविकीनिरवयवता बुद्ध्या-द्युपाधिनिमित्तं सांशत्वमितिनोक्तदोष इति चेन्न एव-मपि वास्तवाभेदो न सिद्ध्येत नहि निरवयवमा-काशं खड्गधारादिभिर्वस्तुतो भेत्तुं शक्यं अथान्तः-करणोपाधीनां वस्तु ब्रह्म दारणसामर्थ्यमस्ति तर्हि ब्रह्म स्वस्यानर्थाय कथमुपाधीन् सृजेत् नच जीवार्था तत्सृष्टि तत्सृष्टेः प्राग्जीवविभागासिद्धेः नच कर्माविद्यासंस्कारा अन्तःकरणोत्पत्तेः प्राग-विद्यमाना अपि जीवं विभजन्ते अन्तःकरण-द्रव्यस्यैव जीवोपाधित्वाङ्गीकारादित्यादिना बहुशो निरस्तत्वाच्च तस्माद्दुरुपपादोऽयं ह्यौपाधिकभेदाभेद-वाद इतिसङ्क्षेपः वस्तुतस्तु स्वाभाविकस्यैव भेदस्य

श्रौतत्वात् सूत्रकाराभिप्रेतत्वं तथाहि चेतना-
चेतनयोर्ब्रह्मणा भेदाभेदश्च कथं सम्भाव्यः दुरुप-
पन्नत्वादित्याशङ्क्य समाधत्ते सूत्राभ्यां तत्र तावद-
चेतनस्य ब्रह्मणा भेदाभेदः सूपपन्न इत्याह
"उभयव्यपदेशात्त्वहिकुण्डलवदि"ति "अचेतनस्य
उभयव्यपदेशात् हन्ताहमिमास्तिस्रो देवते"ति-
भेदव्यपदेशः "सर्वं खल्विदं ब्रह्म ॥ तज्जलानिति ॥
ब्रह्मैवेदं सर्व"मित्यादिना चाभेदव्यपदेशः तस्मा-
दुभयव्यपदेशाद्धेतोर्भेदाभेद एव शास्त्रार्थः उभय-
विधशास्त्राविरोधात् अन्यथा चैकतरस्यावश्यंवाध
इत्यर्थः ननु भेदाभेदयोरितरेतरात्यन्तविरोधात्कथ-
मेकत्र स्थितिरित्याशङ्क्याह दृष्टान्तमुखेन अहि-
कुण्डलवदिति यथा कुण्डलावस्थापन्नस्याहेः
कुण्डलं व्यक्तापन्नत्वात् प्रत्यक्षप्रमाणगोचरं तद्भे-
दस्य स्वाभाविकत्वात् लम्वायमानावस्थायां तु
सर्पायत्तावच्छिन्नस्वरूपेण कुण्डलस्य तत्र सत्वेऽपि
अव्यक्तनामरूपतापत्त्या प्रत्यक्षागोचरत्वं सर्वा-
त्मकत्व तदाधेयत्वतद्व्याप्यत्वादिना तदपृथक्सिद्ध-
त्वादभेदस्यापि स्वाभाविकत्वमुभयोरपि स्थूल-
सूक्ष्मावस्थयोरनुगतत्वात् भिन्नाभिन्नत्वे तथा

स्थूलावस्थापन्नस्य कार्यस्य कारणायत्तपरतन्त्र-
सत्तावच्छिन्नस्वरूपेण भेदसद्भावेन प्रत्यक्षप्रमाण-
विषयत्वं व्यक्तनामरूपत्वात् अव्याकृतावस्थायां
तु वीजेऽङ्कुरस्येव कार्य्यस्य कारणे सूक्ष्मस्वरूपेण
प्रत्यक्षागोचरत्वेऽपि सद्भावएवाऽव्यक्तनामरूपत्वात्
अत उभयावस्थायामपितदात्मकत्वतदाधेयत्वत-
दायत्तसत्ताकत्वादिना तदपृथक्सिद्धत्वेनाभिन्नत्वे
ऽपि परतन्त्रसत्तावच्छिन्नतदात्मीयस्वरूपेण भिन्न-
त्वमपिस्वाभाविकमेवेतिसङ्क्षेपः अग्रेविस्तरिष्य-
माणत्वात् केचित्तुइदंसूत्रजीवात्मभेदाभेदपरत्वेन
व्याख्याय अहिकुण्डलवदितिपक्षे जीवस्यावस्था-
रूपस्य नित्यत्वप्रसक्तिरित्यनित्यत्वं प्रतिपादयन्तो
दूषयन्ति तत्तुच्छं तस्योक्तरीत्याजीवभेदाभेदपरत्वा-
भावात् अचेतनस्यावस्थापत्तिरूपानित्यत्वं सर्व-
सम्मतत्वात् अस्माकमपीष्टमेवेति अन्येतु ब्रह्मणः
संस्थानविशेषएवाचिद्वस्तूनीति सूत्रं व्याख्याय
एकस्यैव द्रव्यस्यावस्थाविशेषयोगेऽपि ब्रह्मस्वरूप-
स्यैवाचिद्रूप्यरूपत्वादानिर्मोक्षप्रसङ्ग इतिस्वबुद्ध्यु-
त्प्रेक्षितं भावयन्ति तत्तुच्छतरं स्वरूपपरिणामा-
नङ्गीकारात् असम्भवाच्च यदि स्वरूपपरिणामः

केन चिदङ्गीकृतः स्यात्तर्हि तन्मते भवतु भवदुक्त-
दोषयोगोनास्माकमसूयाविषयः तस्यादनाकलित-
सिद्धान्तत्वात् बालभाषितैवैषा सम्भावनेति
सङ्क्षेपः एवमचेतनस्य ब्रह्मभिन्नाभिन्नत्वप्रकारं
निरूप्य चेतनस्यापि तत्त्वं प्रतिपादयति "प्रकाशा-
श्रयवद्वातेजस्त्वात्" वाशब्दो ऽतिदेशार्थः पूर्वोक्ता-
चेतनवच्चेतनस्या ऽपि ब्रह्मणा भिन्नाभिन्नत्वं दर्श-
यति कुतः उभयव्यपदेशादित्यनुवर्त्तते "ततस्तु तं
पश्यति निष्कलं ध्यायमान" इतिध्यातृध्येयत्वेन
द्रष्टृदृश्यत्वेन च "ब्रह्मविदाप्नोति परं परात्परम्पुरुष-
मुपैति दिव्य"मितिप्राप्तृप्राप्यत्वेनच "य आत्मा-
नमन्तरोयमयतीति"नियन्तृनियम्यत्वेन च स्वाभा-
विकस्य भेदस्य व्यपदेशात् "तत्त्वमस्यहं ब्रह्मास्मि
अयम् आत्मा ब्रह्मे"त्यादिनाच स्वाभाविकाभेदस्य
व्यपदेशाच्च भिन्नाभिन्नत्वमिति अधिकशङ्कातु यदि-
पूर्वदृष्टान्तेन चेतनस्य भिन्नाभिन्नत्वं तर्हि अचेतन-
वदवस्थाभाक्त्वमङ्गीकृतं स्यादिति तन्निरासयन्
दृष्टान्तान्तरमाह प्रकाशाश्रयवदिति यथा सूर्यादि-
प्रकाशः प्रभारूपः स्वाश्रयात्सूर्यादेर्भिन्नतया प्रत्य-
क्षेणोपलभ्यते स्वाभाविकभेदवत्त्वात् तदाधेयत्व-

तदात्मकत्वादिभिश्च हेतुभिस्तदविनाभावात् अभिन्नत्वमपि प्रत्यक्षादिमानसिद्धमेवातोऽभेदस्याऽपि स्वाभाविकत्वमिति तद्वत्प्रत्यगात्मनामपि परतन्त्रसत्तावच्छिन्नब्रह्मात्मीयस्वरूपत्वेन स्वभावादेव भिन्नत्वेऽपि तदात्मकत्वतदाधेयत्वतद्व्याप्यत्वादिभिर्हेतुभिस्तदविनाभावादभिन्नत्वमपि स्वाभाविकमेवेति न केनापि वाक्येन विरोधलेशस्य सम्भावनेतिभावः तत्रहेतुमाह तेजस्त्वादिति उभयोरपि तेजोरूपत्वात् गुणतोऽप्यभेदः सम्भवतीत्यर्थः ननु सवितृप्रकाशपक्षे ऽप्याधाराधेयभावः प्रत्यहमुदयास्तमयौ भवत इतिचेदित्याहुरेके तत्तुच्छं आधाराधेयभावस्य शास्त्र प्रमाणसिद्धत्वेनेष्टापन्नत्वात् "यस्मिंल्लोकाः श्रिताः सर्वे तदनात्येति कश्चन यस्मिन् द्यौश्च पृथिवीचान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैरि"त्यादिश्रुतेः "द्युभ्वाद्यायतनंस्वशब्दादि"तिसूत्रात् "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेति"स्मृतेश्च नाप्युदयास्तमयौ दोषौ वक्तुं शक्यौ तदंशेदृष्टान्ताभावात् नहि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तसाजात्यसम्भवात् सर्वसारूप्यस्य केनापि दर्शयितुमशक्यत्वाच्च किञ्च सर्वथैव

सारूप्ये दृष्टान्तदार्ष्टान्तिकभावस्यैवोच्छेदप्रसङ्गात् ब्रह्मणोऽप्यनित्यसादृश्यदर्शनादनित्यत्वापत्तेश्च ॥ सर्वेष्वपि पक्षेषु अतिप्रसङ्गस्य दुर्वारत्वादिति-सङ्क्षेपः केचित्तु प्रभा तदाश्रययोरिवाचिद्ब्रह्मणो ब्रह्मत्वजातियोगमात्रं विवक्षितमेव तर्ह्यश्वत्व-गोत्ववद्ब्रह्माऽपि परमेश्वरे चिदचिद्वस्तुनोश्चानुवर्त-मानं सामान्यमेव स्यादिति श्रुतिस्मृत्यादिव्यव-हारविरोधप्रसङ्गात् तस्मादंशो नानेत्यत्र पूर्वोक्त-प्रकारेण जीववत् पृथक् सिद्ध्यनर्हविशेषणतया ऽचिद्वस्तुनो ब्रह्मांऽशत्वं विशिष्टवस्त्वेकदेशत्वेना-भेदव्यवहारो मुख्यः विशेषणविशेष्ययोः स्वरूप-स्वभावभेदेन भेदव्यवहारो मुख्यः ब्रह्मणोनिर्दोषत्वं च रक्षितं तदेवं प्रकाशजातिगुणशरीराणां मणि-व्यक्तिगुणयात्मनः प्रत्यपृथक्सिद्धलक्षणविशेषण-तया यथांशत्वं तथेह जीवस्याचिद्वस्तुनश्च ब्रह्म-प्रत्यंशत्वं विशेषणविशेषत्वेनैवांशांशिभाव इत्यर्थ इत्याहुस्तदसम्यक् विशेषणानुपपत्तीनां पूर्वमेव विस्तृतत्वात् यदप्युक्तं विशिष्टवस्त्वेकदेशत्वेना-भेदव्यवहारो मुख्यः विशेषणविशेष्ययोः स्वरूप-स्वभावेन भेदव्यवहारो मुख्य इति तदपि दुराग्रह

मात्रम् भेदाभेदव्यवहारयोः मुख्यत्वेन भेदाभेद-योश्च स्वाभाविकतया ऽभ्युपगम्य भूयो विशिष्ट-त्वाङ्गीकारस्य गौरवमात्रत्वात् भेदाभेदे एव पर्य-वसानात् लाघवाच्च नापि प्रकाशजात्यादिदृष्टान्तो ऽत्र प्रमाणाभावमापद्यते वैषम्ययोगात्तथाहि प्रका-शमण्यादौ जातिव्यक्त्यादौ विशेषणविशेष्यभावे सत्त्वेऽपि अंशांशित्वव्यवहारादर्शनात् असम्भ-वाच्च तस्मादात्मात्मीयादिभावेनैवांशांशित्वोक्तिः सूपपन्नेत्यलम्विस्तरेण तस्माद्ब्रह्मणश्चेतनयोश्च भिन्नाभिन्नलक्षण एव सम्बन्धो वेदान्तशास्त्रप्रति-पाद्य इतिसिद्धं तथा श्रुतयः "एकः सन् बहुधा विचचार ॥ देवो बहुधा सन्निविष्टः त्वमेको ऽसि बहुधा बहून् प्रविष्ट" इत्यादयः एताभिश्च भेदाभेद-शब्दस्य व्युत्पत्तिरपिदर्शिता तथाच भेदे सत्ये-वाभेदो भेदाभेद इति तथाचाह भगवान्मनुः "एकत्वे सति नानात्वं नानात्वे सति चैकता अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हती"ति श्रीमुखेनाप्याह एकत्वेन पृथक्त्वेन बहुधा विश्वतो-मुख"मितिहरिवंशे घण्टाकरणोऽपि "केचिद्बहुत्वेन वदन्ति देवमेकात्मना केचिदमुं पुरातनं वेदान्त-

संस्थापितसत्त्वयुक्तं द्रष्टुं तमीशं वयमुद्यताः स्म अनेकमेकं बहुधा वदन्ति श्रुतिस्मृतिन्यायनिविष्ट-चित्ताः आहुर्यमात्मानमजं पुराणं द्रष्टुं तमीशं वयमुद्यताः स्मे"त्यादिस्मृतयश्च उभयथा भान-मपि श्रुतिमुखेनैव सूपपन्नम् "एष ते आत्मा एष सर्वभूतान्तरात्मा सर्वव्यापी सर्वभूतान्तरात्मे" त्यादिश्रुतिभिरात्मात्मीयसम्बन्धश्रवणात् एष एव तादात्म्यसम्बन्ध उच्यते "ऐतदात्म्यमिदं सर्वं तत्त्वमसी"त्यादि श्रुतेः तदेव जगदुपादानं निमित्तं चेति पूर्वमेव लक्षणसूत्रेण प्रतिपादितमितिसङ्-क्षेपः ननु यदुक्तं ब्रह्मण उभयविधकारणत्वं तद्‌-रुक्तं असम्भवात् लोके कर्त्तुः कुलालादेरुपादान-द्रव्यादत्यन्तभेददर्शनात् किञ्च "मायां तु प्रकृतिं विद्यात् ॥ गौरनाद्यन्तवती"त्यादिश्रुतौ "मया ध्यक्षेण प्रकृतिः सूयते" इतिस्मृतावप्युभयोर्भेद-व्यपदेशात् तस्माल्लोकभेदविरोधान्निमित्तकारण-मात्रमेवेत्यङ्गीकर्त्तव्यमित्याशङ्क्य समाधत्ते प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात् चकारो निमित्तसमुच्च-यार्थः प्रकृतिरुपादानं निमित्तं च ब्रह्मैव न निमित्त-मात्रं कुतः प्रतिज्ञादृष्टान्तानुपरोधात् प्रतिज्ञाच्च

दृष्टान्तश्च तयोरनुपरोधात्सामञ्जस्यात् तत्र "येना श्रुतं श्रुतं भवती"त्यादिप्रतिज्ञा "यथैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादि"त्यादिदृष्टान्तश्च तयोर्ब्रह्मण उपादानत्वाङ्गीकारे एवानुपरोधो ऽन्यथा वाध इत्यर्थः नहि कुलालादिविज्ञानेन मृन्मयज्ञानं जायते अपि तु मृत्पिण्डादिद्रव्यज्ञानेनेतिभावः "अभिध्योपदेशाच्च" सो ऽकामयत वहु स्यां प्रजायेय तदैक्षत वहु स्यां प्रजायेयेतिवहुभवनसङ्कल्पोपदेशादपि उभयप्रकारं ब्रह्मेत्यर्थः तत्र तदैक्षतेतिस्रष्टृत्वं वहुस्यामित्युपादानत्वमितिविवेकः किञ्च साक्षाच्चोभयाम्नानात्" इतश्चोभयविधकारणं ब्रह्म यतः साक्षान्निमित्तत्वमुपादानत्वं च तस्याम्नायते "किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवीनिष्ठतक्षुर्मणीषिणो मनसा पृच्छयते एतद्यदध्यतिष्ठत् भुवनानि धारयन् ब्रह्म वनं ब्रह्म वृक्ष आसीद्यतो द्यावापृथिवीनिष्ठतक्षुर्मनीषिणो मनसा विब्रवीमि वः ब्रह्माध्यतिष्ठत् भुवनानि धारय"न्नित्यादिना किञ्चात्मकृतेः परिणामात् तदात्मानं "स्वयमकुरुतेति सृष्टेः कर्तृत्वं कर्मत्वं च ब्रह्मणः श्रूयते तत्राव्याकृतरूपेण कर्तृत्वं व्यक्त-

नामरूपत्वेन च कर्मत्वं कार्यकारणयोस्तादात्म्यात्
तत्र हेतुः परिणामात् परिणामो ऽत्रशक्तिविक्षेप-
रूपो नतु स्वरूपपरिणामस्तस्मान्न विकारसम्भाव-
नावकाश इति एतदर्थस्याग्रे विस्तरिष्यमाणत्वात्
"यथोर्णनाभि"रित्यादिश्रुतेः किञ्च "योनिश्च हि
गायते" इतश्च ब्रह्म जगत उपादानं निमित्तं च
यस्माज्जगद्योनित्वेनाम्नायते कर्त्तारमीशं पुरुषं
ब्रह्मयोनिं परिपश्यन्ति धीराः एषयोनिः सर्वस्ये"
त्यादिश्रुतिभिः योनिशब्दस्य चोपादाने शक्तिः
सुप्रसिद्धेतिभावः एतेन सर्वे व्याख्याताःव्याख्याताः
एतेन समन्वयाऽध्यायोक्ताधिकरणसमुदायेन सर्वे-
प्युक्तानुक्तकारणप्रतिपादनपराः वेदान्ताव्याख्याता
भवन्तीति शेषः पदाभ्यासो ऽध्यायसमाप्तिं द्योत-
यतीति तस्मात्सर्वज्ञानशक्तिबलैश्वर्याद्यनन्तगुणा-
दिनिलये निःशेषदोषगन्धाघ्रातसीम्नि परब्रह्मणि
श्रीपुरुषोत्तमे वेदान्तानां समन्वय इतिसिद्धं "यः
सर्वज्ञः सत्यकामःपराऽस्य शक्तिर्विविधैव य
आत्मा ऽपहतपाप्मे"त्यादिश्रुतिभ्यः "वेदाऽहं सम-
तीतानि ॥ अहं सर्वस्य प्रभव" इत्यादिस्मृतेश्च
यदि सर्वज्ञानशक्त्याद्याश्रयः परब्रह्मभूतो मुकु-

न्दाख्यः जगद्धेतुर्नस्यात् प्रतिनियतदेशकालादि-
क्रिया तत्फलादिसिद्धिर्न स्यात् प्रतिनियतकालको-
किलाद्युत्पत्तिः प्रतिनियतकालमम्बुदादिगर्जनादिः
प्रतिनियतब्राह्मणादिवर्णाश्रमक्रियादिः प्रतिनि-
यतस्वर्गलोकादिषु सुखं नरकादिषु दुःखं च न
स्यात् किञ्च मनसाऽप्यतर्क्यरचनस्य जगतस्त-
द्रूपैकदेशवृत्तिविविधनाडीजालादिसन्निवेशविशिष्ट-
रचनशरीरस्य चोत्पत्तिर्न स्यादित्यादिकाः शास्त्रैक-
मूलाऽनुकूलतर्काश्चाऽत्रानुसन्धेयाः "गुणालयो वेद-
शिरस्समन्वितः श्रीमन्मुकुन्दो नवनीतचौरकः
सनत्कुमारादिपदाम्बुजाश्रितं समाश्रितानां भग-
वांस्तनो तु शम् ॥ १ ॥

इतिश्रीमाधवमुकुन्दचरणेन विरचिते परपक्ष-
गिरिवज्राख्ये शारीरकहार्दसञ्चये
समन्वयाऽध्यायः समाप्तः ।

---

हरिः ॐ ।

श्रीमतेनियमानन्दायनमः ।

# परपक्षगिरिवज्रः ।

## द्वितीयोऽध्यायः ।

एवं प्रथमाध्याये वेदानां निखिलदोषास्पृष्ट-माहात्म्यसीम्नि अचिन्त्यानन्तयावदात्म्यवृत्ति-स्वाभाविकासङ्ख्येयसार्वज्ञ्यादिसद्गुणार्णवे ऽनन्ता-चिन्त्यशक्तौ जगत्कारणे ब्रह्मणि श्रीवासुदेवे भगवति समन्वयः सङ्गृहीतः अथ द्वितीयाध्या-यार्थः तत्र तावत् स्मृत्यविरोधो निरूप्यते भगवता सूत्रकारेण सच सम्प्रदायानुसारेणात्र समस्यते मुमुक्षुजनोपकाराय "स्मृत्यनवकाशदोषप्रसङ्ग इति-चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गादि"ति पूर्वत्र ब्रह्मणो ऽन्यप्रमाणागोचरतया वेदैकवेद्यत्वं निर्णीतं अतीन्द्रियत्वात् "नेन्द्रियाणि नानुमान"मिति-श्रुतेश्च एवं श्रुत्यर्थस्य तदुपबृंहणोपयिकस्मृतिं

विना दुर्ग्रहत्वात् स्मृतयो प्यऽवश्यमपेक्षिताः तथाच श्रुत्युपबृंहणाय साङ्ख्यादिस्मृतिर्ग्राह्या मन्वादिस्मृतिर्वेति विषये पूर्वपक्षमाह स्मृत्यनवकाशदोषप्रसङ्ग इतिचेदिति मन्वादिस्मृतीनां स्वर्गाद्यभ्युदयफलकाग्निहोत्रज्योतिष्टोमादिनित्य-नैमित्तिकादिधर्मप्रतिपादनेन सावकाशतया कृतार्थत्वात् "ऋषीन्द्रंप्रसूतं कपिल"*मितिशास्त्रसंस्तुत्यमहर्षिप्रणीतसाङ्ख्यस्मृतिः केवलपरतत्त्वप्रतिपादनपरत्त्वात्तदनुसारेणैव वेदान्तशास्त्रमपि व्याख्येयं अन्यथा तस्या अन्यत्र निरवकाशतया वाधरूपदोषापत्तेरिति अयं तेषां पक्षः "मूलप्रकृतिरविकृतिर्महादाद्याः प्रकृतिविकृतयः सप्तषोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष" इति तत्त्वसङ्ग्रहवाक्यं अस्यार्थः मूलप्रकृतिः प्रधानमजत्वात् महदहङ्कारौ पञ्चभूतानि सूक्ष्माणि तन्मात्राख्यानि सप्तमहदाद्याः प्रकृतिविकृतय इतितत्त्वान्तरोपादानत्वात्प्रकृतित्वं महतो बुद्धिसंज्ञस्याऽहङ्कारं प्रत्युपादानत्वात्प्रकृतित्वं प्रधानापेक्षयात

---

* ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येदिति ।

त्कार्यत्वाद्विकृतित्वं तथैवाहङ्कारादीनामपि स्वस्वकार्यापेक्षया प्रकृतित्वं स्वस्वकारणापेक्षया विकृतित्वं एकादशेन्द्रियपञ्चमहाभूतसमुदयस्य विकृतित्वं मेवेति पुरुषस्तु कूटस्थ एव उभयत्वायोगादिति एवं प्राप्ते राद्धान्तः "नान्यस्मृत्यनवकाशदोषप्रसङ्गा"दिति नेति पूर्वपक्षनिषेधपरः पूर्वपक्षोक्तिर्न युक्ता कुतः अन्यासां मन्वादिस्मृतीनां ब्रह्मकारणप्रतिपादिकानां श्रुतिमूलकानां अनवकाशत्वेन बाधरूपदोषापत्तेः तथा चाह भगवान्मनुः "महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः अप एव ससर्जादौ तासु वीर्यमवासृजदि"त्यापस्तम्बश्च "पूःप्राणिनः सर्व एव गुहाशयस्याहन्यमानस्य विकल्मषस्य तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः सुनित्य" इत्यादिभारते च "नारायणो जगन्मूर्तिरनन्तात्मा सनातनः तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे" त्यादिभगवद्गीतायां च "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथेति" एतासां बाधः स्यादित्यर्थः ननु तासां

धर्मप्रतिपादनेन नैराकाङ्क्ष्यादितिचेन्न शास्त्रप्रति-
पाद्यश्रीपुरुषोत्तमज्ञानसाधनीभूतधर्ममात्रप्रतिपा -
नेऽपि धर्मसाध्यज्ञानविषयब्रह्मप्रतिप्रतिपादनाभावे
बाध्यमाने दोषतादवस्थ्यात् नच कल्पितस्मृति-
बाधोऽप्ययोग्यः स्मृतित्वाविशेषादिति वाच्यं श्रुति-
विरुद्धायास्तस्या अप्रामाण्यस्येष्टत्वात् तथा सूत्रितं
भगवता जैमिनिना विरोधत्वनपेक्ष्यं स्यादसति
ह्यनुमानमिति अस्यार्थः श्रुतिस्मृतीनां परस्पर-
विरोधे कस्या बाध इतिनिर्णयार्थमिदमधिकरणं
"तत्रौदुम्बरीस्पृष्टोद्गायेदि"तिश्रुतिः औदुम्बरीं
सर्वेष्टयित्वेतिस्मृतिः यदि स्पर्शाङ्गीकारस्तदा-
स्मृतिबाधः यदि सर्ववेष्टनं तदा श्रुतेर्बाध इति
प्राप्ते राद्धान्तः विरोध इत्यादिस्मृतीनां श्रुतिविरोधे
सति श्रुतीनां निरपेक्ष्यं प्रामाण्यं स्यात् न स्मृति-
विरोधो ऽत्र विचारणीयः श्रुत्यविरोधे त्वनुमान-
मपि अनुमीयते श्रुत्यर्थो येन तदनुमानं स्मृति-
रपि प्रमाणं नतु श्रुतिविरोधेन श्रुतीनां निरपेक्ष-
तया प्रामाण्यं स्वत एव स्मृतीनां तु तन्मूल-
त्वाच्छ्रुतिसापेक्षत्वात्तदविरोधे सत्येवेत्यर्थः प्रमा-
णान्तरे स्वयमेव न्यायो ऽनुसन्धेयः किञ्च "यन्म-

नुरवदत्तदौषध"मितिश्लाघ्यस्य भगवतो मनोरपि निर्णयवचनं या वेदवाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ताः सर्वा निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता इतितस्माद्वेदविरुद्धानां साङ्ख्यादिस्मृतीनां वाधो न दोषा वह औपनिषदातां ननु "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठित" इतिश्रुतिनिर्णीततत्त्वविशदीकरणपरायाः कपिलस्मृतेरश्रौतत्वोक्तिरयुक्ताऽन्यथाश्रुतिविरोधस्तवापि तुल्यः पंचपंञ्चजना इति पंचविंशतितत्त्वानि श्रुतिप्रतिपादितानि तेषामेव स्मृतिसङ्गृहीतत्वादिति चेन्न उक्तमन्त्रस्य पंचविंशतिसङ्ख्याकतत्वप्रतिपादकत्वाभावात् तथाहि उपक्रमे तद्देव ज्योतिषां ज्योतिरायुर्होपासते ऽमृतमिति ज्योतिषां सूर्यादीनामपि प्रकाशकत्वात् परब्रह्माभिधः श्रीवासुदेवो ज्योतिः पदार्थः तमेवोपासते इतितदुपासनपर एवायं मन्त्र इति निश्चयात् अत्रापि यच्छब्देन स एव परामृश्य पञ्चपञ्चजन्यस्याकाशस्य चाधारतया निरूप्यत इतिसुस्पष्ट एव पञ्चजना इतिसङ्ख्याशब्दः संज्ञापरः यथासप्तर्षयः सप्त इत्यत्रैकैकोऽपि सप्तर्षिपदवाच्यस्तथैव पञ्चजनशब्दो ऽपि

बोध्यः "दिक्सङ्ख्ये संज्ञाया"मितिभगवता पाणि-निना सूत्रितत्वात् पुमांसः पंचजना इत्यमरको-शाच्च तथा चावयवमनपेक्ष्य पुरुषाभिधानपरो ऽयं पंचजनशब्दइतिसिद्धं माध्यंदिनशाखोक्ताश्च "ते प्राणश्चक्षुः श्रोत्रं मन"श्चेति "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदु"रितिवाक्यशेषात् तेषां पुरुषत्वानुप-पत्त्या लक्षणया पुरुषसम्बन्धिप्राणादयो गृह्यन्ते ऽतः पञ्चजनाः प्राणादय इतिसिद्धे ते कतिधेत्य-पेक्षायां सङ्ख्यावाचकपंचशब्दस्यान्वयः प्राणादयः पंच इत्यर्थः प्राणादयो वाक्यशेषादिति सूत्रात् ननु काण्वमाध्यंदिनशाखयोरुभयोर्यस्मिन्पञ्चपञ्च-जना इति पाठस्याविशेषे ऽपि अन्नशब्दहीनत्वात् काण्वपाठस्य कथमुक्तार्थसिद्धिरितिचेन्न तेषां पूर्व-वाक्यपठितज्योतिःशब्देन यत्र त्वसङ्ख्यापूर्णे तात्प-र्यात् "ज्योतिषैकेषामसत्यन्ने" इतिसूत्रात् ननु ज्योतिःशब्द उभयपाठे समानः कथमेकेषामेव तद्गृहोनान्येषा"मिति वैषम्यं नियामकाभावादिति चेन्न अपेक्षाभेदस्यैवात्र नियामकत्वात् माध्यन्दि-नानांसमानमन्त्रपठितप्राणादिपञ्चकस्य लाभात्

अन्यमन्त्रपठितज्योतिःशब्दाऽपेक्षाभावःकाण्वानां तु पञ्चमस्याऽलाभात् भवत्यन्यस्याऽपेक्षेतिभावः यथा समाने ऽप्यतिरात्रे वचनभेदात् षोडशिग्रहणा-ग्रहणे तथा प्रकृते ऽपि गृहीत्वान्नोक्तदोषावकाशः किञ्च पञ्चपञ्चजनशब्दस्य स्मृत्युक्तपञ्चविंशति-सङ्ख्याकतत्त्वपरत्वाभ्युपगमे ऽपि नेष्टसिद्धिराशा-सनीया यस्मिन्निति तत्पदार्थस्याकाशस्य च पृथ-क्कण्ठरवेणोद्घुष्यमाणत्वात् सप्तविंशतितत्त्वानि सम्पद्येरन् सिद्धान्ते तु यो ज्योतिषां ज्योतिस्सूर्या-दीनामपि प्रकाशकः यश्चपञ्चजनपदार्थानां प्राणा-दीनामाकाशस्य चाधारस्तेषामप्यन्तरात्मा च तमेवं सर्वात्मानं ब्रह्मशब्दाभिधेयमहं मन्ये "त-मेवामृतं विद्वान् मृतो ऽपि मृततुल्यसंसार्यपि अमृतं ब्रह्मभावं प्राप्नोती"तिवाक्यार्थः सङ्ख्योप-ग्रहादपि "नानाभावादतिरेकाच्चे"ति सूत्रात् ननु "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मिति-श्रुतिरेवात्र मानं सच्छब्दाभिधेयमत्रप्रधानमेवेति चेन्न "तदैक्षत बहु स्यां प्रजायेये"तिसच्छब्दवाच्यस्य कारणस्येक्षणबहुभवनसङ्कल्पाश्रयत्वश्रवणात् तत् समानाधिकरणवृत्तिसार्वज्ञ्यादीनां ब्रह्मासाधारण-

धर्माणामचेतने प्रधाने कथमप्यसम्भवाच्च अथ च तस्य "तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य" इतिकारणवेदो मोक्षोपदेशात् प्रधानस्योपासनं तज्जन्यज्ञानान्मुक्तिस्तथाप्यनङ्गीकारात् अन्यथा ऽचेतनज्ञानस्य सर्वेषामपि सत्वेन सर्वमोक्षप्रसङ्गात् अचेतनापत्तिरेवमुक्तिः स्यात् किञ्च ऐतदात्म्यमिदं सर्व"मिति सर्वचेतनाचेतनवस्तुजातस्य सदात्मकत्वोपदेशेन तादात्म्यावगमात् अचेतनस्य प्रधानतादात्म्योपपत्तावपि चेतनानां तु तत्तादात्म्यस्य कथमप्यनुपपन्नत्वात् "अथ येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञात"मितिश्रुत्या "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्या"दितिदृष्टान्तैः कारणविज्ञानात्कार्यविज्ञानं प्रतिज्ञानं प्रधानकारणवादे तस्याः बाधप्रसङ्गात् प्रधानविज्ञानात्तदुपादेशाकाशादेरचेतनवर्गस्य विज्ञाने जातेऽपि चेतनवर्गस्य ज्ञानाऽसिद्धेः तदुपादेयत्वाभावात् तस्मान्न सच्छब्दवाच्यत्वं प्रधानस्य ईक्षतेर्नाशब्द"मितिसूत्रात् ननु चेतनकारणवादे ऽप्यसम्भवस्तुल्य एव विप्रतिपत्तिबाहुल्यात् तथाहि उपादेयभूतस्य विकारस्यो-

पादानगतधर्मानुविधायित्वनियमो निर्विवादः दृष्ट-
श्चायं सुवर्णविकृतौ कुण्डलादौ प्रकृते तु कारण-
धर्मस्य चैतन्यस्याकाशादिष्वनुवृत्त्यदर्शनात् अन्य-
था तेषामपि चैतन्यसाम्येन भोक्तृत्वभोग्यत्व-
विभागाऽसिद्धेः आकाशादयो न चेतनोपादेयाः
अत्यन्तविलक्षणत्वात् अग्निजलवत् गोऽश्ववदिति
प्रयोगादिति चेन्न तस्याऽऽभासमात्रत्वात् तथाहि
यत्र यत्रोपादानोपादेयभावस्तत्र तत्र सादृश्य-
मितिव्याप्तिर्न तावन्नियता येन तथात्वं स्यात्
वैलक्षण्ये ऽपि कार्य्यकारणभावस्य प्रत्यक्षगम्य-
त्वात् भुक्तादन्नात्केशनखादिरूपविलक्षणस्य गोम-
याच्च वृश्चिकस्य कार्यस्योत्पत्तेरुपलम्भात् किञ्च
कार्यकारणभावस्य सर्वथा सादृश्यं किञ्चित्सा-
दृश्यं वा नाद्यः कार्यकारणभावस्यैवासिद्धेः अन्य-
था केशनखादावन्नादेः वृश्चिकादौ च गोमयस्य-
सादृश्यप्रत्ययापत्तेः द्वितीये त्विष्टापत्तिः सत्वादे-
र्ब्रह्मधर्मस्याकाशादावपि भावात् आकाशो ऽस्तीति
प्रत्यक्षप्रतीतेः आकाशादिप्रपञ्चजातं ब्रह्मोपादेयं
सत्तादिधर्मवत्त्वात् यन्नैवं तन्नैवं अग्निसेचनयोरि-
वेत्यनुमानात् सत्प्रतिपक्षत्वं बोध्यं "आत्मन

आकाशः सम्भूत इत्यादिश्रुतेश्च किञ्च प्रत्यक्षादि-प्रमाणागोचरे ब्रह्मणि तर्कानवप्रवेशाच्छास्त्रं तु ब्रह्मोपादेयत्वमेव प्रपञ्चस्य विदधाति "नारायणा-ज्जायते प्राणोमनः सर्वेन्द्रियाणि च खंवायुर्ज्योति-तिरापः पृथिवी विश्वस्य धारिणीति" श्रुतेः अतश्च सङ्क्षेपमिदं शृणुध्वं नारायणः सर्वमिदं पुराणः स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूयः तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्व-तिकः सनित्य इत्यादिस्मृतिश्च तत्र काया ब्रह्मा-रुद्रादयो देवाः मूलमुपादानं शाश्वतिक एकरसो निर्विकारः ननु निमित्तकारणत्वाऽङ्गीकारे ऽपि तद्विषयकशास्त्रस्य नैराकाङ्क्ष्यात् किमङराग्रहेणो-पादानत्वाऽङ्गीकार इति चेन्न "बहुस्यां प्रजायेय सच्च त्यच्चाऽभवत् स्वयमात्मानमकुरुते"त्यादि-श्रुतीनां कथमप्यन्यथाव्याख्यातुमशक्यत्वात् अ-न्यथा श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् किञ्च स्मृति-प्रयुक्तार्थपदानां "सर्वमिदं पुराणः संहारकाले च तदत्ति भूयः स मूलं शाश्वतिक" इत्यादीना-मुपादानपरत्वाऽनङ्गीकारे सर्वथा ऽनुपपत्तेः किञ्च "नैषा मतिस्तर्केणापनेया प्रोक्ता ऽन्येन सुज्ञानाय

प्रेष्ठेति ॥ अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ॥ तर्काप्रतिष्ठाना"दितिश्रुतिस्मृतिसूत्रै-स्तर्काणां निषेध्यत्वादप्युक्तानुमानस्याप्रामाण्यं ननु मन्तव्य इति श्रुत्या "यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर" इत्यन्वयव्यतिरेकस्मृत्याच तर्कस्य निर्णायहेतुत्वप्रतिपादनात्कथं तन्निषेधसम्भव इति-चेत् सत्यं तथापि श्रुतिमूलकस्यैवोपादेयत्वं न तद्विरुद्धस्येति ब्रूमः * तर्को नाम प्रमाणानामनुग्राहक ऊह अज्ञातनिश्चये वस्तुनि क्रियमाण-स्तत्त्वज्ञानैकप्रयोजनः "यथा ऽग्नेर्विस्फुलिङ्गा" इतिश्रुत्या प्रत्यगात्मनो जन्म प्रतीयते "न जायते म्रियते वे"तिश्रुत्या च तदभावः तत्रात्मनित्या-ऽनित्यसंशये आत्मा नित्य एव यदि नित्यो न स्यात्तर्हि कृतनाशाकृताभ्यागमप्रसङ्गः स्यादित्या-दिरूपः नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः "अविनाशी वा रे आत्माऽनुच्छित्तिधर्मे"ति शास्त्रमूलत्वात् प्रमा-णसहायत्वेन गृह्यते "आगमस्याविरोधेन ऊहनं तर्क उच्यते इतिवचनात् "अज्ञाततत्त्वार्थेकारणो-पपत्तिस्तत्त्वज्ञानार्थंऊहस्तर्क" इतिन्यायसूत्राच्च ॥

---

*शुष्कतर्कंपरित्यज्य आश्रयस्वश्रुतिस्मृतीइतिभारतवाक्यात् ।

एवं तर्कग्राहकश्रुत्यादेः श्रुतिमूलतर्कविषयत्ववादङ्गीकारः यदि प्रपञ्चो मिथ्या न स्यात्तर्हि अनिर्मोक्षप्रसङ्गः स्यात् यदि सेश्वरसवेदं जगन्मिथ्या न स्यात्तर्हि निर्विशेषाद्वैतसिद्धान्तसिद्धिर्न स्यादित्यादीनां शास्त्रनिर्मूलत्वान्निषेधविषयत्वमिति राद्धान्तः एवमुभयविधस्यापि शास्त्रस्य स्वार्थे एव प्रामाण्यात् सामञ्जस्यम् किञ्च त्वन्मते ऽप्युक्तदोषः समान एव तथाहि त्रिगुणमचेतनं निरवयं प्रधानं तत्तत्कार्याकारेण परिणमते इतिभवतो राद्धान्तः तत्र निरवयवान्नीरूपात्प्रधानात् सावयवस्य रूपादिमतःकार्यस्योत्पत्तेरसम्भवे विशेषाभावात् "यत्रोभयोः समो दोषः परिहारो ऽपि वा समः नैकः पर्यनुयोक्तव्यस्तस्मिन्नर्थविचारणे" इतिन्यायात् इतरथा सर्वस्यापि कार्यमात्रस्य निरवयवत्वं च स्यात् तथात्वे च कार्यं प्रत्यक्षं नामरूपादिना विभक्तं च नोपलभेतेत्यलम्विस्तरेण ॥ सिद्धान्ते ब्रह्मणो ऽचिन्त्यानन्ताघटघटनापटीयसीशक्तिमत्त्वेन सर्वं समञ्जसं तस्मात् सार्वज्ञाद्यनन्तसद्गुणाश्रयो निःशेषदोषगन्धाघ्रातमाहात्म्यं परं ब्रह्मैव जगत्कारणं न प्रदानमितिसिद्धं "सन्मूलाः

सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ यच्चेहास्ति यच्च नास्ति सर्वं तस्मिन् समाहितं ॥ तस्मिन् कामाः समाहिताः ॥ सत्यकामः सत्यसङ्कल्पः ॥ नामरूपे व्याकरवाणि ॥ तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं ॥ न तत् समश्चाधिकश्च दृश्यते परा ऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानवलक्रिया" चेत्यादिश्रुतिभ्यः ॥ "यतः सर्वाणि भूतानि भवन्त्यादियुगागमे यस्मिंश्च प्रलयं याति पुनरेव युगक्षये ॥ अहं सर्वस्य जगतः प्रभवः प्रलयस्तथे"ति स्मृतिश्चेति सङ्क्षेपः ॥

इतिसाङ्ख्यपक्षगिरिनिपातः ॥ १ ॥

एतेनैव योगस्मृतिरपि प्रयुक्तेत्याह "एतेन योगः प्रयुक्त" इति अतिदेशरूपमिदं सूत्रं तत्त्वं नाम असादृश्यशङ्कायां सादृश्यप्रतिपादनं केयमसादृश्यशङ्केति उरोग्रीवाशिरांस्युन्नतानि यस्मिन् त्रिरुन्नतं तं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्ये"तिश्वेताश्वतरोपनिषदि तं योगमिति मन्यन्ते स्थिरामिन्द्रियधारणा"मितिकाठके च योगः परमश्रेयोसाधारणज्ञानसाधनतया शिष्टैर्गृ-

हीतः तत्परमिदंयोगशास्त्रं तत्र ध्येयोऽपि श्रीपुरु-
षोत्तम इति साङ्ख्यस्मृतेरसादृश्याद्वेदान्तोपयोगि-
त्वात्तेन वेदान्तशास्त्रोपबृंहणं युक्तमिति मन्दानां
शङ्का माभूदिति ॥ साङ्ख्यस्मृतेः सादृश्यं दर्शयन्
समाधत्ते ॥ समानं साङ्ख्यानामिवात्राऽपि परमे-
श्वरानधिष्ठितस्य प्रधानस्य स्वातन्त्र्येणोपादानात्
परमेश्वरस्य निमित्तमात्राङ्गीकाराच्च ॥ धातुश्चेतन-
स्याचेतनवर्गस्य ब्रह्म तादात्म्यानभ्युपगमाच्चास्या
अपि वेदान्तविरोधस्तुल्य एव ॥ तस्मान्नानया
वेदान्तोपबृंहणं युक्तं किन्तु तन्निरास एव श्रेया-
निति ॥ तस्मादुक्तलक्षणब्रह्मैव जगत्कारणमिति
सिद्धं इतियोगस्मृतिः अथ कार्यं मिथ्या निर्वच-
नीयं वाऽसद्रूपं वा सद्रूपं वेति संशये आहुरेके
असत्त्वेन प्रतीयते ॥ सत्त्वेन्न बाध्यते प्रतीयते बा-
ध्यते च अतः सदसद्विलक्षणं ह्यनिर्वचनीयमेवा-
भ्युपगन्तव्यं ॥ अनिर्वचनीयत्वादेव मिथ्यात्व-
मिति ॥ ननु प्रपञ्चो यदि मिथ्या न स्यात्तर्हि
ज्ञाननिवर्त्योऽपि न स्यात् दृश्यते हि लोके मिथ्या-
पदार्थस्य शुक्तिरजतादेरधिष्ठानज्ञानान्निवृत्तिरतो
ऽव्यस्तोऽयं प्रपञ्चः ॥ ज्ञाननिवर्त्यत्वादिति ॥

ज्ञाननिवर्त्यत्वान्यथानुपपत्तिर्जगन्मिथ्यात्वे मान-मितिचेन्न ॥ पूर्वमेवाध्यासखण्डने निरस्तत्वात् ॥ किञ्च ॥ नहि ज्ञानमज्ञानस्यैव मिथ्याभूतस्य निवर्त्तकमिति नियमः ज्ञानमात्रेण ज्ञानसमान-विषयकाज्ञानानुपादानकस्य सत्यस्य तज्ज्ञानप्राग-भावस्य घटादिज्ञानेन पटादिज्ञानस्य प्रत्यभिज्ञा-नादिना संस्कारस्य विषयदोषदर्शनेन रागादेः सेत्वादिदर्शनेन ब्रह्महत्यादेश्च सत्यस्यैव निवृत्ति-दर्शनात् ॥ ननु सेत्वादिदर्शनमज्ञाननिवृत्तिद्वारेणा-दृष्टद्वारेण वा निवर्त्तकं साक्षान्निवर्त्तकत्वेऽपि न ज्ञानेन किन्तु विहितक्रियात्वेनेति चेन्न प्रकृतेऽपि साम्यात् श्रुतदर्शनत्यागेन तत्प्राप्तितज्जन्यादृष्टं वा निवर्त्तकं कल्प्यते चेदिहापि श्रवणज्ञानोत्तरं ब्रह्म-ध्यानं तज्जन्यादृष्टं वा निवर्त्तकमितिवक्तुं शक्यत्वात् "तस्याभिध्याना"दितिश्रुतेः ननु सेतुदर्शनमात्रं न निवर्त्तकं किन्तु दूरागमनादिविशिष्टमिति चेन्न अत्रापि ज्ञानमात्रं न निवर्त्तकं किन्तु नियमाधीत-वेदान्तश्रवणादिनियमविशिष्टं ॥ अन्यथा भाषा-प्रबन्धादिश्रवणेऽपि असम्भावनादियुक्तस्याज्ञान-निवृत्त्यापत्तेः ॥ शूद्रादीनामपि म्लेच्छभाषानिरू-

पितवेदान्तार्थश्रवणादिनाऽपि मोक्षप्रसङ्गात् नच नियमाध्ययनादीनामधिकारसम्पादनेनैवोपक्षीण-त्वाच्च ज्ञानसहकारित्वमिति वाच्यं ॥ प्रकृते पि दूरागमनादीनामधिकारसम्पादनेनैव नैराकाङ्क्ष्य-साम्यात् ॥ नच दृष्ट्वैव तं मुच्यते इतिदर्शनमात्रस्य निवर्त्तकत्वश्रवणादिति वाच्यं ॥ प्रकृते ऽपि "सेतुं दृष्ट्वा ब्रह्महसां व्यपोहती"तिसेतोश्चाक्षुषज्ञानस्यैव निवर्त्तकत्वश्रवणात् ॥ किञ्च लोके ऽदृष्टत्वेऽपि विपक्षेवाधकाभावात् श्रुतिवलात् सत्यस्याऽपि वन्धस्य निवृत्तिः किं न स्यात् अन्यथा लोके ऽधिष्ठानतत्वे साक्षात्कृते कर्मवशादपि निरुपाधि-कभ्रमाऽनुवृत्तेः जीवन्मुक्तिदशायां कर्मवशादनु-वृत्तस्य जगतः सत्यत्वमेव स्यात् तव मते ऽपि लोके ऽत्यन्ताप्रसिद्धस्याऽपि व्याप्तिशून्यस्याश्रौ-तस्यानाद्यध्यासस्य प्रतिपादयतो ह्यत्यन्ताप्रसि-द्धाङ्गीकारसाम्यात् ॥ नह्यनाद्यध्यासे श्रुतिर्मानं नापि लोकप्रसिद्धा व्याप्तिः यत्राध्यासस्तत्राऽना-दित्वमिति प्रत्युत सादिव्याप्तिः शुक्तिरूप्यादौ प्रसिद्धाऽपि किन्तु युक्तिमात्रं मानं तथापि कुल-धर्मतया तत्वाङ्गीकारः अस्माकं तु श्रुतिवलात्

सत्यस्यैव श्रौतब्रह्मज्ञानान्निवृत्त्यङ्गीकारे को वा दोष इतिमनीषिभिर्विवेचनीयं ॥ किञ्च संस्कार-सापेक्षगरुडभ्रमरादि ध्यानज्ञाननिवर्त्यविषकीट-त्वादौ सत्यत्वदर्शनेन श्रवणजनित संस्कारसापेक्ष-ज्ञाननिवर्त्यस्य प्रपञ्चस्य सत्यत्वमेव स्यात् किञ्च लोके निवृत्तिनिवर्त्ययोः समानसत्ताकत्वनियमात् अज्ञाननिवृत्तिवदज्ञानमपि तात्विकं स्यात् प्राति-भासिकस्य रूप्यस्य प्रध्वंसो व्यावहारिकश्चैत-योर्विरोधो ऽपि न स्यात् व्यावहारिकप्रातिभासि-कयोः शुक्तिरूप्यभेदाभेदयोरिवेति किञ्च ज्ञानज्ञेय-योर्दोषाधिष्ठानयोश्च समानसत्ताकत्वनियमात् ब्रह्म-वदज्ञानमपि सत्यं स्यात् किञ्च यथा ऽनादि-भावरूपस्यात्यन्ताद्दृष्टाऽपि निवृत्तिः श्रुतिबलादङ्गी-कृता तथा प्रकृते ऽपि किं न स्यात् किञ्च शङ्खस्य श्वेतत्वानुमित्यादिना तदीयस्य श्वेतत्वविषयका-ज्ञानस्यारोपितपीतत्वस्य वा निवृत्तिवत् त्वन्मते बिम्बप्रतिबिम्बयोरैक्यसाक्षात्कारेणैक्याज्ञानस्या-रोपितभेदस्य वा निवृत्तिश्चेत् श्वेतत्वानुमित्यादिना तदज्ञाननिवृत्तावकार्यस्यारोपितपीतत्वादेरननुवृत्ति-वत्तदनुवृत्तिर्न स्यात् नच तस्य सोपाधिकत्वेन

यावदुपाविस्थापित्वनियमान्नोक्तदोषयोग इति-वाच्यं उपादाननिवृत्तौ कार्यानुवृत्त्ययोगात् ज्ञानस्य स्वप्रागभावनिवर्त्तन इवाज्ञाननिवर्त्तनेऽप्यन्यानपेक्ष-णात् अपिच चरमसाक्षात्कारेण जीवन्मुक्ति-दशानुवृत्तस्याज्ञानलेशस्य वा ज्ञानसंस्कारस्य वा प्रारब्धकर्मादेर्वा निवृत्तिः किं न स्यात् तस्मात्त्वया ऽप्यज्ञानस्यारोपितभेदस्य वा ज्ञानविरोधिन एव ज्ञानेन निवृत्तिर्विरोधश्च कार्यनिरूप्य इत्येव वक्तव्यं एतन्ममापि समानं ॥ ज्ञाननिवर्त्यत्वेन तावत् सत्वं मिथ्यात्वं वा नियामकं अपितु ज्ञानविरो-धित्वमेवेति सिद्धमित्यलं विस्तरेण ॥ वस्तुतस्तु-भगवत्प्रसादादेव बन्धनिवृत्तिर्न प्रकारान्तरेण ॥ "शृण्वन्तोऽपि बहवो यं न विद्युः ॥ यमेवैष वृणुते तेन लभ्यः ॥ यस्य प्रसादात्परमार्ति-रूपादस्मात् संसारान्मुच्यते नापरेण" त्यन्वय-व्यतिरेकश्रुतेः ॥ "मत्प्रसादात्तरिष्यसी" तिस्मृतेश्च नचैवं ज्ञानस्य वैयर्थ्यापत्त्या तत्तत्प्रतिपादक-शास्त्रव्याकोपप्रसङ्ग इतिवाच्यं ॥ तस्य तत्प्र-साद हेतुत्वात् तथा ऽऽह वैष्णवे श्रीप्रह्लादः "एवं ज्ञाते सभगवाननादिपुरुषोत्तमः प्रसीदत्य-

च्युते तस्मिन् प्रसन्ने क्लेशसङ्क्षयः ॥ तस्मिन् प्रसन्ने किमिहास्त्यलभ्य" मित्यादिना अतो ज्ञानस्य कारणत्वं भगवत्प्रसादस्यावान्तरव्यापारत्वमित्युभयशास्त्रस्याविरोधादित्यलं प्रासङ्गिकेनाग्रे विस्तरिष्यमाणत्वात् ॥ अथ पराहतंचसत्तर्कैरेतदन्यथानुपपत्तिरूपं प्रमाणं ॥ तर्कश्च प्रपञ्चो यदि सत्यो न स्यात्तर्हि श्रीपुरुषोत्तमस्य परब्रह्मणः परिपाल्यो न स्यात् ॥ तत्परिपाल्यत्वं च श्रुतिस्मृतिसूत्रैरुद्घुष्यमाणं ॥ तस्मात् सदेवेति तथाहि अध्यस्ते प्रवृत्तिरधिष्ठानसाक्षात्काराभाववत एव पुरुषस्य दृश्यते घटते च नतु शुक्तिं शुक्तित्वेन साक्षादनुभवितुः शुक्तिरूप्यादाने प्रवृत्तिर्दृष्टचरा स्वाग्निकपुत्रादीनां गजतुरङ्गादीनां च पालनार्थप्रवृत्तिश्च जाग्रतो ऽनुन्मत्तस्य कस्य चिद्दृष्टा युक्ता वा तथा सर्वस्याधिष्ठानतत्वं सर्वदा पश्यतः परमेश्वरस्य प्रपञ्चमिथ्यात्वे कथं तस्य पालने प्रवृत्तिरिति पण्डितम्मन्यैर्वैदिकत्वाभिमानिभिरेकाग्रमनसा विचारणीयं ॥ परमेश्वरस्याज्ञत्वकल्पनायां परमेश्वरत्वमेव न स्यात् ॥ सर्वज्ञत्वे च मिथ्यावस्तुपरिपालने प्रवृत्त्यसम्भवात् ॥ अन्यथा पर-

मेश्वरस्य भ्रान्तत्वप्रसक्त्या तत्प्रतिपादकवेदो दत्त-
तिलाञ्जलिः स्यात् ॥ ननु ऐन्द्रजालिकवत्तस्य
मिथ्यापालनं भवत्विति चेन्न ॥ दृष्टान्तवैषम्यात्
ऐन्द्रजालिको मन्त्रौषधादिबलादतीतानागतान्
देशान्तरस्थितांश्च सत एव पदार्थान् प्रदर्शयत्येव
नत्वपरोक्षतया स्वयं पश्यति पालयति वा ॥
प्रकृतेतु "यः सर्वज्ञ सर्ववित् स्वाभाविकी ज्ञान-
बलक्रिया च नामरूपे व्याकरवाणि आकाशो वै
नामरूपयोर्निर्वहिता सर्वाणि रूपाणि विचिन्त्य
धीरो नामानि कृत्वाऽभिवदन्यदास्ते एकं बीजं
बहुधा यः करोति" इत्यादिश्रुतिभ्यईक्षणबहुभवन-
सङ्कल्पपूर्वकसृष्ट्यादिकर्तृत्वं "स्वयमात्मानमकुरुत
सच्च त्यच्चाभव"दित्यादिना ॥ बहुभवनत्वेनोपादा-
नत्वं चोपलभ्यते इतिविपरीतत्वाद्दृष्टान्तस्येत्यर्थः
नचेन्द्रजालिकस्य स्वमायया मोहितस्य विनया-
परोक्षत्वाभावे पश्यन्त्विदमाम्रफलमिति प्रतिज्ञा-
वचनं तथैव प्रदर्शयितृत्वं चानुपपन्नं एतदन्यथा-
नुपपत्त्या तस्य विषयापरोक्षमस्तीत्यवश्यमङ्गी-
कार्यमिति चेन्न तस्यान्यथोपपन्नत्वात्तथाहि यथा
वैद्यो गुरूपदेशादिना ज्ञातौषधिप्रभावो भविष्य-

द्रोगनाशादिविषयकाऽपरोक्षाभावेऽपीदमौषधमिमं रोगं सद्यो नाशयति पश्यन्त्वस्य प्रभावमिति वदति ददाति च तथैन्द्रजालिकोप्यस्मान्मन्त्रा-देरेते भ्राम्यन्तीति ज्ञातमन्त्रादिप्रभावः पश्यन्त्वि-त्यादिवदन्ति दर्शयति चेतिभावः ॥ नचैन्द्रजालि-कस्याप्यैन्द्रजालिकान्तरात् स्वसृष्टानां रक्षणत्व-दर्शनात्तथात्वे च नोक्तवैषम्यमिति चेन्न भ्रमजनक-स्वमन्त्रौषधादिगतसामर्थ्यस्यैव रक्षणान्न विषय-स्येति ननु मम पक्षे परमेश्वरस्याऽपि व्यावहारि-कत्वेन तद्गुणशक्त्यादीनां सार्वज्ञ्यादीनामपि तथात्वे न पारमार्थिकत्वाभावात् तथाऽऽह भगवान्भाष्य-कारः ईश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्च वीजभूते सर्वज्ञेश्वरस्य शक्तिः प्रकृतिरितिश्रुतिस्मृत्योरभि-लप्येते न ताभ्यामन्यः सर्वज्ञ ईश्वरः आकाशो नाम नामरूपे सर्वाणि एकं वीजं" इत्यादिश्रुतिभ्यः एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति व्योमेव घटकरकाद्युपाध्यनुरोधि सच स्वात्मभूतानेव घटाकाशस्थानीयानविद्यात्मकोपाधिप्रत्युपस्थापि-तनामरूपकृतकार्यकारणसङ्घाताऽनुरोधिनो जीवा-

ख्यात् विज्ञानात्मनः प्रतीष्टे व्यवहारविषये तदेव मविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं न परमार्थत इत्यादिनेति चेन्न अश्रौतत्वेन कल्पनामात्रत्वात् तथाहि परमेश्वरस्य मिथ्यात्वे किम्मानमिति वक्तव्यं नचाकाशो वै नामरूपयोरित्यादिश्रुतयः पूर्वमेवोक्ता इतिवाच्यं तासु मिथ्याव्यावहारिकादिप्रतिपादकपदानामेकतमस्याप्यदर्शनात् प्रत्युत नामरूपादिहेतुत्वप्रतिपादनपराणां पदानां प्रत्यक्षोपलभ्यमानत्वात् अप्राणा वै सत्यं त एव न नामरूपयोरपि मिथ्यात्वं "यस्य नाम महद्यशः अथ नामधेयं सत्यस्य सत्यं प्राणा-वैसत्यं तेषा मेष सत्य"मित्यादिना सत्यत्वश्रवणात् नापि तस्य ज्ञानशक्त्यादिना व्यावहारिकत्वं वक्तुं शक्यं "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे"तिकण्ठरवेण स्वाभाविकत्व श्रवणात् नच तासां व्यावहारिकसत्त्वपरत्वं तत्त्वं च ज्ञानवाध्यत्वं भेदवाक्यानां प्रत्यक्षादिप्रमाणागम्यभेदविषयकत्वेनानुवादपरत्वाभ्युपगमादिति । वाच्यं आपातोक्तेः तथाहि जीवब्रह्मभेदे प्रत्यक्षादिनामप्रसरादितिविवरणाचार्यवचनात् प्रत्य-

क्षादिप्राप्त्यभावेन भेदवाक्यानां स्वार्थे एव प्रामा-
रायात् अन्यथा स्वरूपस्यापि वाधोऽभ्युपगन्तव्यः
स्वाभाविकत्वसाम्यात् किञ्च घटो ऽस्तीति प्रत्य-
क्षेण निर्विशेषाधिष्ठानवस्तुनो गम्यत्वात् अभेद-
वाक्यानामेव तदनुवादपरत्वेन स्वार्थे प्रामाण्यं
प्रत्यक्षगृहीतग्राहित्वात्तथाच तवैव सिद्धान्तवि-
रोधः अन्यथा विवरणवाक्यभङ्गात् किञ्च ईश्वर-
स्यात्मभूते इवास्य को वाऽर्थो विवक्षितः स्वरूपा-
त्यन्ताभिन्नत्वं वा शुक्तिरजतवदसत्वस्य प्रतीयमा-
नत्वं वा स्वरूपापृथक्सिद्धत्वमात्रं वा नाद्यः श्रुति-
प्रमितत्वात् अन्यथा नामैव ब्रह्मरूपमेव ब्रह्मेति
प्रातीत्यापत्तेः नापि द्वितीयः प्रतिमानत्वे प्रमाणा-
भावात् प्रत्युत अथ नामधेयं "सत्यस्य सत्य"
मितिसत्यत्वश्रवणात् व्याकरवाणीति व्यक्तिकरण-
श्रुतेश्च अन्यथा प्रत्यापयामीति श्रवणं स्यात्
चरमश्चेदिष्टापत्तिः तदात्मकत्वेन स्वरूपापृथक्-
सिद्धत्वस्य सिद्धान्ते ऽप्यङ्गीकारात् "ऐतदात्म्य-
मिदं सर्व"मिति श्रुतेः नाप्यनिर्वचनीयत्वं अनि-
र्वचनीयख्यातिनिरासे विस्तरेण निरस्तत्वात्
तस्मात्सदेवाकिञ्चेश्वरस्याऽतात्त्विकत्वे निरीश्वर-

सांख्यादिभ्यो वैदिकेभ्यस्तत्र सिद्धान्तस्य पर-वञ्चनां विना को वा विशेषः सर्वस्य वेदस्य सर्वज्ञ-सर्वशक्त्यादिनिलयब्रह्मपरत्वेन भवतां पारिभाषिक-तर्कमात्रं प्रमाणान्तरं नास्तीत्यलं कुतर्कनिरासैः किञ्च यदि प्रपञ्चमिथ्यावादः श्रौतः स्यात्तर्हि शुक्तिरजतादिदृष्टान्ता वेदे उपन्यस्ताः स्युः यद्य-निर्वचनीयवादः सूत्रकाराभिप्रेतः स्यात्तर्हि सूत्रि-तमपि स्यान्नतु तथा दृश्यते तस्मात्कार्यं सदेवे-त्यादितर्का अत्रानुसंधेयाः ननु ब्रह्म*ज्ञानेतरा-बाध्यत्वे सद्भिन्नत्वेच सति चिदन्यान्मिथ्या दृश्यत्वात् जडत्वात् परिच्छिन्नत्वाच्च शुक्तिरूप्यवदित्यनुमान-मत्र प्रमाणमिति चेन्न तस्य पक्ष साध्यहेतुदृष्टान्ता-नामसम्भवेनाभासमात्रत्वात् तथाहि चिदन्यद्रूपः पक्षः प्रमितो न वा नाद्यः प्रमितस्यनिषेधाऽयोगात्

---

* सद्भिन्नत्वं सत्त्वेन प्रतीत्यर्हम् ब्रह्मज्ञानेतरबाध्यत्वं तत्र सिद्ध-साधनवारणाय प्रथमविशेषणम् अत्र पक्षतावच्छेदकसमानाधि-करण्येन साध्यसिद्धेरुद्देश्यत्वात्पक्षैकदेशे साध्यसिद्धावपि सिद्ध-साधनतेति मते शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मज्ञानेतरा-बाध्यत्वं पक्षविशेषणं यदि पुनः पक्षतावच्छेदेनैव साध्यसिद्धि-रुद्देश्या तदैकदेशे साध्यसिद्धावपि सिद्धसाधनाभावात् द्वारकं विशेषणमनुपादेयं इतरविशेषणद्वयं तु तुच्छे ब्रह्मणि च वार-णायादरणीयमेव ।

ननु प्रपञ्चस्य प्रत्यक्षगोचरत्वेपि सत्वाऽनधिकरणा-
त्वादिनामिथ्यात्वं वक्तुं शक्यमेवेति चेन्न तवमते
निर्विशेषस्यशुद्धस्य ब्रह्मणोऽपि सत्वानधिकरणा-
त्वाभ्युपगमात्तत्रातिव्याप्तिः शुद्धं ब्रह्ममिथ्यासत्वा-
नधिकारणत्वात् तवाभिप्रेतप्रपञ्चवदित्यनुमानात्
नाद्वितीयः शशशृङ्गं तीक्ष्णाग्रं खपुष्पगन्धवदिति
प्रयोगसेवाश्रयासिद्धत्वादिति पक्षाऽसम्भवः अथा
स्यसाध्योपि दुर्निरूपः तथाहि साध्यमत्रमिथ्यात्वं
तत्त्वसत्थं वा तुच्छं वा आद्येऽद्वैतभंगः द्वितीये
मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्यसत्वापत्तिः
यथाकेनचिल्लौकिकेनोक्तो देवदत्तोमृतः परेणाचाप्ते-
ननिर्णीयोक्तस्तदभावः एवं चाप्तवाक्याद्देवदत्त-
मरणस्यमृषात्वे तस्य जीवनं सिद्धन्तद्वत्सिद्ध-
साधनतापत्तिश्चलक्षणाप्रमाणाद्यनुपपत्तीनां पूर्वमेव
विस्तृतत्वाच्चननुसदसत्वानधिकरणत्वं मिथ्यात्व-
मिति लक्षणस्य सत्वात् कथं लक्षणानुऽपपत्तिः
तत्त्वश्च सत्वविशिष्टासत्वाभावरूपमिति चेन्न सदेक-
स्वभावे जगति विशिष्टाभावस्येष्टत्वात् नच सत्वा-
त्यन्ताभावाऽसत्वात्यन्ताभावधर्मद्वयमितिवाच्यं ॥
सत्वाऽसत्वयोरेकतराभावे परस्य सत्वावश्यकेन

व्याघातात् निर्धर्मकब्रह्मवत् सत्वराहित्ये ऽपि सद्रूप-
त्वोपपत्त्या मिथ्यात्वाऽसिद्धेः एतेन सत्वात्यन्ताभाव-
विशिष्टासत्वात्यन्ताभावरूपं विशिष्टं सत्वमित्यपि
निरस्तं दोषसाम्यात् ननु सत्वासत्वयोः परस्पर-
विरहरूपत्वानङ्गीकारान्न व्याघातः परस्परविरह-
व्याप्यत्वादिकं च न व्याहतिकरं गोत्वाश्वत्वयोः
परस्परविरहव्याप्ययोरुष्ट्रेऽसत्वात् किन्तु क्वचि-
दुपाधौ सत्वेनाप्रतीयमानत्वमसत्वं त्रिकालाबाध्य-
त्वसत्वं तयोरभावः साध्य इति चेन्न असल्लक्षणस्या-
सङ्गे ब्रह्मण्यतिव्याप्तेः तस्याप्युक्ता सत्वाङ्गीकारे
सद्भिन्नेति विशेषणस्य वैयर्थ्यापत्तेः शब्दाभासेन
तुच्छस्यापि क्वचिदुपाधौ सत्वेन धीसम्भवाच्च
उक्तासत्वाभावस्य शून्यवादिप्रपञ्चे स्वीकाराच्च
लाघवात् सत्वाऽसत्वयोः परस्पराभावस्यैवौचित्याच्च
नन्वेकेनैव सर्वानुगतेन ब्रह्मसत्वेन सर्वत्र सदिति
ज्ञानोपपत्तौ प्रत्येकं सद्रूपत्वकल्पनमयुक्तमन्यथा
ऽनुगतव्यवहारानुपपत्तेरिति चेन्न सत्तात्रैविध्यस्य
त्वया ऽपि स्वीकारात् लाघवेन "यदासीत्तदधीन-
मासी" दिति श्रुते प्रामाणिकपरतन्त्रसत्तया ऽप्यनु-
गतधीदर्शनाच्च एतेन सत्प्रतियोगिकासत्प्रति-

योगिकभेदद्वयं साध्यमिति निरस्तं निर्धर्मके ब्रह्म-
ण्यतिव्याप्तेश्च नच सद्रूपं ब्रह्म तत्तदभावानधि-
करणमिति वाच्यं प्रपञ्चेऽपि साम्यात् नच ब्रह्म-
णोनिर्धर्मकत्वात्सत्वाऽसत्ववत्तत्तदधिकरणत्वमपि।
नास्तीति वाच्यं निर्धमकत्वहेतुसत्वाऽसत्वाभ्यां व्या-
घातात् सत्वासत्वाद्यनधिकरणत्वनिषेधे सदसत्त्वा-
धिकरणत्वापत्तेः अन्येषां लक्षणानां पराभिमत-
प्रमाणानां च पूर्वमेव निरस्तत्वात् अलं विस्तरेण
इति साध्याऽसम्भवः एवं हेतूनामप्याभासत्वमेव
तत्र दृश्यत्वं नाम किं वृत्तिव्याप्यत्वं वाशब्दा-
जन्यवृतिविषयत्वं वा सप्रकारकवृत्तिविषयत्वं वा
चिद्विषयत्वं वा स्वव्यवहारे स्वस्मिन्नचिदपेक्षा-
नियमो वा अस्वप्रकाशत्वं वा नाद्यः ब्रह्मणो ऽपि
वेदान्तजन्यवृत्तिविषयत्वेन तत्रातिव्याप्तेः अन्यथा-
वेदान्तस्य वैयर्थ्यापतेः नच शुद्धं न दृश्यं "यत्तद-
द्रेश्य"मितिश्रुतेः किन्तूपहितमेव तस्य मिथ्यात्वं
चेष्टापन्नं नहि वृत्तिदशायामनुपहितं तद्भवतीति
वाच्यं उपहितभाने उपधेयभावावश्यकत्वात् प्रसि-
द्ध्यर्थकयत्तच्छब्दयोरयोगाच्च स्वतः सिद्धेर्निरासा-
च्छुद्धासिद्ध्यापतेश्च शुद्धं स्वप्रकाशमिति शब्दजन्य-

वृत्तौ शुद्धाप्रकाशस्तत्प्रकाशो वा आद्ये स्वप्रकाशत्वासिद्धेः द्वितीये सुतरां तदसिद्धेः नच शुद्धं स्वप्रकाशमित्यस्य लक्षणाया शुद्धत्वं अस्वप्रकाशत्वव्यापकमित्यर्थः तथा चाशुद्धत्वव्यावृत्ता शुद्धे स्वप्रकाशत्वपर्यवसानं यथा भेदनिषेधेनाभिन्नत्वमिति वाच्यं शुद्धत्वव्यावृत्तिसम्बन्धित्वेन शुद्धस्य ज्ञानाभावे तत्र स्वप्रकाशत्वपर्यवसानाऽसम्भवात् नहि व्यापकाभाववत्त्वेनाज्ञाते व्याप्याभावः सिद्ध्यति किञ्च विशिष्टभाने विशेष्यभानमावश्यकं नहि दण्डीतिज्ञाने पुरुषस्य विषयज्ञानं नास्ति नच विशेष्यतापन्नं मिथ्यैवेति वाच्यं अधिष्ठानस्याधिकसत्ताकत्वनियमेन विशेष्यतापन्नस्य मृषात्वे ऽधिष्ठानत्वासम्भवात् नहि विशेष्यतापन्नं सर्वथा ज्ञानविषयं ह्यधिष्ठानं भवति जगतोऽपि विशेष्यतापन्नत्वादिना मिथ्यात्वं स्वरूपेण तु सत्यत्वमित्यापत्या अद्वैतहानिः स्यात् शशशृङ्गं तुच्छमिति शाब्दधीविषये तुच्छत्वन्मते व्यभिचारश्च स्यात् किञ्च शुद्धस्याविषयत्वे मोक्षाभावप्रसङ्गात् उपहितज्ञानेनैव मोक्षसिद्ध्या ऽपसिद्धान्तापत्तेश्च न द्वितीयः ब्रह्मण्यतिव्याप्तेरेव ननु तुच्छशुद्ध-

ब्रह्मणोः शब्दाजन्यवृत्यविषयत्वान्न व्यभिचार इतिचेन्न सत्यस्य शुद्धस्यैव व्यावहारिकघटाद्यधिष्ठानस्य घटादिगोचरचाक्षुषादिवृत्तिविषयतायाः सत्वात् नह्यधिष्ठानमविषयीकृत्याध्यस्तं वृत्तिर्विषयीकरोति "मनसैवानुद्रष्टव्यं॥ दृश्यते त्वग्रया बुद्ध्ये"तिब्रह्मणोऽपि शब्दाजन्यवृत्तिविषयत्वश्रवणाञ्च नचापहितविषयकैवेयं श्रुतिरितिवाच्यं "ततस्तु तं पश्यति निष्कलं ध्यायमानः॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय" इति इतिशुद्धस्यैव ध्यानादिविषयत्वश्रवणात् अन्यथा निष्कलंपरममितिविशेषणास्वारस्यात् शब्दैकगम्ये धर्मादौ भागासिद्धेश्च अत एव न तृतीयः नापि चतुर्थः तत्त्वं नाम किं यथा कथञ्चित् चित्सम्बन्धित्वमिति चेन्न चित्तः संयोगादिसम्बन्धोक्तावप्रयोजकत्वात् आध्यासिकसम्बन्धोक्तावसिद्धेः तस्य विस्तरेण पूर्वमेव निरस्तत्वात् नापि पञ्चमः वृत्तिभिन्नचिदपेक्षाया घटादावसिद्धेः नच स्फुरणरूपे ब्रह्मणि वृत्तिभिन्नचितः कृत्याभावेऽपि अस्फुरणरूपे घटादौ प्रकाशाय चिद्विषयत्वमावश्यकमिति वाच्यं अज्ञानविरोधिस्फुरण-

त्वस्य ब्रह्मण्यसम्भवात् तदविरोधिस्फुरणात्वस्य घटादावपि वक्तुं शक्यत्वात् नच स्वतो विरोध्यपि वृत्त्यारूढं सदज्ञानविरोधीति वाच्यं स्वाकारवृत्त्यारूढः सन् घटो ऽप्यज्ञानविरोधीति वक्तुं शक्यत्वात् नच विषयापारोक्ष्याय चिद्विषयत्वमिति वाच्यं प्रतिफलनं प्रतिप्रयोजकतया ऽऽवश्यकेन वृत्तिगतेन ज्ञानाकरणाकत्वादिना विशिष्टेन ज्ञानेन विषयीकृतत्वेन विषयस्यापारोक्ष्योपपत्तेः नापि चरमः अस्वप्रकाशत्वं च अन्यानधीनापरोक्षत्वावच्छिन्नप्रतियोगिताकभेदाश्रयत्वं विवक्षितं चेत् ब्रह्मणः स्वविषयत्वानङ्गीकारे स्वं प्रत्यपरोक्षत्वस्यैवाभावात् स्वप्रकाशत्वासिद्ध्या तदभावरूपहेतोरसिद्धत्वात् स्वाविषयस्याऽपि प्रत्यपरोक्षत्वाङ्गीकारे घटादे रपि घटं प्रत्यनन्याधीनापरोक्षत्वस्य वक्तुं शक्यत्वात् निर्विशेषे ब्रह्मणि स्वरूपभिन्नापारोक्षस्याभावेन व्यभिचाराच्चेति सङ्क्षेपः नापि जडत्वं हेतुः तत्त्वं न तावदज्ञानत्वं आत्मनि व्यभिचारात् तथाहि आत्मरूपं ज्ञानं सविषयं न वा आद्ये स्वविषयं परविषयं वा नाद्यः त्वया ऽनभ्युपगमात नद्वितीयः मोक्षे परस्याभावात्

नत्रार्थोपलक्षितप्रकाशस्यैव ज्ञानत्वात्तस्य मोक्षे ऽप्यनपाय इति वाच्यं यदाकदाचिद्विषयसम्बन्धान्मोक्षे ज्ञानत्ववत् यदा कदाचिद्दुःखादिसम्बन्धाद्दुःखित्वाद्यापत्तेः अभावादिषु सप्रतियोगित्वादेरिव ज्ञाने सविषयत्वस्यापि स्वाभाविकस्य धर्मिसमसत्ताकस्य दर्शनात् नच सविषयत्वं ज्ञानस्य विषयेण सहाध्यासिकः सम्बन्धः सच न स्वाभाविकः एतद्धेत्वधीनमिथ्यात्वसिद्धेः प्रागाध्यासिकसम्बन्धासिद्धेः अज्ञानेच्छादेरिव ज्ञानस्याऽपि सविषयतायाः स्वाभाविकत्वात् भोक्तृभोज्यं विना भुजेरिव ज्ञातृज्ञेयं विना ज्ञानस्यासम्भावाच्च नचानादौ तदनपेक्षा अनादेः प्रागभावस्य प्रतियोग्यपेक्षाया जात्यादेर्व्यक्त्यपेक्षाया अज्ञानस्य विषयाश्रयापेक्षाया दर्शनात् ज्ञानस्य सज्ञेयत्वं हि ज्ञेयोल्लेखित्वं तच्चातीतादिविषयज्ञानस्याप्यक्षतं तच्च तत्रानिष्टम् उल्लेखस्य तत्र संसारत्वेन मोक्षे तदुल्लेखे तद्विप्लवप्रसङ्गात् नाऽपि ज्ञानस्य निर्विषयत्वं सम्भवति ज्ञानत्वहानेः अर्थप्रकाशात्मरूपज्ञानस्वभावाभावे घटादेरपि ज्ञानत्वापातात् ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादिति विवरणोक्तिबाधाच्च

किञ्चात्मरूपं ज्ञानं प्रमा वा भ्रमो वा नाद्यः तद्वेद्यस्याविद्यादेः सत्यत्वापत्तेः नान्त्यः भ्रमस्य दोषजन्यत्वनियमेनात्मनस्तदभावात् उभयभिन्नत्वे ज्ञानमेव न स्यात् नच तार्किकाभिमतेश्वरज्ञानवत् घटादिनिर्विकल्पकवच्चोभये वैलक्षण्येऽपि ज्ञानत्वो-पपत्तिः ईश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वस्य भ्रम-त्वे दोषजन्यत्वस्य चापत्तेः निर्विकल्पके च तद्वति तत्प्रकारकत्वाभावादिति वाच्यम् अबाधितार्थकत्व-रूपयाथार्थ्यप्रामाण्यस्येश्वरीयज्ञानादावक्षतेः विशे-ष्यावृत्त्यप्रकारकत्वरूपप्रामाण्यस्येश्वरज्ञान निर्वि-कल्पकयोरक्षतत्वाच्च प्रमासामान्येच न गुण-जन्यत्वं नियामकं किन्तु तद्विशेष एव प्रमामात्रे नानुमतो गुण इति मणिकृतोक्तेः किन्तु दोषा-जन्यत्वमेव हि तन्नियामकं नाऽपि पदजन्यप्रतीति विशेष्यभिन्नत्वं जडत्वं वृत्त्यात्मकज्ञाने भागासिद्धेः लाक्षणिकज्ञानपदजन्यधीविशेष्यत्वस्य देहेन्द्रि-यादावपि सत्त्वेनासिद्धेः तत्पदजन्यशाब्दबोधविशे-ष्यत्वाभावस्य ब्रह्मण्यपि सत्त्वेन तत्र व्यभिचारात् नचानानन्दत्वं जडत्वं वैषयिकानन्दे भागासिद्धेः नच सोऽपि ब्रह्मानन्द इतिवाच्यं क्षीरनीरपानजन्या-

नन्दानां तारतम्योपलब्ध्या ब्रह्मत्वासम्भवात् नच दुःखनिष्ठोत्कर्षापकर्षयोरानन्दे उपचारः दुःखलेशाप्रतीतावप्यानन्दतारतम्यप्रतीतेः नाप्यज्ञातृत्वं जडत्वं तव मते ऽन्तःकरणस्य ज्ञातृत्वेन तत्राव्याप्तेः शुद्धे ब्रह्मण्यतिव्याप्तेश्च शुद्धं ब्रह्म मिथ्या अज्ञातृत्वादाकाशादिवदित्याभाससाम्यात् नच कल्पितज्ञातृत्वं शुद्धेऽपि स्वीक्रियते इतिवाच्यं कल्पितेन हेत्वभावेनातिव्याप्त्यनुद्धारात् शुद्धत्वभङ्गाच्च शुद्धाशुद्धविभागासिद्धेश्चेति सङ्क्षेपः नाऽपि परिच्छिन्नत्वस्य हेतुत्वम् आभासत्वाविशेषात् तथाहि तत्त्वं नाम देशकालवस्तुपरिच्छेदवत्त्वं तत्रात्यन्ताभावप्रतियोगित्वं देशपरिच्छिन्नत्वं ध्वंसाभावप्रतियोगित्वं कालपरिच्छिन्नत्वं अन्योन्याभावप्रतियोगित्वं वस्तुपरिच्छिन्नत्वमितिविवेकः तत्र नाद्यद्वितीयौ आकाशरूपदेशस्य कालस्य चापरिच्छिन्नत्वेन तत्राव्याप्तेः "आकाशवत्सर्वगतश्च नित्यः सदेव सौम्येदमग्र आसीत् अथ मर्त्यो ऽमृतो भवति ॥ यत्र त्वस्य सर्वमात्मैवाभूत् ॥ अथ सम्पत्स्ये" इत्यादिश्रुतिभिः सदा सर्वत्र कार्यदर्शनादित्यादियुक्त्या धर्मिग्राहिणा साक्षिणा च तथा-

त्वावगमात् नचा"त्मनश्चाकाशः सम्भूत"इत्या-
काशस्य कालपरिच्छेदश्रवणादुक्तविरोध इतिवाच्यं
भूताकाशस्योत्पत्तिनाशादिसम्भवे ऽपि अव्याकृता-
काशस्य * तदयोगात् नहि पूर्तिं विना ऽवकाश-
नाशः सम्भवति एतेन विमतं मिथ्या विभक्तत्वात्
सन् घटः सन् पटः इतिघटादिकमननुगतमनु-
गतसद्रूपे विभज्यते इतिनिरस्तम् नीलो घटो नीलः
पटो घटश्चलति पटश्चलति असन्नृशृङ्गमसत्खपुष्प-
मित्यादौ नीलादिषु घटादीनामसति नृशृङ्गादीना
मध्यासापत्तेः अयं सर्पोऽयं सर्प इति रज्जुमा-
लादिष्वननुगतेष्वनुगतस्य सर्पस्यारोपवदननुगते-
ष्वनुगतसद्रूपत्त्वारोपापत्तेश्च खण्डो गौर्मुण्डो गौरि
त्यादावनुगतगोत्वादौ व्यक्तेरारोपापत्तेश्च नच
सद्रूपब्रह्माभिन्नगोत्त्वादेरनभ्युपगमान्नोक्तदोष इति-
वाच्यम् अगवादिव्यावृत्तस्य गवादिवैलक्षण्यव्यव-
हारस्यानुपपत्तेः सद्रूपस्य सर्वानुगतत्वे व्यावृत्तेर-
सम्भवात् नच तत्तद्व्यक्तिविशिष्टं सत्सामान्यमेव
तत्तद्व्यवहारजनकमिति वाच्यं तत्तद्व्यक्तिविशिष्टस्य
मिथ्याभूतस्य व्यक्त्यनधिष्ठानत्वेन तत्र व्यक्ते-

* अव्याकृताकाशोनित्यम् ।

रध्यासायोगात् सत्सामान्यव्यक्त्योराध्यासिकातिरिक्तसम्बन्धस्य त्वयाऽनङ्गीकारात् एतेन घटादिकं सद्रूपे कल्पितं प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात् प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवदिति निरस्तं रूपादिहीनस्य ब्रह्मणश्चाक्षुषत्वायोगाच्च चक्षुरादिगृहीतस्य दृश्यस्य मिथ्यात्वेन घटाद्यनधिष्ठानत्त्वात् किञ्च ब्रह्मणः सर्वेन्द्रियग्राह्यत्वाङ्गीकारे महावाक्योपदेशस्यानुवादकत्वापत्तेः महावाक्योपदेशो न स्वार्थपरः इन्द्रियगृहीतग्राहकत्वेनानुवादरूपत्त्वात् "अग्निर्हिमस्य भेषज"मिति वाक्यवदित्यनुमानात् एतेन द्रव्यग्रहे चक्षुषो रूपाद्यपेक्षा ब्रह्मणस्तु द्रव्यत्वाभावेन तदनपेक्षत्वान्नोक्तदोषावकाशः "अस्थूलमनण्व"तिश्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्त्वप्रतिषेधादिति निरस्तम् उक्तश्रुतेः प्राकृतपरिमाणनिषेधेन नैराकाङ्क्ष्यात् अन्यथाऽ"णोरणीयान्महतो महीयानि"त्यादिश्रुतिव्याकोपात् नापि तृतीयो ऽन्योन्याभावप्रतियोगित्वरूपो वस्तुपरिच्छेदो हेतुः अनृतादौ ब्रह्मात्यन्ताभावान्योऽन्याभावयोः सत्त्वात्तत्रातिव्याप्तेः ब्रह्म मिथ्या अनृताद्यन्योन्याभावप्रतियोगित्वा-

त्तवमते घटपटादिवदित्यनुमानात् नन्वनृताद्वै ब्रह्मासत्ताभावान्योऽन्याभावयोर्मिथ्यात्वात् तत्र ब्रह्मसंसर्गस्य चाभिन्नत्वान्नोक्तदोष इति चेन्न तथात्वे मिथ्यात्वाभिन्नत्वसंसर्गयोस्तात्विकत्वापत्त्या तद्भि-या पारमार्थिकस्यैवाभावस्याकामेनाऽपि त्वया ऽङ्गीकार्यत्वात् सन्दिग्धानैकान्त्यस्य दुर्वारत्वात् अप्रयोजकत्वाच्च किञ्च ब्रह्मभिन्नत्वस्य तात्त्विकस्य-प्रपञ्चेऽप्यभावात् ब्रह्मण्यनृतव्यावृत्तिस्तात्विकी तया तस्य तथात्वमनुमातुं शक्यते कल्पितस्य त्वात्मनि सत्त्वात् सिद्धं दृश्यत्वादिहेतूनामाभा-सत्वं सोपाधिकत्वात् उपाधयश्च सप्रकारकधीवा-धार्हत्वं अध्यस्ताधिकदोषप्रयुक्ताभानत्वं प्रतिभास-मात्रशरीरत्वं चेत्यादयः देहात्मैक्याध्यासस्याऽपि स प्रकारकभेदविषयकज्ञानवाधयोग्यत्वात् न तत्र साध्याव्याप्तिः नच स प्रकारकेति अध्यस्ताधि-केति च विशेषणवैयर्थ्यं तद्विनैवोपाधेः साध्यव्याप-कत्वात् तावन्मात्रस्य तु साधनव्यापकत्वान्नोपाधि-त्वमिति वाच्यं विशिष्टाभावस्यातिरिक्तत्वेन तद्वि-शिष्टस्यैव साध्यव्यापकतया वैयर्थ्याभावात् किञ्च घटः सन् सदुःखमित्यादिप्रत्यक्षवाधिताश्च दृश्य-

त्वादयः दृश्यत्वादिः केवलान्वयीति तत्राव्याप्ति-
रितिभावः किञ्चास्य प्रयोगस्य दृष्टान्तोऽपि दुर्निरूपः
शुक्त्यादेः पक्षान्तःपातित्वेन तत्प्रयोगस्याभासमात्र-
त्वात् नच माऽस्तु शुक्त्यादिदृष्टान्तः व्यतिरेकि-
दृष्टान्तस्य ब्रह्मणः सत्वान्नोक्तदोषावकाश इति-
वाच्यं विकल्पासहत्वात्तथाहि शुद्धस्य दृष्टान्तत्वं
विशिष्टस्य वा नाद्यः सर्वप्रमाणागोचरस्य ब्रह्मणः
शशशृङ्गकल्पत्वेन दृष्टान्तानर्हत्वात् प्रमाणविषयत्वे
शुद्धत्वहानिरद्वैतभङ्गाच्च नद्वितीयः विशिष्टस्य
पक्षान्तः पातित्वात् तव मते व्यतिरेकानुमाना-
नङ्गीकाराच्च तस्मात्पक्षसाध्यहेत्वादीनामाभासत्वे-
नापातरमणीयत्वादुक्तानुमानस्येति सिद्धं किञ्च
विश्वं यदि कल्पितं स्यात्तर्हि साधिष्ठानं स्यात् सामा-
न्यतो ज्ञातत्वे सति अज्ञातविशेषवत्त्वस्याधिष्ठानत्व-
प्रयोजकस्य निर्विशेषे निःसामान्ये ब्रह्मण्यसम्भ-
वात् विश्वं यदि कल्पितं स प्रधानं स्यान्नचैवमस्ति
तस्मान्न तथा विश्वं यद्यध्यस्तं स्यात्तर्हि ससंस्कारं
स्यान्न तु तदस्ति तस्मान्न तथा नच स्वेनाध्यस्तः
स्वारोपे हेतुरिति वाच्यं भ्रमात्पूर्वं स्वस्य कार्यानु-
मेयसंस्कारस्याध्यासकारणत्वासम्भवात् अन्यथा-

भ्रमहेतुसंस्कारस्याधिष्ठानसमसत्ताकत्वं दुर्वार- मितिभावः किञ्च विश्वं यद्यध्यस्तं स्यात्तर्हि ससा- दृश्यं स्यान्नचैवमस्ति तस्मान्न तथा नच पीतः शङ्ख इतिसादृश्यं विनाऽपि भ्रमो दृष्ट इतिवाच्यं द्रव्यत्वादिना तत्रापि सादृश्यज्ञानवत्त्वस्यानुमेय- त्वात् स्वर्णमयशृङ्गमूर्तौ तस्य प्रत्यक्षसिद्धत्वाच्च किञ्च विश्वं यद्यध्यस्तं स्यात्तर्ह्यनादिकर्मादिजन्यं न स्यात् अध्यासानादित्वस्य क्काऽपि प्रसिद्ध्यभावात् प्रत्युत सादित्वस्य शुक्तिरूप्यादौ दर्शनात्तस्मान्ना- ध्यस्तत्वमित्यादिप्रतिकूलतर्कैः पूर्वत्राध्यासखण्डने प्रोक्तैः प्रतिहतमिदनुमानं नप्रामाण्यार्हमित्यलं विस्तरेण अप्रमाणत्वात्सूत्रकारपक्षहीनत्वाच्चो- पेक्षणीयोऽयमनिर्वचनीयकार्यवादो मुमुक्षुभिः तस्मात्सदेवेदं विश्वं "सदेव सौम्येदमग्र आसी" दितिश्रुतेः "सत्वाच्चावरस्ये"ति वक्ष्यमाणसूत्राच्च तच्च कार्यं कारणात्मकत्वात्तदपृथक्सिद्धमित्याह भगवान् सूत्रकारः "तदनन्यत्वमारम्भणशब्दा- दिभ्यः" तस्य कार्यस्य कारणादनन्यत्वं तदात्म- कत्वादिना पृथक्सिद्धत्वं तत्र प्रमाणमाह आर- म्भणशब्दादिभ्य इति अत्रामनन्ति छान्दोगाः

"येनाश्रुतं श्रुतं भवती"त्यादिना ह्येकोपादानकारणविज्ञानेन सर्वकार्यविज्ञानं प्रतिज्ञाय तत्सिद्धये दृष्टान्तोपन्यासः "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मिति * यथेति दृष्टान्तोमृत्पिण्डेन मृद्द्रव्यरूपतया विज्ञातेन सर्वंमृन्मयं घटादिमृद्विकारजातं मृदात्मकतया विज्ञातं भवति तत्तदवस्थाविशेषमात्रत्वादुपादेयजातस्य स्वोपादानपृथक्सिद्धत्वादित्याह कार्यजातं वाचारम्भणमिति वागिन्द्रियेणारभ्यते घटेन जलमानयेत्यादिना व्यवह्रियते इतिवाचारम्भणं तच्च द्विविधं विकारो नामधेयं चेति तत्र कम्बुग्रीवादिमद्व्यक्तिविशेषरूपो विकारशब्दवाच्यः नामधेयं च घटादिशब्दवाच्यः शब्दविशेष एव ननु यथा कारणं मृत्तिका स्वतन्त्रसत्ताश्रयत्वात्सत्या तथा घटादीनां कार्याणामपि पृथक्स्वतन्त्रसत्त्वं भवतु उपलभ्यमानत्वादित्यत्राह मृत्तिकेत्येव सत्यमिति एवकारो ऽन्ययोगव्यवच्छेदार्थः इतिशब्दः कारणपरामर्शपरः मृत्तिकाकारणभूतैव स्वतन्त्रसत्ताश्रया ननु तथा घटादिकार्यं

* वाचारम्भणमित्यस्यार्थः।

स्वातन्त्र्येण सत्यं कारणाव्यतिरेकेणानुपलभ्यमान-त्वात् तदन्वितत्वोपलभ्यमानत्वाच्चेति दृष्टान्तः एव-माकाशादिप्रपञ्चजातस्य ब्रह्मोपादेयतया तदात्मक-तया च स्वतन्त्रसत्तानधिकरणत्वात् स्वोपादान-कारणभूतब्रह्मापृथक्सत्त्वमेवेति राद्धान्तः "ऐत-दात्म्यमिदं सर्व"मितिश्रुतेः "वासुदेवात्मका-न्याहुः क्षेत्रं क्षेत्रज्ञ एव च"इत्यादिस्मृतेश्च तत्त्व-मस्यादिश्रुतयस्तु पूर्वमेव व्याख्याता यत्तु कैश्चित् स्वकपोलकल्पितानश्रौतदृष्टान्तान् शुक्तिरूप्य-मृगतृष्णोदकादीन् उपन्यस्याकाशादिकार्यस्य-मृषात्वं प्रतिपादयद्भिरेतत्सूत्रं विवर्त्तपरत्वेन व्याख्यायते तदसमीचीनं प्रतिज्ञादृष्टान्तासम्भवात् तथाहि येनाश्रुत"मित्यादिश्रौतप्रतिज्ञावाक्ये कारणविज्ञानात्कार्यविज्ञानं प्रतिज्ञातं तत्र किं तावत्कारणं शुद्धं निर्विशेषं ब्रह्म वा उपाहितं वा नाद्यः तस्य कारणत्वानभ्युपगमात् तत्र प्रमाणा-भावेन तद्विज्ञानस्यैवासम्भवाच्च "तमेव विदित्वा ऽतिमृत्युमेति ॥ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवा" इत्यन्वयव्यतिरेकश्रुतिव्याकोपाच्च तज्ज्ञा-नाभावे ऽनिर्मोक्षप्रसङ्गाच्च नद्वितीयः तद्विज्ञानस्य

मोक्षाहेतुत्वेनाप्रयोजकत्वात् उपहितस्यैव ब्रह्मणो जगत्कारणत्वेन तज्ज्ञानेन तदुपादेयज्ञाने जातेऽपि तस्य मोक्षाहेतुत्वेन मिथ्यात्वेन चानिर्मोक्षप्रसङ्गस्यावश्यम्भावात् अन्यथोपहितं ब्रह्मैव मुक्तोपसृप्यं स्यात् शुद्धस्यासिद्धेश्च किञ्च। शुक्तिरूप्यमृगतृष्णोदकादिदृष्टान्तानामप्यप्रामाण्यम्। अश्रौतत्वात् श्रौततात्पर्यविरोधाच्च मृत्तिकाद्युपादानपदार्थज्ञानाद्यथा घटादितत्कार्यजातस्य विज्ञानं तदुपादेयत्वात्सर्वप्राणिगोचरं न तथा शुक्तिज्ञानाद्रूप्यमात्रस्य ऊषरज्ञानाद्वा उदकमात्रस्य ज्ञानं कस्याप्यनुन्मत्तस्य जायते उपादेयत्वाभावात् तस्माद्दृष्टान्ताभासत्वमेव तेषामिति सिद्धं "लौकिकपरीक्षकाणां यत्र बुद्धिसाम्यं स दृष्टान्त" इतिगौतमीयलक्षणसूत्रात् ननु घटादीनामपिमृदादावध्यस्तत्वेन विवर्त्तपक्षेऽपि दृष्टान्तत्वसम्भवान्नाभासत्वमिति चेन्न मृदादिज्ञानेन घटादीनां बाधादर्शनात् बाधं विना चारोप्ये मानान्तराभावात् मृदादिविज्ञानेऽपि घटादीनां पूर्ववद्विद्यमानानां प्रातीतिकत्वासम्भवाच्च किञ्च व्यावहारिकविवक्षायां मृदादिवत् कारकव्यापारसाध्यानां जलाहरणादि-

कार्यसमर्थानां चावस्थाविशेषाणां घटादीनामपि सत्त्वात् तात्त्विकसत्त्वविवक्षायां च मृदादेरपि सत्यत्वाभावाच्च दृष्टान्ताभासत्वं ननु घटादयो न तावन्मृदादिमात्रे ऽध्यस्ताः किन्तु मृदाद्यवच्छिन्न-चेतने एव तथात्वे च मृदाद्यवच्छिन्न तत्त्वज्ञाना-भावात्तद्बाधो युक्त एवेति चेन्न प्रमाणहीनत्वात् श्रौतदृष्टान्तविरुद्धत्वाच्च नहि श्रुतौ मृदाद्यवच्छिन्न-चेतनविज्ञाने सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टान्त उपन्यस्तः किंतु मृत्पिण्डमात्र एव तस्मात्कपोल-कल्पितपारिभाषिकमात्रत्वाद्दृष्टान्ताभासत्वमेव ननु शुक्तौ ज्ञातायां रूप्यं तत्त्वतो ज्ञातं भवति साहि॥ तस्य तत्त्वम् एवं ब्रह्मज्ञानात्सर्वं तत्वतो ज्ञातं भव-तीति श्रीवाचस्पतिमिश्रैर्भामतिप्रबन्धे प्रतिपाद-नात् किंच यथा घटकरकाद्याकाशानां महदा-काशादनन्यत्वं यथाच मृगतृष्णिकोदकानामूषरा-दिभ्यो ऽनन्यत्वं* दृष्टनष्टस्वरूपत्वात् स्वरूपेणा-नुपाख्यत्वादेवमस्य भोग्यभोक्त्रादिप्रपञ्चस्य ब्रह्म-व्यतिरेकेणाभाव इतिद्रष्टव्यमित्यादिश्रीभगवत्पा-

---

* दृष्टम्प्रातीतिकं नष्टमनित्यं यत्स्वरूपं तद्रूपेणानुपाख्यत्वात् स्फूर्त्तिशून्यत्वात् ।

दैर्भाष्यकारैश्चोक्तत्वात्कथं प्रलाप इतिचेन्न एवं तर्हि ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवतीत्यर्थ उक्तः स्यात् तच्चायुक्तं सर्वमिति साधारणश्रवणात्स्वस्य स्व-हेतुत्वायोगात् येनाश्रुतमित्यादि श्रुतिगताश्रुतादि-पदवैयर्थ्याच्च किञ्च तत्त्वंनाम स्वासाधारणं स्वरूपं स्वासाधारणधर्मो वा नतु भ्रमाधिष्ठानं श्रौतदृष्टा-न्तानां मृत्पिण्डादीनां घटाद्यधिष्ठानत्वाभावात् अन्यथा रजतादिवत् घटादीनामपि बाधप्रसक्तेः बाधाभावान्यथानुपपत्तेरप्यत्र प्रामाण्यात् एवं दार्ष्टान्तेऽपि ब्रह्मज्ञानात्प्रपञ्चाबाधदर्शनस्याप्यन-ध्यस्तत्वे मानत्वं बोध्यम् अन्यथा शुक्तितत्त्वज्ञाना-द्रूप्यनाशवद्ब्रह्मज्ञानात् सर्वनाशापत्त्या सर्वविज्ञाना सम्भवादितिभावः अपिच वाचारम्भणशब्दस्य मिथ्यार्थकत्वे योगरूढ्योरभावात् वाचारब्धकाव्यादे-र्मिथ्यात्वादर्शनात् वागालम्बनमात्रमितिव्याख्याने ऽश्रुतकल्पनात् त्वया नामधेयमित्यस्याऽपि नाम-मात्रं ह्येतदिति व्याख्यातत्वेन पौनरुक्त्याच्च ननु "को भवानिति निर्देशो वाचारम्भो ह्यनर्थक" इति-स्मृत्या वाचारम्भशब्दस्य मिथ्यापरत्वदर्शनात्तथा-ऽत्रापि बोध्यमिति चेन्न स्मृतावपि पूर्वोक्तरूढ्याद्य-

भावेन त्वदिष्टपरत्वाभावात् तथाहि देहानां प्रकृत्युपादेयत्वेन प्राकृतत्वाविशेषात्को भवानिति निर्देशो देहविषयकप्रश्नो ऽनर्थकः प्रकृतेः स्वतन्त्र-भिन्नतया निर्धारणारूपार्थशून्यः किन्तु वाचारम्भो-वाग्व्यवहारयोग्य इतिस्मृत्यर्थः अन्यथा शब्द-मात्रस्यापि वागिन्द्रियारम्भत्वसाम्यात् वाचेति वैयर्थ्यापत्तेः अर्थासत्त्वेन वागादिप्रयोगस्य त्वयै-वानुभूतत्वात् नत्वदन्यैः कैश्चिदिति भावः ननु वाचा-रम्भणनामधेयपदाभ्यां विचारासहत्वं विवक्षितं तथाहि भूमिविकारस्य घटादेः स्वरूपविचारे विकारो मिथ्याभूमिः सत्या तत्स्वरूपविचारे च सा ऽपि मिथ्या तद्धेतुभूतापञ्चीकृतभूतान्येव सत्यानि तत्स्वरूपविचारे तेषामपि मिथ्यात्वं किन्तु तत्परमकारणं ब्रह्मैव सत्यमिति मृत्तिकेत्येव सत्यमिति सत्यमित्यत्र हेतुर्वाचारम्भणं विकारो नामधेयं वाङ्मात्रं विचारासहं तस्मान्निर्विकारं ब्रह्मैव सत्यमिति चेन्न विपरीतत्वात् तथाच वि-कारस्य कारणात्पृथक्सत्त्वासिद्ध्या स्वतन्त्रसत्ता-भावमेव बोधयति नतु स्वरूपेण मृषात्वम् अन्यथा विचारासहत्वमात्रेण मिथ्यात्वकल्पनायां ब्रह्मणो

ऽपि "न सत्तन्नासदुच्यत" इतिस्मृतेः सदसद्भ्यां विचारासहत्वेन मिथ्यात्वप्रसक्तेर्दुर्वारत्वात् ब्रह्म मिथ्या सदसद्भ्यां विचारासहत्वात् तव मते पृथिव्यादिवदितिप्रयोगात् किञ्च विकारो नामधेयमित्यत्र साक्षात्कण्ठरवेण विकारशब्दपाठादपि-विवर्त्तासिद्धेः यदि श्रुतेर्विवर्त्तोऽभिप्रेतः स्यात्तर्हिः विकारइति मृत्पिण्डादिदृष्टान्तांश्च न श्रावयेत् अपितु भ्रान्तिर्नामधेयमिति ब्रूयात् शुक्तिरजतादिदृष्टान्तश्चोपन्यस्येत् नहि विवर्त्तकार्यं विकारो ऽपि तु भ्रममात्रमन्यथा विवर्त्त एव न स्यात् किञ्च यदि नामरूपात्मकं कार्यमनृतमेव तर्हि वेदान्तशास्त्रस्य तद्विचारस्य चापि मृषात्वाविशेषेण तस्मात्सद्रूपब्रह्मभावापत्तिलक्षणमोक्षस्याऽपि कथमिव सिद्धिरिति मनीषिभिर्वैदिकम्मन्यैर्विचारणीयमेकाग्रमनसा "कथमसतः सज्जायेते"तिश्रुतेः "साधनं चेदवश्यं च परमार्थास्तिता भवेत् सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते" इतिभट्टपादैरुक्तत्वाच्च नन्वसत्त्वमपि प्रतिविम्बं विम्बस्य रेखारोपितो वर्णाश्चार्थस्य वर्णदैर्घ्यादिकं नगो नाग इत्यर्थभेदस्य शङ्काविषं मरणस्य

सवितृसुषिरादिश्वारिष्टादेः रज्जुसर्पौ भयकम्पादेः स्वाप्निकस्त्रीसङ्गमः सुखस्य स्वाप्नोऽर्थः शुभाशुभयोः साधकं दृष्टम् आहच भगवान् भाष्यकारः नैव दोषः शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः स्वप्न-दर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्श-नात् तथाच श्रुतिः "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात्तस्मिन् स्वप्न-निदर्शने" इत्यसत्यस्वप्ननिदर्शनेन सत्यसमृद्धेः प्रतिपत्तिं दर्शयति तथा प्रत्यक्षदर्शनेषु केषुचिद-निष्टेषु जातेषु न चिरमिव जीविष्यतीति विद्या-दित्युक्त्वा अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्तीत्यादिना तेन तेनासत्येनैव स्वप्नदर्श-नेन सत्यं मरणं सूच्यते इतिदर्शयति प्रसिद्धं चेदं लोके ऽन्वयव्यतिरेककुशलानामीदृशेन स्वप्नदर्शने साध्वागमः सूच्यते ईदृशेनासाध्वागम इति तथा ऽकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृता क्षरप्रति-पत्तेरित्यादिनेति चेदत्राह भगवान्सूत्रकारः "भावे-चोपलब्धे"रितिकारणस्य सद्भावे सत्येव कार्योप-लब्धिर्दृष्टचरा यथा मृदादिभावे एव घटादि-कार्योपलम्भो नान्यथेति सूत्राक्षरार्थः तस्मात्स-

देवोपादानमितिसिद्धं नापि पूर्वोक्तव्यभिचार-
कल्पना युक्ता सर्वत्र कारणस्य सत्त्वात् तथाहि
विम्बाभाववदवृत्तित्वरूपव्याप्तेः प्रतिविम्बे सत्त्वात्
तज्ज्ञानस्यैव सतो विम्बानुमितिजनकत्वाच्च न
व्यभिचारः रेखायाश्च वर्णो पदस्यार्थे इव सङ्केति-
तत्वेन रेखास्मारितवर्णस्यैव वोधकत्वात् रेखा-
भेदज्ञानवतामेव तथा वोधात् दीर्घत्वादिकं वर्ण-
गतं सत्यमेव तार्किकमते नाना दीर्घादयो नित्या
वर्णाः सिद्धान्ते तु नित्या एव त्वनित्या एव वर्णाः
शास्त्रयोन्यधिकरणे वेदानित्यत्वस्य त्वयाऽङ्गीकारात्
दीर्घत्वादिज्ञानस्यैव हेतुत्वेन मतान्तरे ऽप्यनुप-
पत्त्यभावात् शङ्कानिमित्तभयजन्यधातुव्याकुलतैव
मरणहेतुर्न विषं पुत्रश्रवणमरणावत् भारतयुद्धादौ
घटोत्कचादिभिः शक्तिविशेषात्सृष्टमर्थक्रियाकारि-
गजादिकं सत्यमेव सवितृसुषिररज्जुसर्पज्ञानमेवा-
रिष्टभयादिहेतुः सत्ये ऽप्यर्थे तदज्ञाने भयाद्य-
भावात् स्वाप्नस्त्रीज्ञानस्यैव सुखहेतुत्वं नतु
तत्सङ्गस्य तदज्ञानां तदभावात् स्वाप्निकपदार्था-
नामपि परमात्मसृज्यत्वेन सत्कार्य्यजनकत्वान्ना-
सतः क्वाऽपि कार्यकारित्वमितिभावः किञ्चैकत्र

सत एवान्यत्रारोपो नियतः स्वरूपेण सतः खपुष्पादेः क्वचिदप्यारोपादर्शनात् नचारोपे तद्विषयकप्रतीतिमात्रमेवापेक्षितं नतु विषयसत्व-प्रतीतिर्वाच्यम् असतः प्रतीतेरेवासम्भवात् नतु शुक्तौ रजतप्रतीतिवत् रज्जौ सर्पप्रतीतिवच्च भेद-प्रतीतेरपि दोषमात्रं कारणमपेक्षितं न विषय-सद्भाव इतिचेन्न त्वन्मते दोषमात्रकारणस्याऽपि तुच्छत्वसाम्येन ततः प्रतीतिरूपकार्योत्पत्तेरसम्भ-वात् कार्यस्य कारणसत्तापेक्षत्वनियमात् नचासत्य-स्याप्यारोपितसर्पस्य भयकम्पादिजनकत्वदर्शना-दुक्तहेतोर्व्यभिचार इतिवाच्यं स्वरूपेण सतः कार्यो-त्पत्त्यनुकूलशक्तिमत्वाभावात् आरोपितसर्पस्थले ऽपि सर्पज्ञानस्यैव भयादिहेतुत्वं नारोपितविषय-स्येतिपूर्वमेवोक्तम् अन्यथा सर्पज्ञानाभाववतो बालस्य भ्रमो भयादिश्च भवेन्नतु तदस्ति प्रत्युत सत्यसर्पस्य बालैः स्वहस्तस्पर्शदर्शनात् नचासतो ऽपि रज्जुसर्पादेः स्वज्ञानजनकता इव भयकम्पादि-जनकताऽपि किं न स्यादितिवाच्यं तत्रापि दोष-स्यैव ज्ञानजनकत्वान्नारोपितविषयस्य अन्यथा सत्यपि तमोदोषे रज्जौ सर्पोत्पत्तिः केन वार्य्यते

तवाभिप्रेता सतः कारणस्य विद्यमानत्वात् अन्यथा मृगतृष्णाजलेन मृगादीनां तृष्णानिवृत्तिः गुञ्जारोपिताग्निना शीतनिवृत्तिः विषारोपितामृतेन मरणाभावः शूद्राद्ब्राह्मण्यां जातस्य चाण्डालस्य ब्राह्मणत्वेन ज्ञातस्य वेदाधिकारः तत्कृतयज्ञस्य ज्योतिष्टोमादेः स्वर्गादिजनकत्वम् आरोपितात्मत्वादेश्च देहादेः श्रवणादितो मुक्तिः स्वाप्निकयज्ञादेश्च स्वर्गादिप्राप्तिश्च स्यादितिभावः तस्मात्सदेवोपादानमिति सिद्धं तथैव कार्यमपि सदेवोत्पद्यते इत्याह "सत्वाच्चावरस्येति" अवरस्य कार्यस्य कारणे सत्त्वात् यत्र यस्याभावो न तत् तत उत्पद्यते यथा ऽग्नेर्व्रीह्यङ्कुरादिः सिकताभ्यश्च तैलमित्यर्थः यथा कारणं ब्रह्म त्रिषु कालेषु न व्यभिचरति तथाकार्य्यरूपं विश्वमपि त्रिषुकालेषु नव्यभिचरतीति परैरपि तथैवोक्तेः अन्यथा सदेव सौम्यैदमितीदं शब्दगृहीतस्य कार्यस्य भूतकालीनसत्तायोगश्रवणस्य बाधात् अत्यन्ताभावप्रतियोगिनो वस्तुत्वेन कालसम्बन्धासम्भवात् ननु स्वाप्नरथादिसृष्टिदर्शने विषयस्य दुर्निरूपत्वेन मृषात्वं सुप्रसिद्धं तद्वज्जाग्रत्प्रपञ्चस्यापि मृषात्वमेव तथाच

विषयासिद्ध्या तज्ज्ञानमपि मृषैवेति चेन्न विषयस्य तत्राऽपि सत्त्वात् तथाहि स्वाप्नपदार्थस्येश्वरसृज्यत्वेन याथात्म्यं सद्रूपत्वात् आकाशादिवत् एवं च तद्विषयकज्ञानयाथार्थ्यस्य विवादो निरवकाशः ननु यदि स्वाप्नसृष्टिः पारमेश्वरीया तर्हि तात्कालिकवन्धो न स्यात्समीपवर्तिभिरन्यपुरुषैश्चानुभूयेत नतु तदस्ति तस्माज्जीवसृष्टिरेवातस्तन्मिथ्यात्वस्य सुतरां सिद्धिरिति चेन्न नहि तावदीश्वरसृष्टेः सर्वस्या अप्याकाशादिवद्बहुकालावस्थाननियमो वक्तुं शक्यः तत्सङ्कल्पानुसारित्वात् तत्कार्यस्य तत्र कस्य चिदाकाशादेर्महाप्रलयावसानावस्थितिरितरस्य च देवदत्तपुत्रादेर्यत्किञ्चित्कालावस्थायित्वनियमः कस्य चित् पदार्थस्य तात्कालिकोत्पत्तिविनाशयोगश्च प्रत्यक्षादिप्रमाणसिद्धः तस्मात् स्थितिकालस्य तत्कर्तृपरमेश्वरसङ्कल्पाधीनत्वेन बह्वल्पकालावस्थाननियमात् नोक्तदोषावकाशः नाऽपि समीपवर्त्तिभिरननुभूयमानत्वं मिथ्यात्वे नियामकं देवदत्तादिमनोगतसुखदुःखादेरन्यैरननुभूयमानत्वे ऽपि तस्य मिथ्यात्वाभावात् तथा प्रकृते ऽपि वोध्यं नच मनोगतसुखादेर्जीवजन्यत्व-

मितिशङ्कनीयम् ईश्वरसृज्यत्वस्य श्रीमुखगीतत्वात् सुखं दुःखमित्यारभ्य "भवन्ति भावा भूतानां मत्त एवे"ति वाक्येन किञ्च तत्तत्प्राणिपुण्यापुण्यानुरूप-तत्तत्पुरुषानुभाव्यतावत्कालावस्थानानुकूलभगवत्-सङ्कल्पसृष्टा एव स्वाप्नपदार्था न जीवसृष्टास्तेषां बद्धावस्थायां सत्यसङ्कल्पत्वाभावात् अन्यथा तेषां सुखमेव सर्वदा स्यान्न कदाचिदपि दुःखयोगः जाग्रत्समये ऽपि स्वसङ्कल्पानुसारिणीं सृष्टिं कुर्युः नतु तथा दृश्यते प्रमाणाभावात् असम्भवाच्च तथा प्रकृते ऽपि बोध्यं किञ्च "य एषु सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्मिमाणस्तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चनेति स्वाप्नसृष्टिश्रुत्युक्तेर्लिङ्गानि न कथमपि जीवात्मन्यन्वेतुं शक्यानि परमेश्वरा-साधारणधर्मत्वाद्विशेषार्थस्तु तृतीयाध्याये तत्-प्रकरणे वक्ष्यते तस्मात्परमेश्वरसृज्या एव स्वाप्न-पदार्था इतिसिद्धं किञ्च सत्कार्यकारित्वान्यथानुप-पत्तिरपि तत्सत्यत्वेनानुसन्धेया किञ्च ब्रह्मणः सर्वकारणत्वान्यथानुपपत्तिश्चापि स्वाप्नपदार्थानां तत्सृज्यत्वे प्रमाणमिति सङ्क्षेपः एवं मिथ्यात्वे

प्रमाणासिद्ध्या कार्यजातं सदेव सोपादानब्रह्माप्ट-
थक्सिद्धं चोपादानात्मकत्वादुपादेयमात्रस्येति
सिद्धं "सदेव सौम्य ॥ ऐतदात्म्य"मित्यादिश्रुते-
रितिराद्धान्तः सदसच्छब्दयोः पञ्चमहाभूतपरत्वस्य
श्रुत्यैव कराठरवेण व्याख्यातत्वात् "यदन्यद्वायो-
रन्तरिक्षाच्चैतत्सद्वायुरन्तरिक्षं चासदि"तिश्रुते-
रित्यादिना ऽध्यासनिरासे पूर्वमेव विस्तरेण प्रत्युक्त-
त्वादन्यथा "न सत्तन्नासदुच्यत" इति स्मृत्या
ऽऽत्मनोऽप्यनिर्वचनीयत्वप्रसङ्गादित्यपि पूर्वमेवोक्त-
मलं विस्तरेण ननु माऽस्तु कार्यस्याध्यस्तत्वा-
सिद्ध्या मिथ्यात्वमनिर्वचनीयत्वे प्रमाणाभावात्
किन्त्वसत्त्वमेवास्तु प्रपञ्चस्य तत्र श्रुतिप्रमाणस्य
सत्वादित्याक्षिप्योत्तिष्ठन्ति असत्कार्यवादिनो वैशे-
षिकादयः "असद्व्यपदेशादि"ति तथाच तेषामय-
मभिप्रायः कार्यमसदेव कारणवैलक्षरायात् तथाहि
नहि कार्यकारणविषयकज्ञानस्यैकरूपत्वनियमः
शब्दभेदात् घटपट इतिशब्दात्कार्यप्रत्ययः मृत्-
तन्तव इतिशब्दात् कारणप्रत्ययः जलाहरणादि-
देहाच्छादनादि च घटपटादेः कार्यस्य फलं
कुड्यनिर्माणादिरज्जुनिर्माणादि च मृत्तन्त्वादि-

कारणस्य फलं नहि घटादिना कुड्यनिर्माणादि-सम्भवो नाऽपि मृदादिना जलाहरणादिसम्भव-श्चेति अन्वयव्यतिरेकेण फलभेदाच्च कालभेदादपि प्राक्कालीनं कारणम् उत्तरकालीनं कार्यम् आकृति-सङ्ख्याभेदाच्च पिण्डाकारमेकसङ्ख्याकं च कारणं कम्बुग्रीवपृथुबुध्नोदराकारमनेकसङ्ख्याकं च कार्यं किञ्च कार्यस्य सत्त्वे कारकव्यापारवैयर्थ्या-च्चेत्यादिभ्यो हेतुभ्यः कार्यस्यासत्त्वमिति तात्पर्येण शङ्क्यते काणादादिभिः ननु "असदेवेदमग्र आसीत् असद्वा इदमग्र आसी"दित्यादिभिः कार्यस्योत्पत्तेः प्राक्काले ऽसत्त्वव्यपदेशात्कथं सत्त्वमिति चेदित्यत्रोत्तरमाह भगवान्सूत्रकारः नेति प्रागपि कार्यस्यासत्त्वं व्यपदिश्यते इतिनाशा-सनीयं तत्रहेतुमाह धर्मान्तरेण वाक्यशेषादिति अभिव्यक्तनामरूपात्सत्त्वधर्मान्तरमनभिव्यक्तनाम-रूपमसत्त्वं तेनेयं श्रुतिरसत्त्वं व्यपदिशति नतु स्वरूपासत्त्वम् अनभिव्यक्तनामरूपकमतिसूक्ष्म-मासीदित्यर्थः तत्र हेतुः वाक्यशेषादिति उपक्रमे जाते संशये वाक्यशेषाद्विनिश्चीयते तात्पर्यमिति प्रेक्षावतां प्रक्रिया तथा चोपक्रमे ऽसदितिनिर्दिष्टे

ऽसदेवेदमग्र आसीदिति तदेव पुनस्तच्छब्देन परामृश्यते श्रुत्या तत्सदासीदिति असत्वसंशयं वारयति असतः कालत्रयसम्बन्धायोगात्तथात्वे चासीदिति प्रयोगानुपपत्तेः सच्छब्देन परामर्शानुपपतेश्च अपि "चासद्वा इद" मित्यत्रापि "तदात्मानं स्वयमकुरुते"ति वाक्यशेषे विशेष श्रवणान्न स्वरूपासत्त्वं किन्त्वव्यक्तनामरूपकत्वादतिसूक्ष्मंवस्त्वसच्छब्देनोच्यतइत्यर्थः तस्मात्कार्यं सदेव उपलभ्यमानत्वात् नह्यत्यन्तासतः खपुष्पादेः क्वाप्युपलब्धिरिष्टा चोपपन्ना वा यदुक्तं कारणवैलक्षण्यादिति कार्यासत्त्वे हेतुः सोऽपि स्वरूपासिद्धत्वेनाभासरूप एव नहि कारणान्वयहीनं कार्यं क्वाऽप्युपलभ्यते नाऽपि कालभेदात्तयोरत्यन्तभेदविषयकत्वान्न द्रव्यपरत्वमसम्भवात् कारणावस्थाभेदेनैवाकारसङ्ख्याफलादिभेदस्याप्युपपद्यमानत्वेनोक्तदोषायोगात् अन्यथा बालस्याप्यवस्थाभेदेन स्वरूपभेदो ऽङ्गीक्रियतां तर्कनिपुणैस्तथात्वे च योऽहं पितुरुत्सङ्गे ऽक्रीडं सो ऽहं वृद्धो बालांल्लालयामीति प्रत्यभिज्ञाऽनुपपत्तेः कृतनाशाकृताभ्यागमप्रसङ्गाच्च नाऽपि तस्य भावे कारकव्यापारस्य

वैयर्थ्यं पूर्वानभिव्यक्तस्याभिव्यञ्जनेनैव तस्य सार्थ-
क्योपपत्तेः अन्यथा ऽसतोऽभिव्यक्त्यङ्गीकारे कारक-
व्यापारेणाग्नेर्यवादीनां जलमन्थनाद् घृतादेस्सिक-
ताभ्यश्च तैलस्याभिव्यक्तिप्रसङ्गात् किञ्चासत्कार्य्य-
वादिनामपि कारकव्यापारोऽनुपपन्न एव प्रागुत्पत्तेः
कार्यस्यासत्त्वात् कार्यादन्यत्रैव कारकव्यापारेण
भवितव्यं तत्रान्यत्वाविशेषात्तन्तुगतकारकव्यापा-
रेण घटादीनामुत्पत्तिप्रसङ्गादित्यर्थः तस्मान्नासत्त्वं
कार्यस्येतिभावः किञ्च युक्तेः शब्दान्तराच्च उभाभ्यां
हेतुभ्यां कार्यस्य सत्त्वं निश्चीयते इत्युत्तरार्थः तत्र
युक्तिर्नाम अनुपपत्तिनिरासेनोपपत्तिसमर्थनेन
वस्तुनिर्णायकवाग्विसर्गः तथाहि यद्यसदेव कार्यं
तर्हि दध्यार्थिभिः क्षीरस्येव ग्रहः घटार्थिभिश्च मृद
एव ग्रहो न स्यात् प्रत्युत विपर्ययश्च स्यात् दध्यार्थि-
भिर्मृदादिग्रहः घटार्थिभिश्च क्षीरादिग्रहः स्याद-
सत्त्वाविशेषात्सर्वत्र नतु तदस्ति तस्मान्न तथा
अतः कारणे व्यक्ताव्यक्तोभयावस्थायां कार्यस्य
सद्भाव एव स्थूलसूक्ष्मव्यवस्थया सदसत्पदाभ्यां
श्रुत्या व्यपदिश्यते इत्यर्थः अन्यथा सर्वत्र सर्वा-
भावाविशेषेण जलमन्थनादपि किमिति घृतं

नोत्पद्यते ऽग्नेश्चाङ्कुरादिः कथं न जायते ननु साम्येऽप्यसच्चेत्क्षीरे एव दधिघृतादेः कश्चिदतिशयो न मृदादौ मृद्येव घटस्य कश्चिदतिशयो न क्षीरादाविति चेन्न अतिशयाङ्गीकारे प्रागवस्थायामसत्कार्यवादहानिः सत्कार्यवादसिद्धिश्च तव श्रीमुखेनैव सिद्धेति नच सत्कार्यवादे कारकव्यापारवैयर्थ्यमिति वाच्यं पूर्वमेव निरस्तत्वात् किञ्च कारणस्य कार्याकारव्यवस्थापकत्वेनैव सार्थकत्वात् कार्याकाराणां च कारणात्मकत्वनियमात् "ऐतदात्म्यं सर्वं"मितिश्रुतेः "वासुदेवात्मकान्याहु"रितिस्मृतेश्चेत्यादियुक्तेः कार्यस्य प्रागुत्पत्तेः सत्त्वनिश्चयात् शब्दान्तराच्चेति पूर्वोदाहृतादसत्प्रतिपादकादसच्छब्दादन्यस्तद्विपर्ययप्रतिपादनपरः शब्दः शब्दान्तरः "सदेव सौम्येद"मित्यादिस्तस्मादपीति यावत् यद्वा "तद्धैके आहुरसदेवेद मग्र आसी"दित्यसद्व्यपदेशपरस्ततो वैलक्षण्यपदः कथमसतः सज्जायेते"तिशब्दान्तरस्तस्मादप्युत्पत्तेः प्राक् कार्यस्येदंशब्दाभिधेयस्य सत्त्वनिश्चयात् अन्यथा तस्येदंशब्दव्यपदिष्टस्य सच्छब्दवाच्येन श्रूयमाणस्य सामानाधिकरण्यस्यासम्भवो दुर्वारः सदसतो-

रितरेतरात्यन्तविरुद्धयोः सामानाधिकरण्यासम्भ-
वात् एतेन स्थाणुरेव चोर इतिवत् "सर्वं खल्विदं
ब्रह्मे"तिजगत्कारणयोः सामानाधिकरण्यं सूप-
पन्नमित्युक्तिर्निरस्ता अश्रौतत्वात् अन्यथा ऽसत्-
कार्यवादप्रसङ्गात् स्थाणुचौरयोरुपादानोपादेयत्वा-
भावेन दृष्टान्तासिद्धेश्च "तज्जलानी"तीति वाक्य-
शेषात् एतेनैव कार्यकारणयोरत्यन्तभेदपक्षो ऽपि
निरस्तः अत्यन्तभिन्नयोर्गवाश्वयोरिव सामानाधि-
करण्यासम्भवात् "गौरनाद्यन्तवती०ऊर्द्ध्वमूलोऽर्वाक्
शाख एषोऽश्वत्थः सनातनः तत्सदासीत् अथ
नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं अथैनमाहुः
सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते अष्ट-
रूपामजां ध्रुवा"मित्यादिश्रुतिभ्यः "ऊर्द्ध्वमूलमधः
शाख"मित्यादिस्मृतिश्च ननूक्तश्रुतिस्मृतीनां भेद-
पराणां व्यावहारिकसत्तापरत्वेन नैराकाङ्क्ष्यान्न-
पारमार्थिकसत्त्वपरत्वमभेदश्रुतीनां तु परमार्थ-
सत्त्वपरत्वात्प्राबल्यमिति चेन्न कपोलकल्पनां विना
प्रमाणान्तराभावात् नच षड्लिङ्गोपेतत्वेन प्राबल्य-
मिति वाच्यं भेदश्रुतीनामपि तथात्वस्य पूर्वमेव
प्रतिपादितत्वात् नच निरवकाशत्वेनाभेदश्रुतीनां-

प्राबल्यं शङ्कनीयं भेदश्रुतीनामपि तथात्वात् नच तद्विषयभेदस्य प्रत्यक्षप्राप्तत्वेन तासामनुवादपरत्वमिति वाच्यं निर्विशेषाधिष्ठानरूपसत्ताया अभेदशास्त्रविषयाया अपि घटो ऽस्ति पटो ऽस्तीति प्रत्यक्षप्राप्ततया ऽभेदश्रुतीनामपि तदनुवादपरत्वस्य साम्यात् तच्च पूर्वमेवोक्तं बहुशः किञ्चाभेदश्रुतिगम्यं निर्विशेषाद्वितीयं ब्रह्म तासां विषयो नवेति नाद्यः तस्य पदार्थत्वेन भेदशास्त्रवदभेदश्रुतीनामपि व्यवहारपरत्वं भवतां श्रीमुखेनैव सिद्धं निर्विशेषो द्वितीयं ब्रह्म व्यावहारिकं अभेदश्रुतिविषयत्वात् पदार्थत्वाच्च तव मते व्योमादिवदिति प्रयोगात् नाद्वितीयः इदमर्थत्वेन शब्दादिप्रमाणगोचरे भेदशास्त्रवदभेदशास्त्रस्यापि व्यवहारपरत्वं सूपपन्नं किञ्च सर्वप्रमाणाविषयस्य शशशृङ्गायमाणत्वेनाद्वितीयपरशास्त्रस्यापि निर्विषयत्वेन बाधप्रसक्तेर्दुर्वारत्वात् तव पक्षे भेदशास्त्रस्य निर्विषयत्वेनैव बाधः अस्मत्पक्षे तु तस्य सर्वज्ञसर्वशक्तेर्विश्वकारणस्यैक्यप्रतिपादनपरत्वेन नैराकाङ्क्ष्यान्नोक्तदोषयोग इतिपूर्वमेवोक्तत्वादित्यलं विस्तरेण ननु यदि विवर्त्तपक्षानङ्गीकारस्तर्हि को वा पक्षो

ऽभिप्रेतः सङ्घातवादो वा ऽऽरम्भवादो वा परिणाम-
वादो वेति नाद्यः वाह्यपक्षप्रवेशात् न द्वितीयः
तार्किकपक्षालम्बनप्रसङ्गात् नाऽपि चरमः आनु-
मानिकसाङ्ख्यमतप्रवेशात् पक्षान्तराभावाच्चेति चेन्न
चरमपक्षस्यैवास्मदभिप्रेतत्वात् सूत्रकाराभिमत-
त्वाच्च "आत्मकृतेः परिणामात् "स्वयमात्मानम-
कुरुत" इतिश्रुतिसूत्राभ्याम् नचोक्तदोषस्य ताद-
वस्थ्यमिति वाच्यम् वक्ष्यमाणरीत्या सामञ्जस्यात्
अयम्भावः परिणामो द्विविधः स्वरूपपरिणामः
शक्तिविक्षेपलक्षणपरिणामश्च आद्यो ब्रह्मानधिष्ठि-
तस्वतन्त्रप्रकृतिस्वरूपपरिणामवादोयं ऽसाङ्ख्यानां
राद्धान्तः द्वितीयश्चौपनिषदानामिति विवेकः
तथाच सर्वज्ञत्वसर्वशक्त्यादिनिलयः परब्रह्मभूतः
श्रीपुरुषोत्तमः स्वात्मकस्वाधिष्ठितनिजशक्तिविक्षे-
पेण जगज्जन्मादिकं भावयति यथा अच्युत-
स्वरूपादिभ्य एवाकाशोर्णनाभ्यादिभ्यः शब्द-
वाद्योस्तन्त्वादेश्च जन्मादिकं प्रत्यक्षागमादिमान-
सिद्धं तेषां तादृशपरिमितशक्तियोगमात्रादेव
तथैवात्र निर्विकाराप्रच्युतस्वरूपादेव परब्रह्मणः
श्रीभगवतो जगज्जन्मादिकं बोध्यं ब्रह्मवृत्त्यचिन्त्या

नन्तस्वाभाविकसर्वशक्तियोगादेव "पराऽस्य शक्तिर्विविधैव ॥ यः सर्वज्ञः सत्यकामः सत्यसङ्कल्पः ॥ असत्यमाहुर्जगदेतदज्ञा शक्तिं हरेर्न विदुर्ये परां हि यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत्सत्त्वकर्मा महात्मा विचित्रशक्तिः पुरुषः पुराणो नचान्येषां शक्तयस्तादृशाः स्यु"रित्यादिश्रुतिभ्यः शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः भवन्ति तपतांश्रेष्ठ पावकस्य यथोष्णते"त्यादिस्मृतिभ्यश्च सर्वोपेतेतिसूत्राच्च नच शक्तिविक्षेपोपसंहारवादे किं प्रमाणमितिवाच्यं शास्त्रस्यैव मानत्वात् "यथोर्णनाभिस्सृजते गृह्णते च" यथा "सतः पुरुषात्केशलोमानि यथा पृथिव्या ओषधयः सम्भवन्ति तथाऽक्षरात्सम्भवतीह विश्व"मित्युपपत्तिसहकृतश्रुतेः "प्रधानं पुरुषं चापि प्रविश्यात्मेच्छया हरिः क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययाविति विक्षेपपर्यायक्षोभशब्दप्रयोगस्मरणात् किञ्चास्तां पर्यायप्रयोगः कण्ठरवेणैव दृष्टान्तोपपत्तिपूर्वकं स्मर्यते श्रीभीष्मेण- "प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः तद्वद्भूतानि भूतात्मा सृष्टानि ग्रसते पुन"रिति भारते

एतेन परिणामवादे विकारस्यावश्यम्भावः निरवयवशास्त्रवाधश्च "कृत्स्नप्रसक्तिर्निरवयवशब्दव्याकोपो वे"तिसूत्रात् अस्यार्थः परिणामवादे कृत्स्नस्य परिणामोऽभिप्रेतस्तदेकदेशस्य वा नाद्यः ब्रह्मणः कार्याकारेण परिणामापत्तौ सत्यां मुक्तोपसृप्यब्रह्माभावप्रसङ्गात् विकारत्वानित्यत्वप्रसक्तेश्च तथात्वे "नित्यं विभुं सर्वगत"मित्यादिश्रुतिव्याकोपाच्च किञ्च विकारापन्नस्य कृत्स्नस्य ब्रह्मणो जगदाकारतया प्रत्यक्षगोचरत्वेन सर्वेषामपि प्राप्तत्वात्सर्वमोक्षप्रसङ्गात् साधनानां तदुपदेशशास्त्राणां तदुपदेष्टृणां चानर्थक्याच्च नद्वितीयः सदेशत्वापत्त्या सावयवत्वयोगेन "निष्कलं निष्क्रियं शान्त"मित्यादि निरवयवत्वप्रतिपादकशास्त्रव्याकोपाच्चेत्यादिविकल्पा निरस्ताः स्वरूपपरिणामानभ्युपगमात् एतेनैव निरवयवस्य कथं परिणाम इत्यादि तर्का अपि निरस्ताः आकाशादिवदुपपत्तेः "आकाशाद्वायु"रितिश्रुतेः नच तस्यापि सावयवत्वं जन्यत्वादिना ऽवगम्यते इति वाच्यम् अपञ्चीकृतस्यात्र विवक्षितत्वात् "आकाशवत्सर्वगतश्च नित्य" इति श्रुतेरित्यादितात्पर्यं वुद्धौ कृत्वा सूत्रयति भग-

वान्वादरायणः "पटवच्चे"ति यथा सङ्कुचितः पटः पटत्वेनागृह्यमाणोऽपि पट एव प्रसारणे तु स्पष्टं प्रत्यक्षेण गृह्यते तथातिरोभावसमये ऽनभिव्यक्तं विश्वं नामरूपाभ्यामगृह्यमाणमपि सदेव आविर्भावसमये तु प्रत्यक्षागमादिना स्पष्टं नामरूपाभ्यां गृह्यते इतिसूत्रार्थः तथोक्तं वैष्णवे श्रीध्रुवेण "न्यग्रोधः सुमहानल्पे यथा वीजे व्यवस्थितः संयमे विश्वमखिलं वीजभूते तथा त्वयि वीजा दङ्कुरसम्भूतो न्यग्रोधः सुसमुत्थितः विस्तारं च यथा याति त्वत्तः सृष्टौ तथा जग"दित्यादिना श्रुत्यर्थस्तु यथोर्णनाभेरूर्णाप्रसारणाकुञ्चनमात्र-योग्यतावत् ऊर्णाया आविर्भावतिरोभावौ तद-प्रच्युतस्वरूपतयैव भवतः यथाच पुरुषादन्नमया-त्तन्मात्रशक्तिमतः केशलोमोत्पत्तिमात्रं यथाच पृथिव्यास्तन्मात्रशक्तिमत्त्या औषधीनां जन्म यव-व्रीह्याद्युत्पत्तिः तथा सर्वकार्योत्पादनार्हा चिन्त्या-नन्तस्वाभाविकाघटघटनापटुसर्वशक्तिमतो ऽक्षर-पदार्थात्परब्रह्मणः श्रीपुरुषोत्तमाद्विश्वमखिलप्र-पञ्चरूपं कार्यं सम्भवतीति यदि स्वस्वाभावि-काल्पाल्पशक्तीनां जडादीनामपि तत्तच्छक्त्यनु-

कूलतत्तत्कार्यभावापत्तौ ह्यप्रच्युतस्वरूपत्वं प्रत्यक्षादिप्रमाणसिद्धत्वेनापह्नोतुमशक्यं तर्ह्यचिन्त्यानन्ताखिलकार्योत्पादनार्हशक्तिमतः परब्रह्मणः श्रीवासुदेवस्य जगद्भावापत्तावप्यप्रच्युतस्वरूपत्वेन कौटस्थ्ययोगः को ऽशक्य इतिभावः तस्मात्कार्यं सद्रूपमेव तदुपादानं निमित्तं च कारणं परब्रह्मैवेति सर्वप्रमाणसिद्धं तत्र कारणत्वं नाम कार्योत्पत्तिप्राक्कालीननियतसम्बन्धाश्रयत्वं तद् द्विविधं निमित्तोपादानभेदात् तत्र निमित्तत्वं नाम कार्योत्पत्त्यनुकूलज्ञानचिकीर्षाकृतिमत्त्वे सति तद्व्यापाराश्रयत्वं व्यापाराश्रयत्वं च स्वस्वानादिकर्मसंस्कारवशीभूतात्यन्तसङ्कुचितभोगानर्हज्ञानशक्तिधर्मकाणां चेतनानां फलभोगार्हज्ञानप्रकाशे ततत्त्कर्मफलभोगार्हैः स्वसृष्टैस्तत्तद्भोगकरणैः सह संयोजयितृत्वं परमते तत्त्वं दुर्घटं तथाहि कर्तृत्वं नाम किं शुक्त्यादिवदधिष्ठानमात्रत्वं वा कुलालादिवदुपादानगोचरप्रयत्नचिकीर्षादिमत्त्वं वा नाद्यः तन्मते ऽधिष्ठानातिरिक्तोपादानत्वाभावेन कर्तृत्वोपादानत्वयोः सामानाधिकरण्योक्त्ययोगात् "तदैक्षत ॥ नामरूपे व्याकरो"दित्यादिश्रुतिबाधाच्च नहि चेतनो-

वा स्वस्मिन्नारोपितं सङ्कल्प्य करोतीतिभावः न द्वितीयः कार्यस्य कल्पितत्वाङ्गीकारेण कुलालवदुपादानगोचरप्रयत्नचिकीर्षादिमत्त्वासम्भवात् नहि कल्पितशुक्तिरूप्यादिकं प्रति भ्रान्तस्यान्यस्य वा कर्त्तृत्वं प्रामाणिकं भवति नच रूप्यादौ साक्ष्येव कर्त्ता नह्यदर्शनमात्रेण कर्त्रपलापो वक्तुं शक्यः त्वन्मते सर्वज्ञस्य कर्तुरपलापापत्तेरिति वाच्यम् इदमर्थावच्छिन्नस्येदमाकारवृत्त्यवच्छिन्नस्य वा त्वदभिमतस्य साक्षिण इच्छाद्यभावे कर्त्तृत्वासम्भवात् सर्वज्ञे कर्त्तरि श्रुत्यादेरिव शुक्तिरूप्यादिकर्त्तरि प्रमाणस्याभावात् नहि नामरूपे करवाणीति श्रुत्युक्तेश्वरस्येव शुक्तिरूप्यं व्याकरवाणीति कस्याप्यनुभवो दृश्यते नच भ्रान्तवदध्यासद्रष्टृत्वं भ्रान्तस्य प्रेक्षापूर्वकमारोपितकर्त्तृत्वाभावात् ब्रह्मणो ऽभ्रान्तत्वेनाकर्त्तृत्वस्य जीवस्य भ्रान्तत्वेन कर्त्तृत्वस्यापाताच्च नचेष्टापत्तिः श्रुत्यादिविरोधात् श्रौतं परमेश्वरं मुक्त्वा संसारिणो जगज्जन्मकर्त्तृत्वसम्भावनाया असम्भवात् जगत ईश्वरं मुक्त्वा संसारिण उत्पत्त्यादिसम्भावयितुमशक्यमित्यादित्वद्भाष्यविरोधाच्च नच शुद्धस्या-

भ्रान्तत्वेऽपि मायासम्वलितः कर्त्तेश्वरो भ्रान्त इति वाच्यं तथात्वे तस्य संसाराद्यापातेन सर्वज्ञश्रुति वाधात् नच मायाविवद्व्यामोहकत्वं व्यामोहनीयानामपि कल्पितत्वेन तद्दर्शने परेशस्य भ्रान्तत्वापत्तेः नह्यैन्द्रजालिकः कल्पितानेव मोहयति किञ्च जन्मादिसूत्रे अर्थलब्धसार्वज्ञ्यस्फोरणार्थं शास्त्रयोनिसूत्रमिति त्वन्मतस्य भङ्गापत्तेः अध्यस्तद्रष्टृव्यामोहकस्य सार्वज्ञ्यासम्भवात् नामरूपे व्याकरवाणीत्यादिश्रुतिविरोधाच्च नहि मायावी राजादिकं करवाणीति सङ्कल्प्य करोति किन्तु दर्शयानीति सङ्कल्प्य दर्शयति नच करवाणीति सङ्कल्पपूर्वकं कर्त्तृत्वं मायिन्यप्यस्तीति वाच्यं कल्पितपदार्थकर्त्तृत्वभावेऽपि प्रतारकस्य मायिनः करवाणि करोमीत्युक्तिसम्भवेऽपि परमाप्तस्य परमेश्वरस्य वास्तवकर्त्तृत्वं विना तथोक्त्यसम्भवात् नच मायावित्वेऽपि सृज्यमानः पिकानां दर्शनाभावेन सार्वज्ञ्यस्य दूरादपास्तत्वात् स्वस्मिन् स्वमायामोहनस्य व्याहतत्वादलं कुतर्कनिरासैः सिद्धान्ते तु "तदैक्षत वहु स्यां प्रजायेय ॥ नामरूपे व्याकरवाणी"त्यादि श्रुतेरेव कारणत्वे मानात् अथोपादानत्वं च कार्या-

कारभजनार्हशक्तिमत्त्वे सति तदवस्थापत्तियोग्यत्वं क्षेत्रक्षेत्रज्ञत्वराजत्वरादिपदार्थभूतस्वस्वाभाविकसूक्ष्मावस्थापन्नानां तत्तद्गतसूक्ष्मसद्रूपकार्याणां च स्वाभाविकानां स्वान्वितानां स्थूलतया प्रकाशकत्वमित्यर्थः ब्रह्मणो जगदुपानत्वेच "यतो वा इमानि भूतानि जायन्ते ॥ जन्माद्यस्य यतः ॥ यतः सर्वाणि भूतानि भवन्त्यादियुगागमे" इति श्रुतिस्मृतिसूत्रेषु "जनिकर्त्तुः प्रकृति" रितिपाणिनीयसूत्रे प्रकृत्यर्थविहितपञ्चम्याः प्रामाण्यात् ननुच वृत्तौ "पुत्रात् प्रमोदो जायते इत्यनुपादानेऽपि पञ्चमीदर्शनात् प्रकृतिपदं हेतुपरमिति उपादानपरत्वनिषेधात् न्यासेऽपीदमेवाश्रित्यासति प्रकृतिग्रहणे उपादानसंज्ञा स्यात् प्रत्यासन्नत्वान्नेतरस्य प्रकृतिग्रहणात्कारणमात्रस्य भवतीति पदमनुपादानेऽप्यपादानसंज्ञासिद्ध्यर्थमित्युक्तत्वात् महाभाष्यकारैरपि "अयमपि योगः शक्यो वक्तुं गोलोमाऽजलोमा विलोमभ्यो दूर्वा जायन्ते अपक्रामन्ति तास्तेभ्य" इत्यादिना लोमादीनां दूर्वादीन्प्रत्यवधित्वात् "ध्रुवमपायेऽपादान" मित्यनेनैवापादानसंज्ञासिद्धेरिदं सूत्रमनारभ्यमितिप्रत्याख्याततत्वात्

कैयटेऽपि अपक्रमणावधित्वे लोमादिषु कार्यप्रतीतिर्न सम्भवतीत्याशङ्क्य विलान्निष्क्रामतो दीर्घभोगस्य भोगिनो ऽविच्छिन्नतया तत्रोपलब्धिरित्यवधित्वस्यैव तत्रोपपादितत्वात् अत उपादान एव जनिकर्तुरित्यत्र पञ्चमीति नियमः अन्यत्रापि सम्भवादिति चेन्न कारणमात्रार्थकत्वेऽप्युपादानपरत्वाभ्युपगमात् छागपशुन्यायेन यथा "पशुना यजे" दित्यत्र पशुपदस्य पशुमात्रवाचकत्वेऽपि छागस्य वपाया इतिवाक्यशेषात्पशुविशेषपरत्वं तद्वत्प्रकृतेऽप्यनुसन्धेयं नचोक्तन्यायविरोधोऽत्र निश्चयौपयिकवाक्यशेषाभावादिति शङ्कनीयम् "आत्मन आकाशः सम्भूत" इत्यादावपादाने पञ्चम्यां सच्चत्यच्चाभवदिति वाक्यशेषेण "सोऽकामयत वहुस्या" मित्येकच्छाखान्तरस्थवाक्येन प्रतीतसामानाधिकरण्यस्य नियामकत्वात् वस्तुतस्तु "तदैक्षत वहु स्यां सो ऽकामयत वहु स्यां सच्च त्यच्चाभवत् तदात्मानं स्वयमकुरुत तद्भूतयोनि" मित्यादिश्रुतीनां प्रकृतिश्चेत्यादिसूत्रस्य चात्र मानत्वात् परमते तु ब्रह्मण उपादानत्वप्रतिपादनं प्रामादिकं भ्रमाधिष्ठाने शुक्त्यादावभवदितिप्रयोगाभावात् तत्प्रयोगविषय-

बहुभवनरूपोपादानतया ब्रह्मणस्त्वया ऽनभ्युपगमात् नच शुक्तेरूप्यस्यानुपादानत्वाच्छुक्तिरूपमभवदिति व्यवहाराभावोयुक्त इतिवाच्यम् इदंरूप्यमित्यत्र रूप्याभिन्नतया प्रतीतस्येदमर्थस्य रूप्योपादानतया त्वदभिमतस्येदं रूप्यमभवदिति व्यवहाराविषयत्वात् किञ्च सृष्टेः प्रागहमर्थाभावेनोत्तमपुरुषप्रयोगानुपपत्तेः नचाविद्यापरिणामे विशिष्टे ऽहमि प्रयोगसम्भवेनोत्तमपुरुषोपपत्तिः सूपपन्नेति वाच्यम् उक्तसङ्कल्पात्प्रागविद्यापरिणामाभावात् अयम्भावः सङ्कल्पात्प्रागविद्यापरिणामोऽस्ति नवेति वक्तव्यम् नाद्यः एकमेवाद्वितीयमिति श्रुतिविरोधात् नान्त्यः उक्तोत्तमपुरुषप्रयोगासम्भवादिति किञ्च "तदात्मानं स्वयमकुरुते"ति श्रुतिविरोधात् अन्यथा ऽकुरुतेतितस्वोक्त्ययोगात् विवर्त्ताधिष्ठाने इदमर्थे आत्मानं रूप्यात्मना ऽकुरुतेति व्यवहारादर्शनाच्च किञ्च तद्भूतयोनिमितिश्रुतिविरोधः इदमर्थे रूप्याद्यधिष्ठाने योनिशब्दाप्रयोगात् "सर्वं खल्विदं ब्रह्म तज्जलानी"तिसहेतुकसामानाधिकरण्यश्रुतिबाधश्च नच स्थाणुरेव चौर इतिवद्बाधितसमानाधिकरणत्वाङ्गीकारान्न बाध इतिवाच्यं पूर्व-

मेव निरस्तत्वात् किञ्चारोपिताभेदपरत्वे शुक्ता-विदं रूप्यमितिशब्दस्येव श्रुतेः सुतरामप्रामाण्या-पत्तेः श्रुतत्यागाश्रुतकल्पनाप्रसङ्गात् तज्जलानीति-हेतुबाधाच्च नहि शुक्तौ रूप्यस्य जन्मलयप्राणा-नादि व्यवहारो दृष्टचर इत्यर्थः ननु तव सत्कार्य-वादपक्षे ऽपि बहु स्यामित्यत्र बहुपदं सृज्यपर-मेव सृज्यानां च नियाम्यरूपाणां ब्रह्माभिन्नतया नित्यसिद्धत्वेन तत्रेच्छायोगादितिचेन्न "भूत-ग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते" इतीश्वरीय-प्रत्यभिज्ञावचनात् सत्यकार्यवादे सृज्यानां नित्यत्वे ऽपि तत्रेच्छासम्भवात् सद्रूपस्य नामरूप-व्याकरणमात्रस्यैवात्रेच्छाविषयत्वात् नोक्तदोषा-वकाश इतिसंक्षेपः नह्यारोपितपदार्थे सएवाय-मितिलोकवेदयोः प्रत्यभिज्ञा दृश्यते उपपद्यते वेति भावः ननु स एवायं दीपस्तदेवेदं जलमिति सादृश्यमात्रेणापि प्रत्यभिज्ञा दृश्यते तथाच नोक्तदोष इतिचेन्न तर्ह्यनित्यत्वमेव सिद्ध्यति नतु शुक्तिरूप्यादिवन्मिथ्यात्वमन्यथा शुक्तिरूप्यादि-वद्बाधः कुतो न स्यात् प्रत्युत तथोपलम्भात् तस्मा-द्बाधाभावान्यथानुपपत्त्या मिथ्यात्वासिद्धेः नहि

शुक्तिरूप्यादौ कस्याप्यनुन्मत्तस्य प्रत्यभिज्ञा जायते अन्यथा ऽऽरोप्यत्वस्यैवासम्भवात् बाधं विना ऽऽरोप्यत्वनिर्णये मानान्तराभावाच्चेत्यलम्विस्तरेण तस्मात्सार्वज्ञ्यसर्वशक्त्याद्यनन्तस्वाभाविकगुणादि-निलयनिः शेषदोषगन्धाघ्रातमाहात्म्यं ब्रह्मैव जग-दुपादाननिमित्तं चेति उक्तोभयलक्षणासमन्वयभूमि-त्वादिति सूत्रकाराभिप्रायः "प्रकृतिश्चे"तिसूत्रात् प्रकृतिपदं उपादानपरं चकारो निमित्तसमुच्चयार्थ-स्तथा चोपादानं निमित्तं च ब्रह्मैवेति सूत्रार्थः नन्वभिन्ननिमित्तोपादानस्य क्वाप्यदृष्टचरत्वादत्य-न्ताप्रसिद्धस्य शिष्टैरनङ्गीकारात्कथमिव प्रामा-ण्यमिति चेन्न केषांचित्तार्किकादीनां मते ऽपि घटेश्वरसंयोगादिकार्ये परमेश्वरस्य जीवगतं ज्ञानादिकार्ये च जीवस्य तथात्वभ्युपगमात् नात्यन्ताप्रसिद्धिदोषावकाशः ब्रह्म जगदभिन्न-निमित्तोपादानं भवितुमर्हति तादृशशक्तिमत्त्वात् परमते घटेश्वरसंयोगादौ कार्ये ईश्वरवत् जीवगत-ज्ञानादिकार्ये जीववच्चेत्यनुमानात् ननु यदुक्तम् अचेतनस्य परिणामिसत्तायोगाद्भवतु तत्कारणत्वं ब्रह्मणः चेतनस्य तु कूटस्थसत्ताश्रयत्वेन जन्माद्य-

सम्भवात् कथं तत्कारणत्वम् अन्यथा नित्यत्वापत्तेः प्रत्यगात्मानो नित्याः जन्मादिमत्त्वात् घटादिवदिति प्रयोगात् "न जायते म्रियते वा विपश्चित् ॥ नात्मा श्रुते" रितिशास्त्रव्याकोपात् कृतनाशादिप्रसङ्गाच्चेति चेन्न प्रामादिकोक्तेः स्वानादिकर्मणां मध्ये फलं दातुमुन्मुखस्य प्रबलस्यैकतमस्य कर्मविशेषस्य फलानुभूतये तदनुकूलदेहादिसंयोगे सति तद्भोगार्हज्ञानशक्त्यादिविकाशस्य जीवजन्मपदार्थत्वात् अत्यन्तविस्मृतिपूर्वकस्थूलदेहादिवियोगेन भोगाद्यनर्हतापत्तेश्च मृत्युनाशादिपदार्थत्वान्नोक्तदोषावकाशः वस्तुतस्तु अस्याशङ्काया उन्मत्तप्रलापत्वमेव श्रुतेस्तावत्सर्वकार्यं प्रत्येव ब्रह्मणः कारणत्वप्रतिपादकत्वेन जीवे तत्प्रसङ्गाभावात् यदि प्रत्यगात्मा कार्यं स्याद्ब्रह्मणश्चतत्तदुपादानत्वाभावे सर्वकारणत्वे न्यूनताप्रसक्तिः स्यान्नतु तदस्ति तस्यानाद्यनन्तकूटस्थत्वश्रवणादितिभावः नन्वनादिनिधना नित्येति वेदस्यानाद्यनन्तत्वश्रवणात्कारणत्वं ब्रह्मणोऽनुपपन्नं तथात्वे च ब्रह्मणः समस्तकारणत्वे ऽव्याप्तिरिति चेन्न तस्यापि निःश्वसितन्यायेनाविर्भावकारणत्वस्य ब्रह्मगतत्वे-

नोक्तदोषानवकाशात् "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद" इतिश्रुतेरुक्तन्याये मानत्वात् "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" इतिश्रुतेश्च तदाविर्भावे मानत्वात् वेदानां जन्मादयस्तु निर्विकारित्वेनैवाविर्भावतिरोभावमात्रत्वं नत्वानुपूर्व्याऽन्यथाभाव इतिसिद्धान्तसेतुकायां श्रीसुन्दरभट्टपादोक्तेः अचेतनप्राकृतवर्गस्याकाशादेस्तु परिणामिसत्ताकत्वेन स्थूलसूक्ष्मावस्थान्तरव्यक्ताव्यक्तनामरूपान्तरविभागेनावस्थितेरेवोत्पत्तिलयशब्दाभ्यां प्रतिपाद्यते नतु तार्किकवत् असतो जन्मनाशौ शशशृङ्गादावतिप्रसङ्गात् नाप्यन्येषामिवारोपापवादौ श्रुतिप्रमाणशून्यत्वात् तस्मादुक्तलक्षणं ब्रह्म जगदुपादानं निमित्तं च तदुपादेयत्वात्कार्यस्यापि परतन्त्रसत्त्वं स्वोपादानात्मकत्वाच्च तदपृथक्सिद्धत्वमिति श्रीभगवतः सूत्रकारस्याभिप्राय इत्यलम्विस्तरेण उक्तसिद्धान्तसिद्धये तदुपोद्बलनरूपं दृष्टान्तान्तरमाह भगवान् सूत्रकारः "यथा च प्राणादिः" यथा प्राणायामे सङ्कुचितशक्तिः प्राणः प्राणापानादिविशेषरूपेणागृह्यमाणो ऽपि सूक्ष्मसद्रूपप्राणापानादिविशेष-

वानेव मुक्तायामस्तु तत्तद्विशेषरूपेणाकुञ्चनप्रसा-
रणादिकार्यान्यथानुपपत्त्या स्पष्टं गृह्यते तद्वत्
सृष्टेः प्राक् अनभिव्यक्तनामरूपकं कार्यं तत्तन्नाम-
रूपाभ्यामगृह्यमाणमपि स्वोपादाने सदेव सृष्टि-
समये तु व्याकृतनामरूपत्वात् स्पृष्टं गृह्यतइत्यक्ष-
रार्थः ननु स्यादेतदर्थापत्त्यनुमानयोरप्रामाण्यं
यदि श्रुतिनिर्मूलं स्यान्नतु तदस्ति किन्तु "सदेव
सौम्येदमग्र आसीदेकमेवाद्वितीयं नेह नानाऽस्ति-
किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव
पश्यती"त्यादिश्रुतीनां सावधारणानामन्वयव्यति-
रेकेण कारणैकत्वनिश्चायकानां तदितरवस्तुमात्र-
निषेधपराणां तन्मूलत्वात्कथमप्रामाण्यं अय-
म्भावः कारणस्य परब्रह्मण उक्ताभिः श्रुतिभिरव-
धारणेनान्वयव्यतिरेकाभ्यां चैकत्वावधारणं द्वितीय-
वस्तुनोऽनृतत्वं विनाऽनुपपन्नमतस्तस्य मृषात्वं
प्रत्यगात्मनश्च तत्त्वमस्यादिना स्वप्रसिद्धब्रह्मात्म-
त्वोपदेशः शारीरत्वस्य बाधं विना ऽनुपपन्नोऽतस्त-
स्याऽपि मृषात्वमित्यवगम्यते तस्माद्ब्रह्मात्मत्व-
ज्ञानेन रज्जुज्ञानेन सर्पादिबाधवत् शारीरत्वस्य
बाधे तत्कृतसर्वव्यवहारस्यापि बाधः स्यादिति

"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि"ति-श्रुतेः तथैवाहच भगवान्भाष्यकारः "मृत्तिकेत्येव सत्य" मितिप्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात् वाचारम्भणशब्देन च विकारजातस्यानृतत्वाभिधानात् दार्ष्टान्तिकेऽप्यै"तदात्म्यमिदं सर्वं तत्सत्य" मितिच परमकारणस्यैकस्य सत्यत्वावधारणात् "स आत्मा तत्त्वमसि श्वेतकेतो" इति च शारीरस्य ब्रह्मभावोपदेशात् स्वयं प्रसिद्धं ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते न यत्नान्तरसाध्यमतश्चैवं शास्त्रीयं ब्रह्मात्मत्वमवगम्यमानं स्वाभाविकस्य शारीरत्वस्य बाधकं सम्पद्यते रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनां बाधितेच शरीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवतीत्यादिनेति चेन्न एकत्वावधारणश्रुतीनां जगत्कारणसार्वज्ञ्यादिमत्परब्रह्मैकत्वपरत्वेन नेह नानेत्यादि श्रुतीनां च कारणगतस्वतन्त्रसत्तावच्छिन्नवस्तुमात्रनिषेधपरत्वेन चास्मत्पक्षे स्वार्थे एव प्रामाण्यात् न तावत्कारणैकत्वावधारणं निषेधश्चेतरस्य वस्तुजातस्यानृतत्वे नियामकं अपितु स्वविषयसमसत्ताकवस्तुनिषेधमात्र एव

यथा चोलराजा एको ऽद्वितीयो ऽभूदिति वाक्यं न तद्राजान्तरमात्रस्य तत्सेनादीनां वा निषेधपरं किन्तु तत्तुल्यनृपान्तरस्य निषेधमात्रपरमेव एवं प्रकृतेऽपि समञ्जसं किञ्च कार्यानृतत्वे ऽसत्कार्यवादापत्त्या वैदिकत्वं दत्ततिलाञ्जलिस्स्यात् "असत्यम प्रतिष्ठं ते जगदाहुरनीश्वर"मिति आसुरपक्षाभ्युपगमश्च "सदेव सौम्येदमग्रआसीत् ॥ सत्त्वाच्चावरस्ये"त्यादिशास्त्रव्याकोपश्च अत्रविशेषनिरासस्तु पूर्वमेव विस्तृतः तत्त्वमस्यादिश्रुतयो ऽपि पूर्वमेव व्याख्याताः तासां ब्रह्मतादात्म्यविधानपरत्वस्येष्टत्वात् प्रपञ्चसाध्यस्तत्त्वमपि पूर्वमेव निरस्तं तथात्वे सुतरां वाधाभाव इतिसिद्धं नापि "यत्र त्वस्ये"ति श्रुतिः प्रपञ्चवाधपरा किन्तु कारकजातस्य स्वतन्त्रसत्तानिषेधेन तस्य ब्रह्मात्मकत्वविधानपरेति सर्वं समञ्जसम् अन्यथा "सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वश" इत्यादिश्रुतिविरोधात् श्रुत्यर्थस्तु सदेवेत्यत्र स्वतन्त्रसत्ताश्रयः सत्पदार्थः "आत्मा हि परमः स्वतन्त्रो ऽधिगुणा" इतिश्रुतेः एकपदं ब्रह्मणः त्वराक्षराभ्यामुत्कर्षरूपप्राधान्यं विधत्ते "एके

मुख्यान्यकेवला" इत्यमरोक्तेः एकशब्दोऽयं अन्य-प्रधानासहायसंख्या प्रथमसमानवाचीति "एको-गोत्र" इतिसूत्रे कैयटोक्तेश्च सहायान्तरशून्यत्वो-त्कर्षपरो वा "ष्णान्ताः षडि"ति सूत्रे "एकशब्दोऽयं बह्वर्थः अस्ति संख्यार्थोऽस्त्यसहायवाच्यस्त्यन्यार्थ" इतिमहाभाष्यकारोक्तेश्च तथाच क्षराक्षराभ्या-मुत्कृष्टमन्यसहायहीनमेकसंख्याकमेकपदार्थः ॥ "प्रधानक्षेत्रज्ञपतिः अक्षरात्परतः पर" इत्यादि-श्रुतेः "यस्मात् क्षरमतीतो ऽह"मिति "मत्तः पर-तरं नान्य"दितिश्रीमुखोक्तेश्च अयोगव्यवच्छेदार्थः प्रथमो ऽवधारणाशब्दः तदधिकोत्कृष्टव्यवच्छेदपरो द्वितीय एवकारः स्वातिशयवस्तुशून्य इत्यर्थः अद्वितीयशब्दश्च समाननिषेधपरः "अस्य गो-र्द्वितीयो ऽन्वेष्टव्य" इत्युक्तेः गौरेव द्वितीयो ऽन्वेष्यते नाश्वो न गर्दभ इतिमहाभाष्यकारोक्तेः "न तत्सम-श्चाभ्यधिकश्च दृश्यते" इति श्रुतेः "न त्वत्समो ऽस्त्यभ्यधिकः कुतो ऽन्य" इतिस्मृतेश्च यद्वा एक-शब्दः संख्यापरः एवाद्वितीयशब्दयोश्चेतननिषेध-परत्वम् उभयोरपि ब्रह्मसमस्वतन्त्रसत्ताकत्वाभावात् किञ्च स्वगतानन्तासंख्येयज्ञानादिकारुण्यादि-

कल्याणधर्माणामपि स्वरूपेतरस्वतन्त्रसत्ताभावेन तद्गतस्वतन्त्रसत्तानिषेधोऽप्यविरुद्धः "यदासीत्तदधीनमासीदि"तिश्रुतेः तथाच चेतनानां स्वगतधर्माणां च तदात्मकत्वाद्यविशेषेण तदपृथक्सिद्धत्वात् ऐतदात्म्यमिदं सर्वमित्यग्रिमवाक्यात् "वासुदेवात्मकान्याहु"रितिस्मृतेश्च स एव स्वतन्त्रसत्ताश्रयः सत्पदार्थ आत्मा यस्य स तदात्मा तस्य भावस्तत्त्वमितिश्रुत्यर्थः सदात्मकमितियावत् नन्वस्य वाक्यस्य सजातीयादिभेदशून्यपरत्वमेव तत्र चेतनवृत्तिभेदः सजातीयभेदः जड़भेदो विजातीयभेदः धर्मभेदः स्वगतभेदस्तथाच त्रिविधभेदस्य श्रुत्यैव निषेधेन तद्विषयस्य कथं पारमार्थिकत्वमितिचेन्न स्वप्राङ्गणे ऽश्वधावनमात्रत्वात् तथाहि अद्वितीयपदेनैव द्वितीयपदार्थमात्रस्य निषेधसिद्धौ पदान्तरवैयर्थ्यात् ब्रह्मेतरस्य त्रैकालिकनिषेधप्रतियोगित्वं वदन्तो ऽत्र प्रष्टव्याः श्रुत्याऽभिहितद्वितीयमात्राभावः कालत्रये ऽस्ति न वा नाद्यः सोक्तव्याघातात् अन्त्ये द्वितीयस्य सत्त्वापत्तेः नच नाभावो द्वितीयो ऽद्वैतविरोधीति वाच्यं अभावत्वाधेयत्वाधारत्वादिभावैरविनाभूतेनातिशयतोऽप्यद्वैतभङ्गात्

अभावत्वरूपप्रवृत्तिनिमित्तसम्भवेन वेदान्तानां सखण्डार्थत्वापत्तेश्च किञ्च को वा सत्पदार्थः शुद्धो वोपहितो वा ऽव्याकृतो वा नाद्यः "तदैक्षत बहु स्या"मितिश्रुत्येक्षणाबहुभवनसङ्कल्पयोगश्रवणादन्यथा शुद्धत्वभङ्गात् त्वया शुद्धस्य पदार्थत्वानङ्गीकाराच्च अन्यथा मिथ्यात्वप्रसङ्गात् शुद्धं ब्रह्म मिथ्यापदार्थत्वात्तवमते घटादिवदित्यनुमानात् द्वितीये ततो मायाभूतोपाधिर्भिन्नो ऽभिन्नो वा नाद्यः द्वैतापत्तेः नान्त्यः उपाधिब्रह्मेति सिद्धान्तापत्तेः उपहितस्य पारमार्थिकसत्तासम्भवाच्च अन्यथा तस्यैव मुक्तगम्यत्वेन शुद्धस्याप्रयोजकत्वापत्तेश्च नाप्यव्याकृतः सिद्धान्तभङ्गादस्मदिष्टत्वाच्च अव्याकृतस्य जीवादिभेदेऽपि नास्माकं हानिः जीवादीनां तादात्म्यसम्बन्धाभ्युपगमात् ब्रह्मणः सविशेषत्वाङ्गीकाराच्च अव्याकृतत्वं नाम भूतसूक्ष्माणि कर्मसंस्कारसहिताश्च जीवास्तदन्तर्यामी परमेश्वरश्चाधिष्ठाता एतेषां समुदायः तस्य चानेकविशेषवत्त्वात् सुतरां तव सिद्धान्तभङ्गः उक्तव्याख्याविरोधश्च अन्यथा भूतसूक्ष्माभावे ऽसत्कार्यवादापत्तेः जीवानङ्गीकारे कृतनाशादिप्रसङ्गात् सृष्टिवैचित्र्यहेतुभूतकर्माभावे

सृष्ट्यभावप्रसङ्गात् तस्याः साम्यप्रसङ्गाच्च अन्यथा ब्रह्मणि वैषम्यनैर्घृण्यप्रसक्तेश्च परमेश्वरानङ्गीकारे स्रष्टृभावेन सृष्ट्यसम्भवात् अन्यथा वाह्यपक्षाङ्गीकारप्रसङ्गाच्च द्वितीयमात्रनिषेधे श्रुतावग्रपदस्य वैयर्थ्यात् किञ्च को वा द्वितीयपदार्थः न द्वितीयो ऽद्वितीय इतिचेत् नञर्थस्तावत् षड्विधः "तत्साद्दश्यमभावश्च तदन्यत्वं तदल्पता अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिता" इतिवचनात् तत्र न तावत् साद्दश्यं द्वितीयसद्दशमिति पदार्थापत्तेः निर्विशेषे साद्दश्यधर्मासम्भवाच्च नाप्यभावः "असदेव स भवति असद्ब्रह्मेति वेद चेदि"तिनिन्दाश्रवणात् पूर्वोक्तदोषयोगाच्च नापि तदन्यत्वं द्वैतापत्तिप्रसङ्गात् नापि तदल्पता ईषद्द्वितीयइतिपदार्थस्स्यात् नाप्यप्राशस्त्यम् अप्रशस्तद्वितीयइत्यर्थः स्यात् नापि विरोधो ऽनङ्गीकारात् किञ्चाद्वितीयपदस्य द्वितीयाभावमात्रसङ्कोचे सकलकल्पनाविरोधाय स्वतन्त्रसत्तावच्छिन्नद्वितीयनिषेधपरत्वस्यैवौचित्यात् नचावान्तरतात्पर्येण द्वितीयाभावसिद्धिर्महातात्पर्येण चाखराडार्थसिद्धिरितिवाच्यम् द्वितीयाभावस्य सत्वे ऽद्वैतहानिः मृषात्वे द्वैतस्य सत्यत्वापत्तेः

द्वितीयाभावविशिष्टतया ज्ञाते ब्रह्मणि विशेष्य-मात्रे सन्देहाद्यभावेन तत्र तात्पर्यान्तरकल्पनस्या-प्रामाणिकत्वात् अन्यथा शब्दमात्रस्य तात्पर्यद्वयं-स्वीकृत्याखण्डार्थकत्वापत्तेरिति सङ्क्षेपः तस्मा-दुक्तार्थस्यैव वरीयस्त्वाद्धयेयत्वं श्रेयोऽर्थिभिः एतेन "आत्मा वा इदमग्र आसीन्नान्यत्किञ्चन मिषत् एको ह वै नारायण आसी"दित्यादिश्रुतयो ऽपि व्याख्याताः तुल्यार्थत्वात् "अथ नेह नानेति" इह जगत्कारणे ब्रह्मणि नानात्वं नास्ति तस्य सर्वास्वपि उपनिषत्स्वेकत्वावधारणात् कारणनाना-त्वदर्शनस्य फलमाह "मृत्योः स मृत्युमाप्नोती"ति-नित्यसंसारी भवति परमेश्वरे नानात्वदर्शित्वात् इव शब्दोऽल्पार्थः "इवोपमायामल्पे चे"तिकोशात् सच कैमुत्यन्यायपरः कारणे ब्रह्मणि यद्यल्प-नानात्वदर्शनस्यापीदृक्फलं किं पुनर्बहुत्वेनेत्यर्थः एतेन "द्वितीयाद्वैभयं भवती"त्यपिश्रुतिर्व्याख्याता तुल्यार्थत्वात् ननु कारणे ब्रह्मणि भेदाप्रसक्तिर-प्रसक्तस्य निषेधायोगादिति चेन्न जगत्कारणेऽने-कत्वप्राप्तेः शास्त्रसिद्धत्वात् "जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः जीवे प्रलयमृच्छन्ति न

जीवात् कारणं पर"मिति "ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता ॥ न सन्न-चासच्छिव एव केवलः ॥ स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये"इत्यादिश्रुतिभिः कारण-नानात्वस्य सुप्रसक्तत्वात् इहेतिविशेषणान्नानात्व-मात्रनिषेधसम्भवः निषेधतदाधारब्रह्मणोर्निषेध-निषेध्ययोर्नानात्वतदभावयोश्च भेदावश्यकत्वादिति सङ्क्षेपः अथवा नानाशब्दोऽत्र विनाऽर्थकः "विनञ्भ्यां नानाञौ न सहे"तिसूत्रे महाभाष्य-कारैर्नानाविनाशब्दयोरेकार्थत्वोक्तेः तथा चैवं योजना इह जगति नाना स्वोपादानं परमेश्वरं विना किञ्चनापि वस्तुजातं नास्ति सर्वकार्यत्वा-वच्छिन्नस्य स्वोपादानाविनाभूतत्वात् "यच्चापि सर्व-भूतानां वीजं तदहमर्जुन ॥ न तदस्ति विना यत् स्यान्मयाभूतं चराचर"मिति श्रीमुखोक्तेः अन्यत् स्पष्टं "सर्वं तं परादाद्य आत्मनोऽन्यत् सर्वं वेदे"ति श्रुत्यन्तराच्च एतेनैव "नानाविष्णुंमोक्षदो नान्यदेव" इत्यपिश्रुतिर्व्याख्याता विष्णुं विना अन्यदेवो ब्रह्मा-दिर्मोक्षदो नास्तीत्यर्थः "बन्धको भवपाशेन भव-पाशाच्च मोचकः कैवल्यदः परम्ब्रह्म विष्णुरेव

न संशय" इतिस्मृतेः "संसारबन्धस्थितिमोक्षहेतु" रितिश्रुत्यन्तराच्चेति अथ "यत्र त्वस्ये"ति यत्र यस्यां ध्रुवास्मृत्याख्यावस्थायाम् अस्य विदुषः सर्वं कर्त्तृकरणकर्मादिकारकजातम् आत्मैवाभूदितिआत्मशब्दो ऽत्र विश्वात्मभूतपरब्रह्मवाचकः ब्रह्मात्मकत्वेन तदपृथक्सिद्धत्वात्तत्ताविधानमविरुद्धं ब्रह्मैव ब्रह्मापृथक्सिद्धमेवाभूत् तर्हि केन स्वतन्त्रसत्तावच्छिन्नकरणेन कं वा स्वतन्त्रत्वेन पृथक्वस्तुजातं कर्मकारकरूपं को वा स्वतन्त्रभूतो-द्रष्टा कर्त्तृकारकरूपः पश्येदिति योजनासर्वकारक-जातस्य तत्प्रयोज्यतया केषुचिदपि कर्त्रादिषु स्वातन्त्र्याभावेन "स्वतन्त्रः कर्त्ते"तिसूत्रोक्तकर्त्रादि-कारकलक्षणासमन्वयेन तत्ताभावात् तदात्मक-तत्प्रयोज्यतदाधेयतद्व्याप्यत्वादिभिः तत्तत्कारकैः तत्तत्कर्मकारयिता श्रीपुरुषोत्तम एव "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्नि-नीषते सकारयेत्पुण्यमथापि पाप"मित्यादिश्रुतेः तस्मात्तदात्मकेन करणेन तदात्मकं वस्तुजातं तदात्मको द्रष्टेत्यर्थः "ऐतदात्म्यमिदं सर्व"मिति-श्रुतेरितिसङ्क्षेपार्थः नन्वेवं चेतनवर्गे हिताकर-

णादिदोषप्रसक्तिस्तस्य ब्रह्मेतरस्य चेतनस्य तत्त्वम-सीति ब्रह्मत्वोपदेशादिति अत्राह भगवान् सूत्रकारः "अधिकं तु भेदनिर्देशा"दिति तु शब्दः पक्षव्या-वृत्त्यर्थः यत्सार्वज्ञ्याद्यनन्ताचिन्त्यासङ्ख्येयकल्याण-धर्माश्रयभूतं जगदभिन्ननिमित्तोपादानकारणं तत्-तस्माच्छारीरादधिकं उत्कृष्टं तदत्यन्तविलक्षणं परं ब्रह्मेति नोक्तदोषावकाशः कुतः भेदनिर्देशात् "आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्या-सितव्य,, इति कर्त्तृकर्मादिभेदस्य "ब्रह्मविदाप्नोति पर"मिति प्राप्तृप्राप्तव्यभेदस्य "य आत्मानमन्तरो यमयती"तिनियन्तृनियम्यभेदस्य च निर्देशात् अयम्भावः यदि चेतनस्य शारीरस्य जगत्कारणत्वं सूत्रकृताऽभिप्रेतं स्यात्तर्हि तस्य सार्वज्ञ्यादिसर्व-शक्तियोगेन हिताकरणादिदोषप्रसक्तिः स्यान्नतु तदस्ति प्रत्युत तदत्यन्तविलक्षणस्य सर्वज्ञानशक्ति-बलैश्वर्यादिकल्याणधर्मार्णवस्य परब्रह्मणः समस्त-दोषगन्धाघ्रातमाहात्म्यस्य श्रीपुरुषोत्तमस्य स्व-तन्त्रसत्ताश्रयस्य कारणत्वनिर्देशान्नोक्तदोषयोगः एतेन पूर्वनिर्णीतो भेदाभेदलक्षणसिद्धान्तो ऽपि सूत्रकृता प्रसङ्गात्स्मारितः तादात्म्यादभेदोक्ते

ब्रह्मणः स्वरूपेण भेदनिर्देशात् तथाच परतन्त्र-सत्तावच्छिन्नस्वरूपेण भिन्नत्वेऽपि तदात्मकत्वादिना तदपृथक्सिद्धिनाभिन्नत्वमितिभावः अलं प्रासङ्गिकेन तस्मात्कार्यं सदैव कारणात्मकत्वेन तदपृथक्सिद्धं चेति सिद्धम् इत्यसत्कार्यवादानिर्वचनीय-कार्य्यवादगिरिनिपातः ॥ ३ ॥

अथ परमाणुकारणवादं निराकरोति तथा-चायं तेषां सिद्धान्तः पार्थिवाप्यतैजसवायवीय-भेदात् चतुर्विधाः परमाणवस्ते च नित्याः प्रलये ऽवतिष्ठन्ते सर्वत्र त्रिभ्यस्त्रिभ्यः समवाय्य-समवायिनिमित्ताख्येभ्यः कार्यनिष्पत्तिः यथा घटरूपकार्योत्पत्तौ तन्तवः समवायिकारणं तेषा-मितरेतरसंयोगोऽसमवायिहेतुः तुरीवेमकुविन्दा-दिनिमित्तकारणं तत्रेश्वरेच्छावशेनाद्यं कर्म वायवी येषु परमाणुषूत्पद्यते ततस्संयोगस्तेन द्वाभ्यां पर-माणुभ्यां द्व्यणुकमुत्पद्यते एवं त्र्यणुकादिक्रमेण महान्वायुरुत्पद्य दोधूयमानस्तिष्ठति तथैव क्रमेण तैजसपरमाणुभ्यो महानग्निरुत्पन्नो जाज्वल्यमान-स्तथा चाप्येभ्यः परमाणुभ्यो महाञ्जलनिधिरुत्पन्नः पोप्लूयमान एवं पार्थिवपरमाणुभ्यः पृथिव्युत्पन्ना

निश्चला च तिष्ठतीति किञ्चायुतसिद्धानामाधारा-
धेयभूतानामिह प्रत्ययहेतुः समवायः यथेह तन्तुषु
पटः गवि गोत्वं पटे शुक्लादिरूपमितिकार्यकारण-
योःसामान्यविशेषयोर्गुणगुणिनोश्च सम्बन्धः सम-
वाय एव सचैको नित्यः सर्वगतो व्योमवदिष्यते
ऽयुतसिद्धानां तु संयोगः सम्बन्धः अथापृथक्-
सिद्धयोरज्जुघटयोरिति अत्राह "उभयथाऽपि न
कर्मातस्तदभाव" इति आद्यकर्मोत्पत्तिरनुपपन्ना-
प्रलये यत्नाभिघातादीनां कर्महेतूनामभावात् नचा-
त्रादृष्टस्य हेतुत्वं कल्प्यते इतिवाच्यम् विकल्पा-
सहत्वात् तथाहि परमाणुगतमाद्यं कर्म स्वगतादृष्ट-
प्रयुक्तम् आत्मादृष्टप्रयुक्तं वा नाद्यः अदृष्टस्यात्मा
साधारणविशेषधर्मस्य परमाणुवृत्तित्वासम्भवात्
अनभ्युपगमाच्च अभ्युपगमेच सदोत्पादकत्वप्रस-
ङ्गात् अपसिद्धान्तापत्तेश्च न द्वितीयः तस्यात्मग-
तत्वेऽपि तदात्मनां चैतन्याभावेन कार्योत्पादन
योग्यतासम्भवात् अन्यथा प्रलयाभावप्रसङ्गो दुर्वारः
अतो न कर्मोत्पत्तिरितिसिद्धम् अथ समवाय-
सम्बन्धं निराकरोति समवायाभ्युपगमाच्च साम्या-
दनवस्थितेः नह्यपि समवायाभ्युपगमः प्रामाणिकः

असम्भवात् तथाहि यथा द्व्यणुकं समवायसम्ब-
न्धेन स्वकारणे समवेतं अत्यन्तभिन्नत्वात् तथा
समवायो ऽपि समवायिभ्यां समवायसम्बन्धान्त-
रेण समवेतव्यः सोऽपि सम्बन्धान्तरेणेत्यनवस्था-
नात् नच समवायस्य स्वयं सम्बन्धरूपत्वात् न
सम्बन्धान्तरापेक्षेति वाच्यं संयोगस्याऽपि सम्बन्ध-
रूपत्वसाम्येन समवायानपेक्षत्वापत्तेः तथात्वेच
संयोगस्य संयोगिभ्यां सम्बन्धः समवायपूर्वक इति
प्रतिज्ञाभङ्गात् नच संयोगी गुणत्वात् समवायमपे-
क्षते इतिवाच्यं पारिभाषिकमात्रत्वात् समवायस्या-
ऽपि गुणत्वं वक्तुं शक्यत्वात् नच कार्यकारणयोर-
युतसिद्धत्वं कारणस्य पूर्वसिद्धत्वात् कार्यस्योत्तर-
कालीनत्वात्तथात्वेऽपृथक्सिद्धत्वासम्भवात् नचान्य-
तरापक्षत्वमयुतसिद्धत्वमितिवाच्यं तथाऽपि द्वयोः
सतोः सम्बन्ध इति कृत्वोत्पन्नं कार्यं क्षणमात्रं
पृथगवस्थाय समवायेन सम्बध्यत इति दूषणस्य
तादवस्थ्यात् अथोत्पत्तिरेव समवाय इत्यप्ययुक्तं
तथात्वे समवायस्य नित्यत्वासम्भवात् उत्पत्ति-
नित्यत्वयोरत्यन्तविरोधात् उत्पत्तेर्नित्यत्वाङ्गीकारे
कार्यत्वावच्छिन्नस्य नित्यत्वापत्तेः कारकव्यापारा-

नर्थक्याच्च कार्यकारणयोः समवायाभ्युपगमाच्च तदभाव इत्यनुवर्त्तते प्रकृतकणभुकूप्रक्रियाऽसम्भव इति यावत् किञ्च समवायस्य समवायिभ्यां सम्बन्धान्तरेण समवेतत्वं तस्याऽपि सम्बन्धान्तरेणेत्यनवस्थापत्तेरिति सूत्राक्षरार्थः किञ्च नित्यमेव च भावात् परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेर्भावान्नित्यसृष्टिप्रसङ्ग इत्यक्षरार्थः अयमभिप्रायः परमाणवः प्रवृत्तिस्वभावा उभयशीला अनुभयशीला वा आद्ये सृष्टेर्नित्यत्वं प्रलयाभावश्च द्वितीये सर्गाभावो नित्यप्रलयप्रसक्तिश्च न तृतीयचतुर्थौ उभयस्वभावत्वस्येतरेतरविरोधात् सर्वथाऽनुपपत्तेरिति किञ्च "रूपादिमत्त्वाच्च विपर्ययो दर्शनात्" परमाणवः रूपादिगुणवन्तो न वा नाद्यः अनित्यत्व प्रसङ्गात् परमाणवोऽनित्याः रूपादिमद्द्रव्यत्वात् घटादिवदिति प्रयोगात् नद्वितीयः सिद्धान्तभङ्गात् कार्यस्याऽपि रूपादिशून्यत्वापत्तेश्च अथ रूपादि नेष्यात् कार्यं रूपादिमन्न स्यात् रूपादिमन्तो नित्याश्चेति तव वचनात् रूपादिमत्त्वाच्च परमाणूनां विपर्ययः अनित्यत्वं स्यात् तव मते तेषां रूपादिमत्त्वनित्यत्वयोर्दर्शनादिति सूत्राक्षरार्थः किञ्च उभ-

यथा च दोषात् परमाणूनामुपचितगुणवत्त्वाङ्गीकारे सर्वेषां तुल्यत्वापत्तेः अप्सु गन्ध उपलभ्येत गन्धरसौ तेजसि रूपरसगन्धाश्च वायौ तेषां स्थौल्यहेतुत्वात्परमाणूनामपि स्थूलत्वापत्त्या ऽपरमाणुत्वप्रसङ्गात् अपचितगुणवत्त्वे च सर्वेषामेकैको गुणः स्यात् तथात्वे च तेजसि स्पर्शो ऽप्सु रूपस्पर्शौ पृथिव्यां रूपस्पर्शरसाश्च न स्युरित्युभयथा ऽपि दोषादिति सूत्रार्थः ननु केचिदुपचितगुणाः केचिदपचितगुणा इति विचित्रत्वाङ्गीकार इति चेन्न तथाप्युपचितगुणानां परमाणुत्वहानिप्रसङ्गात् दृश्यादृश्यादिमूर्त्तामूर्त्ताद्यवान्तरविचित्रताया गुणोपचयनिबन्धनत्वात् चतुर्विधानां परमाणूनां स्वतो भेदात् सिद्धान्ते तु महाभूतवृत्तिगुणानां नियमश्रुतिसिद्धत्वेन दोषाभावादितिभावः "शब्दस्पर्शरूपरसगन्धाः पृथिव्या गुणास्तेषु गन्धहीनाश्चत्वारोऽपां गुणास्तेषु रसहीनास्त्रयो गुणा अग्नेः शब्दस्पर्शाविति वायोः शब्द एक आकाशस्ये"ति लौकिकोपनिषच्छ्रुतेः "आकाशवायुतेजांसि सलिलं पृथिवी तथा शब्दादिभिर्गुणैर्ब्रह्मन् संयुक्तान्युत्तरोत्तरै"-रितिविष्णुपुराणोक्तेश्च सर्वज्ञसर्वशक्तिब्रह्माधिष्ठित

त्वाच्च महाभूतादिप्रपञ्चस्येत्यलं प्रासङ्गिकेन किञ्च अपरिग्रहाच्चात्यन्तानपेक्षा असत्कार्यवादस्य वैशेषिकादिपरिकल्पितपरमाणुकारणवादस्य च मन्वादिभिरौपनिषदैः केनाप्यंशेनापरिग्रहादत्यन्तानपेक्षा ऽतो ऽतिशयेनानादरणीयो ऽयं पक्षो निःश्रेयोऽर्थिभिरिति सूत्रकृतो ऽभिप्रायः ।

इति परमाणुवादगिरिनिपातः ॥ ४ ॥

अथ पशुपतिपक्षनिरास उपक्रम्यते श्रीसूत्रकारेण "पत्युरसामञ्जस्यात्" इयं तावत्पाशुपत्यानां प्रक्रिया पशुपतिनेश्वरेण प्रणीतं पञ्चाध्यायिशास्त्रं पञ्च तत्र पदार्था निर्णीयन्ते कारणं कार्यं योगो विधिर्दुःखान्त इति कारणमीश्वरः प्रधानं च महदादि च कार्यं योगो "ऽप्योङ्कारमभिध्यायात् सकृदि"तिकुर्यात् धारणामित्येवमुक्तो विधिपदार्थः विधिस्त्रिषवणस्नानादिगूढचर्यावसानो दुःखान्तो मोक्षः सच तार्किकादिवत्पाषाणकल्पावस्थितिपाशुपतकापालिकयोः शैवानां तु साङ्ख्यवच्चैतन्या आत्मानस्तिष्ठन्तीति विशेषः तन्मतानुगामिनश्चतुर्विधाः कापालाः कालामुखाः पाशुपताः शैवाश्चेति सर्वे ऽपि वेदविरुद्धाचारान् निःश्रेयः

साधनतया मन्यन्ते निमित्तोपादानयोर्भेदं निमित्त-कारणं पशुपतिं मन्यन्ते तथैव साधनमपि मुद्रि-काषट्कधारणादि तथाचाहुः कापालाः "मुद्रिका-षट्कतत्त्वज्ञः परमुद्राविशारदः भगासनस्थमा-त्मानं ध्यात्वा निर्वाणमृच्छति कणिठका रुचकं चैव कुण्डलं च शिखामणिः भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते आभिर्मुद्रितदेहस्तु न भूय इह जायते" इत्यादि तथा कालामुखा अपि कपालमात्रभोजनशवभस्मस्नानतत्प्राशनलगुडधा-रणसुराकुम्भस्थापनतदाधारदेवतापूजादिकमैहि-कामुष्मिकसकलसाधनमिति मन्यन्ते "रुद्राक्षं कङ्कणं हस्ते जटा चैका च मस्तके कपालं भस्मना स्नानम्" इत्यादिकं शैवागमे प्रसिद्धं तथाच केन-चित् क्रियाविशेषेणेतरजातीयानामपि ब्राह्मणत्व-प्राप्तिमुत्तमाश्रमप्राप्तिं च विदधति "दीक्षाप्रवेश-मात्रेण ब्राह्मणो भवति क्षणात् कापालं व्रतमास्थाय यतिर्भवति मानव" इति ॥ निराकरोति "पत्युर-सामञ्जस्यात्" पशुपतेःपक्षःश्रेयोऽर्थिभिर्नादरणीयः कुतः असामञ्जस्यात् वेदबाह्यत्वात् मुद्राषट्क-धारणभगासनस्थात्मध्यानसुराकुम्भस्थापनतत्स्थ-

देवतार्चनगूढाचारश्मसानभस्मस्नानप्रणवपूर्वाभि-
ध्यानादेरन्योऽन्यविरुद्धत्वात् वेदवाह्यधर्मत्वाच्च तदु-
क्तसाधनानां वेदोक्तवेदान्तश्रवणादिभगवदुपासना-
दीनां च परस्परात्यन्तविरोधाच्च पाषाणकल्पाव-
स्थितिरूपमोक्षस्याप्यवैदिकत्वात् तथा पशुपतेरपि
जन्यत्वेन जगत्कारणत्वासम्भवाच्च "एको ह वै
नारायण आसीन्न ब्रह्मा नेशानः तस्य ध्यानान्तः
स्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषो ऽजायते"
त्यन्वयव्यतिरेकश्रुतेस्तस्य जन्यत्वावगमात् "तदै-
क्षत वहु स्यां प्रजायेय नाराणात्प्राणो जायते मनः
सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथवी विश्वस्य
धारिणी नारायणाद्ब्रह्मा जायते नारायणाद्रुद्र"
इत्यादिश्रुतयः परब्रह्मश्रीपुरुषोत्तमं जगदभिन्न-
निमित्तोपादानं वदन्त्योऽन्यस्य वस्तुजातस्य तदु-
पादेयत्वं निश्चिन्वन्ति क्वचिच्छ्रूयमाणाः शिवा-
दिशब्दा अपि आकाशशब्दवद्ब्रह्मपरा एव तच्च
सिद्धान्तज्ञाह्नव्यां श्रीदेवाचार्यपादैर्विशदं निर्णीतम्
किञ्च अधिष्ठानानुपपत्तेश्च पशुपतेः कुलालादिवत्-
प्रधानाधिष्ठातृत्वन्नोपपद्यते ऽशरीरत्वात् सशरीर-
स्यैव कुलालादेर्मृदाद्यधिष्ठातृत्वदर्शनाच्च किञ्च

"करणवच्चेन्न भोगादिभ्यः" यथा ऽशरीरस्यैव जीवस्यकरणकलेवराद्यधिष्ठातृत्वं तथा पशुपतेरपि प्रधानाद्यधिष्ठातृत्वं सम्भवतीति चेन्न कुतः भोगादिभ्यः पुण्यादिफलभोगादिनिमित्तं पुण्याद्यदृष्टकारितं च जीवस्याधिष्ठातृत्वं तथा पशुपतेरपि पुण्यादियोगादीश्वरत्वसम्भवस्तस्मान्नाधिष्ठानत्वसम्भवः किञ्च अन्तवत्त्वसर्वज्ञता वा पशुपतेः पुण्यपापादृष्टादियोगे जीववदन्तवत्त्वं सृष्ट्याद्यन्तःपातित्वं असर्वज्ञताच स्यादिति सङ्क्षेपः ।

इति पशुपतिपक्षगिरिनिपातः ॥ ५ ॥

उत्पत्त्यसम्भवात् श्रीभगवत्प्रणीतपरश्रेयोवोधकस्यापि पञ्चरात्रस्य भगवच्छास्त्रस्य कपिलादिशास्त्रवदप्रामाण्यमाशङ्क्य परिहरति ततः शङ्क्यते परमात्मनः परब्रह्मणो जगदभिन्ननिमित्तोपादानकारणाद्वासुदेवात् सङ्कर्षणो जीवो जायते सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते ततो ऽनिरुद्धाख्यो ऽहङ्कार इतिपाञ्चरात्राणां प्रक्रिया तत्र जीवस्योत्पत्त्यसम्भवात् श्रुतिविरुद्धत्वात् "अजो ह्येको जुषमाणः ॥ न जायते म्रियते वा विपश्चि"दित्यादिश्रुतेः किञ्च न कर्तुः करणं कर्तुः सङ्कर्षणा-

ख्याज्जीवात् सकाशात्प्रद्युम्नाख्यस्य मनसः करणस्योत्पत्तिरनुपपन्ना विरुद्धत्वात् नहि कुलालादेर्दण्डादीनामुत्पत्तिः कस्यचिद्दृष्टचरा उपपन्ना वेति भावः एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च"त्यादिश्रुतिविरोधाच्चाप्रमाणमिदं शास्त्रमिति-प्राप्ते राद्धान्तः "विज्ञानादिभावे वा तदप्रतिषेधः"-वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः सङ्कर्षणादीनां विज्ञानादिभावे "विज्ञानमानन्दं ब्रह्मे"ति श्रुत्युक्तब्रह्मभावे सति तत्प्रतिपादनपरस्यास्य शास्त्रस्य प्रमाणत्वाप्रतिषेधः तत्प्रामाण्यं न प्रतिषिध्यते इत्यर्थः अत्रायमभिप्रायः भगवच्छास्त्रविचारशून्यानां प्रामादिकैवेयं शङ्का यज्जीवोत्पत्तिर्विरुद्धेति श्रीवासुदेवाख्यं परं ब्रह्मैव वात्सल्यकारुण्यक्षमादिगुणगणवशीभूतः सौकर्येण स्वाश्रितजनसमाश्रयणीयत्वाय स्वेच्छया चतुर्व्यूहमूर्त्याऽवस्थित इति तस्य शास्त्रस्य प्रक्रिया "कर्त्तव्यत्वेन वै यत्र चातुरात्म्यमुपासते क्रमागतैः स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तदि"तिपौष्करसंहितावचनात् तच्चचातुरात्म्योपासनं ब्रह्मोपासनमेव "ब्राह्मणानां हि सद्ब्रह्म वासुदेवाख्ययाजिनां विवेकदं परं शास्त्रं ब्रह्मोपनिषदं

महदि"तिसात्वतसंहितोक्तेः तदेव वासुदेवाख्यपरं ब्रह्म पूर्णषाड्गुण्यविग्रहं व्यूहादिरूपेण यथाधिकारं भक्तैः समाराधितं सत्समवाप्यते तदुक्तं पौष्करे "यस्मात् सम्यक् परं ब्रह्म वासुदेवाख्यमव्ययम् अस्मादवाप्यते शास्त्रज्ञानपूर्वेण कर्मणे"ति तस्मात् सङ्कर्षणादीनामपि परस्यैव ब्रह्मणः स्वेच्छाव्यूहरूपत्वात् तत्तद्रूपेण तदाविर्भावो विरुद्धः "अजायमानो बहुधा विजायत" इतिश्रुतेः "परित्राणाय साधूनां विनाशाय च दुष्कृतां धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" इतिस्मृतेश्च जीवमनोऽहङ्कारतत्त्वानामधिष्ठातृत्वात्तेषां तथात्वोपदेशोऽप्यविरुद्धः किञ्च विप्रतिषेधाच्च तस्मिन्नेव शास्त्रे जीवोत्पत्तेर्विप्रतिषेधाच्चापि नोक्तदोषावकाशः "अचेतना परार्था च नित्या सततविक्रिया त्रिगुणं कर्मणां क्षेत्रं प्रकृतेरूपमुच्यते व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च सह्यनादिरनन्तश्च परमार्थेन निश्चित" इतिपरमसंहितोक्तेः किञ्च सर्वास्वपि संहितासु जीवस्य नित्यत्वनिर्णयाज्जीवस्वरूपोत्पत्तिः पञ्चरात्रशास्त्रनिषिद्धैव नापि सङ्कर्षणाख्यजीवात्प्रद्युम्नाख्यस्य मनसः करणस्योत्पत्तिर्विरुद्धेति

पूर्वोक्तदोषावकाशः शङ्कनीयः सङ्कर्षणादीनां ब्रह्मत्वे सिद्धे ततो मनआदीनामुत्पत्तेः सूपपन्नत्वात् "एतस्माज्जायते प्राणः" इतिश्रुतिरपि स्वार्थपरत्वेन सूपपन्ना चेति एतेन यदुच्यते कैश्चित् प्राप्नोत्येवा यमुत्पत्त्यसम्भवो दोषः प्रकारान्तरेणेत्यभिप्रायः कथं यदि तावदयमभिप्रायः परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मत्वमस्तीति ततो ऽनेकेश्वरकल्पना ऽनर्थक्यमेकेनेश्वरेणेश्वरकार्यसिद्धे सिद्धान्तहानिश्च भगवानेको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् अथायमभिप्रायः एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति तथापि तदवस्थ एवोत्पत्त्यसम्भवो दोषः नहि वासुदेवात् सङ्कर्षणोत्पत्तिः सम्भवति सङ्कर्षणाच्च प्रद्युम्नस्य प्रद्युम्नाच्चानिरुद्धस्याप्यतिशयाभावात् भवितव्यं च कार्यकारणयोरतिशयेन यथा मृद्घटयोर्न ह्यसत्यतिशये कार्यं कारणमित्यवकल्पते नच पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिषु एकैकस्मिन् सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदो ऽभ्युपगम्यते वासुदेव एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते नचैते भगवद्-

व्यूहाश्चतुःसङ्ख्यायामेवावतिष्ठेरन् ब्रह्मादेस्तम्बपर्य्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमादिति तन्निरस्तम् वासुदेवस्यैकत्वे ऽपि व्यूहावतारादिना ऽवस्थाने तत्तद्रूपेण प्रादुर्भावे च विरोधाभावात् स्वरूपेणैकत्वं मूर्त्यात्मना ऽनेकत्वं च शास्त्रसङ्गतमेव "अजायमानो बहुधा विजायते" इतिश्रुतेः नापि सङ्कर्षणाद्युत्पत्तिप्रकारो विरुद्धः अधिष्ठेयानामधिष्ठातृरूपकथनस्य सूपपन्नत्वात् "तेज ऐक्षत ताआपरोक्षन्त" त्यत्रेक्षणस्य तेजः प्रभृतिजडवर्गेऽनुपपन्नतया तेजआदीनां शब्दानां तदधिष्ठातृपरत्वं व्याख्यातं सर्वैरपि तद्वत्प्रकृते ऽपि सङ्कर्षणादिशब्दानां तदधिष्ठेयपरत्वव्याख्याने विरोधाभावात् तथा चैवमभिप्रायः श्रीवासुदेवात्सङ्कर्षणाधिष्ठेयसमष्टिजीवस्थूलदेहादियोगरूपोत्पत्तिः "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा" इत्यादिश्रुतेः ननु स्वरूपेणैव जन्म अनित्यत्वापत्तेः कृतनाशाकृताभ्यागमप्रसङ्गात् अजत्वबोधकश्रुतिविरोधाच्च तथैव सङ्कर्षणाख्याच्च ब्रह्मण एव प्रद्युम्नाधिष्ठेयमनोवर्गोत्पत्तिः प्रद्युम्नाख्याच्च ब्रह्मण एवानिरुद्धाधिष्ठितसमष्ट्यहङ्कारस्येति सर्वसामञ्जस्यात् "नारायणा-

ज्जायते प्राणो मनः सर्वेन्द्रियाणि चे"तिश्रुतेः सङ्कर्षणादिरूपादपि नारायणात्तत्कार्योत्पत्तेः सम्भवात् नचैवं श्रुतत्यागाश्रुतकल्पनाप्रसङ्ग इतिशङ्कनीयं यथा "ऽग्नेः क्षुद्रा" इत्यादिश्रुतिव्याख्याने सर्वेषां तुल्यत्वेन तव मते ऽप्यविशेषात् तस्माच्छास्त्रवाक्यानामितरेतरविरोधे तद्व्यवस्थायामुक्तदोषस्यायोगात् नापि ब्रह्मादीनां व्यूहत्वोक्तिः सुवचा प्रमाणशून्यत्वात् ब्रह्मेशानादीनां तज्जन्यत्वतदुपदिष्टत्वतद्वत्तैश्वर्यादिभिर्जीवत्वाविशेषात् विशेषार्थश्च शास्त्रयोन्यधिकरणे पूर्वमेव विस्तृतः॥ यच्चोच्यते विप्रतिषेधश्चास्मिन् शास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणो ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणा आत्मानः एवैते भगवन्तो वासुदेवा इत्यादिदर्शनादिति तत्तुच्छं गुणादीनां श्रुतिसिद्धत्वेन स्वाभाविकत्वात् "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे"तिश्रुतेः यदप्युक्तं "चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवान् इत्यादिना वेदनिन्दादर्शनादप्रामाण्यमस्य शास्त्रस्येति तत्प्रामादिकं पूर्वमेव शास्त्रयोन्यधिकरणे ऽस्य शास्त्रस्योपक्रमादिषड्लिङ्गोपेत-

भारतवाक्यैः प्रामाण्यतमत्वनिर्णयविस्तरेण निर-
स्तत्वात् "इदं महोपनिषदं चतुर्वेदसमन्वितं"-
मित्यादिना ऽस्य श्रुतिवत्प्रामाण्यतमत्वमिति-
सिद्धम् ॥

इति पञ्चरात्रे परकल्पिताप्रामाण्य-
गिरिनिपातः ॥ ६ ॥

अथकिंप्रत्यगात्मस्वरूपमिति अत्राहुश्चार्वाकाः
देह एवात्मेति तन्न मृते शरीरे चैतन्यानुपलब्धेः देहो
नात्मा भौतिकत्वात् घटादिवदित्यनुमानात् देहा-
तिरिक्ततत्परिमाणक आत्मेति दिगम्बरास्तन्न अनि-
त्यत्वापत्तेः देहपरिमाणको नात्मा सावयवत्वात्
घटादिवत् भूतचतुष्टयसमुदाय आत्मेति लौका-
यतिकाः तन्नुच्छं सङ्घातत्वात् उक्तलक्षणो नात्मा
सङ्घातत्वात् व्रीह्यादिराशिवत् क्षणिकवाह्यार्थ
एवात्मेति वैभाषिकः तन्तुच्छं भौतिकत्वात् क्षणि-
कवाह्यार्थो नात्मा जडत्वात् घटादिवत् एतेन क्षणि-
कविज्ञानवादो ऽपि निरस्तः क्षणिकविज्ञानं नात्मा
क्षणिकत्वात् शब्दादिवत् शून्यमेवात्मतत्त्वमिति

माध्यमिकाः तत्तुच्छतरं शून्यं नात्मा जडत्वादा-
काशवत् इन्द्रियाण्येवात्मेत्येके तत्तुच्छं स्वापादौ
तल्लयात् इन्द्रियवर्गो नात्मा सर्वावस्थाऽननुगतत्वात्
देहवत्करणत्वात् वास्यादिवत् अत एव न मनो
बुद्धिश्च अन्तःकरणत्वात् वाह्यकरणवत प्राण
एवात्मेति चान्ये तत्तुच्छं जडत्वात् सुषुप्तौ चौरादि-
भिर्भूषणादौ मुषिते चैतन्याभावेनाननुभूयमान-
त्वात् प्राणो नात्मा वायुत्वात् व्यजनजन्यवायु-
वदित्यनुमानेभ्यः देहेन्द्रियादिभिन्नो ज्ञानेच्छादि-
प्रयत्नाद्याश्रयो विभुः प्रतिदेहं भिन्नो द्रव्यविशेष
आत्मेति तार्किकादय अभ्युपगच्छन्ति तन्न
असम्भवात् तथाहि चैत्रचरणप्रविष्टकण्टकादि-
जन्यदुःखानुभवकाले सर्वेषामप्यात्मनां तत्र
सत्त्वेन वेदनानुभवप्रसक्तेः तत्र निगमनाभावेना-
सम्भावितत्वावगमात् नच यस्य शरीरे कण्टक-
वेधादि तस्यैव वेदनानुभवो नान्येषामितिव्यवस्था-
ङ्गीकारान्नोक्तदोषप्रसङ्ग इतिवाच्यं सर्वेषां सान्निध्या-
विशेषे एकस्यैवानुभवो नान्येषामिति नियन्तुम-
शक्यत्वात् नच यदहष्टोत्पादितं शरीरं तत्तदीय-
मितिनियम इति वाच्यम् अदृष्टस्याप्युक्तन्यायेन

नियामकत्वासम्भवात् यदा हि तादृशादृष्टोत्पादनायैकेनात्मना संयुज्यते मनस्तथाऽन्यैरपि मनोयोगस्याविशेषात् कथमिव कारणसाधारणे क्वचिदेवादृष्टोत्पत्तिर्नान्यत्रेति ननु मनःसंयोगसाधारण्ये ऽपि अहमिदं फलं प्राप्तवानित्यभिसन्धिरदृष्टोत्पादककर्मानुकूलकृतिरित्येवमादिव्यवस्थानमिति तत एवादृष्टनियमो भविष्यतीति चेन्न अभिसन्ध्यादीनामपि साधारणमनःसंयोगनिष्पाद्यतया व्यवस्थित्यसिद्धेः ननु स्वकीयमनःसंयोगोऽभिसन्ध्यादिकारणमिति मनःसंयोग एवासाधारणो भविष्यतीति चेन्न नित्यं सर्वात्मसंयुक्तं मनः कस्यचिदेवेति नियन्तुमशक्यत्वात् नचादृष्टविशेषादात्मविशेषेण मनसः स्वस्वामिभावसिद्धिरिति वाच्यं तस्याप्यदृष्टस्य पूर्ववद्व्यवस्थित्यसिद्धेः नचात्मनां विभुत्वे ऽपि तेषां प्रदेशविशेषा एव बन्धभाज इत्यात्मान्तराणां चैत्रशरीरे तत्प्रदेशविशेषाभावात् सुखदुःखादिव्यवस्था भविष्यतीति वाच्यं यस्मिन् प्रदेशे चैत्रः सुखाद्यनुभूय तस्माद्देशादपक्रान्तस्तस्मिन्नेव मैत्रे समागते सति तस्याऽपि तत्र सुखादिदर्शनेन शरीरान्तरे आत्मान्तरप्रदेश-

विशेषस्याप्यन्तर्भावात् तस्माद्विभुवदात्मवादिनां तार्किकादीनां व्यवस्था सुदुर्घटेति सङ्क्षेपः ।

इतितार्किकाद्यभिमतजीवात्मनिर्णय गिरिनिपातः ॥ ७ ॥

एवं मीमांसकानामपि व्यवस्था दुर्घटेव इयांस्तु विशेषः तन्मते आत्मवन्मनसामपि विभुपरिमाणकत्वमिति तथाच तत्रापि सर्वैर्मनोभिः सर्वेषामपि जीवात्मनां संयोगादेः साम्यात् किञ्चात्मवत् सर्वैरपि चक्षुरादिभिरिन्द्रियैः साकं मनःसंयोगस्य साम्यात् श्रावणस्पार्शनादिज्ञानानां युगपदुत्पत्तिप्रसङ्गो दुर्वार इतिदोषविशेषश्चिन्तनीयः दुग्धादिभिर्द्रव्यैर्मनोयोगस्य युगपत्सद्भावात् नच श्रावणादिज्ञाने श्रवणादिभिरिन्द्रियैः शब्दादियोगस्यासाधारणहेतुत्वात् मनोभिर्विषयसन्निकर्षेऽपि ज्ञानानुत्पत्तिः सुशकेति वाच्यं मनसामिन्द्रियैर्नित्यसंयोगस्य सत्त्वेनेन्द्रियसंयुक्तमनसां विषयसन्निकर्षाविशेषात् किञ्च अस्तु वा कया चित्कूटकल्पनया सुषुप्त्यादौ बाह्यश्रवणादिज्ञानानुत्पत्तिः मनोविषयसंयोगस्य सत्त्वे ऽपि तत्रेन्द्रियसन्निकर्षाभावात् तथाऽपि जाग्रदादौ इन्द्रियसंयुक्तमनसां

नित्यसंयोगस्य दुर्वारत्वेन शब्दादित्वावच्छिन्न-
विषयज्ञानस्योत्पत्तेरवश्यम्भावात् मनस्त्वा-
वच्छिन्नमनइन्द्रियसंयोगाभावे ऽपि शब्दादित्वा-
वच्छिन्नविषयस्मरणस्य सदा सद्भावापत्तेश्चेत्य-
लम्विस्तरेण ॥

इति मीमांसकनिर्णीतात्मसिद्धान्त-
गिरिनिपातः ॥ ८ ॥

ननु स्यादेतत् मनसामात्मनां च विभुत्व-
बहुत्वयोगे उक्तदोषयोगो न त्वेकत्वविभुत्वयोगे
तथा चैक एव विभुरात्मा ऽनेकोपाधिभिरवच्छिन्नो
घटावच्छिन्नाकाशवत् भिन्नतया भाति स्वस्वोपाधि-
प्रयुक्ताश्च स्वीयदुःखानुभूतये उपाधीनामेवेतरे-
तरभिन्नानां भेदनियामकत्वेन सुखाद्यनुभवसा-
ङ्कर्याभावाद्व्यवस्थासामञ्जस्यं यद्वा विम्बस्थानीय-
मेकं ब्रह्म जलादिस्थानीये ऽन्तःकरणाद्युपाधौ
प्रतिविम्बितम् सज्जीवत्वमापद्यते उपाधेश्चाविद्य-
कत्वात्तत्प्रयुक्तं भेदोऽप्यविद्यकः यथा सूर्यस्य
जलपूरितघटेषु तत्र तत्र प्रतिविम्वविशेषो घटो-
पाधिकृतो भेदश्च तत्रैकस्मिंश्चाल्यमाने घटजले
तत्रतस्यैव प्रतिविम्बस्य कम्पादियोगो नान्येषां

एकस्मिंश्च घटनाशे तद्गतैकस्यैव प्रतिबिम्बस्य बिम्बभावापत्तिर्नान्येषां तथैकस्मिन्नेवान्तःकरणे सुखादिवृत्तिरूपपरिणामे सति तद्गतैकस्यैव चेतनप्रतिबिम्बस्य तत्तद्दुःखाद्यनुभवो नान्येषां तथा चैकस्मिन्नेवोपाधौ तत्त्वमस्यादिवाक्यश्रवणजन्यजीवब्रह्मैक्यज्ञानान्नष्टे सति तस्यैव ब्रह्मभावापत्तिर्नान्येषामिति सर्वस्या अपि सुखदुःखभोगसाङ्कर्याभावव्यवस्थाया बन्धमोक्षव्यवस्थायाश्च सुवचत्वमिति चेन्न उभयपक्षेऽपि बन्धमोक्षव्यवस्थाऽनुपपत्तेः सुखादिभोगसाङ्कर्यापत्तेश्च पूर्वमेव विस्तृतत्वात् प्रयोजननिराकरणप्रकरणे यस्य ब्रह्मभावापत्तिलक्षणो मोक्षः प्रयोजनत्वेनाभ्युपगम्यते इत्यारभ्य जीवब्रह्मैक्यं वक्तुमशक्यमित्यनेन ग्रन्थेन प्रथमाध्याये किञ्च सर्वगताद्वितीयात्मवादे उपाधेर्विभुत्वाङ्गीकारश्चेत् सर्वस्यापि चेतनस्यावृतत्वेन जगदान्ध्यप्रसङ्गः प्रकाशकाभावात् गत्याद्यनुपपत्तेः मुक्तोपसृप्यब्रह्मोच्छेदप्रसङ्गाच्च "ब्रह्मविदाप्नोति परं ॥ पूता मद्भावमागता" इत्यादिमोक्षशास्त्रबाधाच्च उपाधिपरिच्छिन्नानेकत्ववादे च पदे पदे बन्धमोक्षापत्त्यादिदोषाणां पूर्वमेव विस्तृतत्वात्

किञ्च मोक्षस्योक्तन्यायेनाकस्मात्पदे पदे सिद्धौ "तमेव विदित्वा ऽतिमृत्यमेति ॥ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः तदा देवमविज्ञाय दुःखस्यान्तं निगच्छती" त्याद्यन्वयव्यतिरेकावधारणायुक्तमोक्षसाधनबोधकश्रुतीनां बाधप्रसङ्गात् मोक्षोद्देशेन जिज्ञासाशास्त्रारम्भवैयर्थ्याच्च किञ्च उभयपक्षे ऽप्यावरकोपाधेः सत्यत्वं मिथ्यात्वं वा नाद्यः द्वैतापत्तेः सत्यस्य ज्ञाननाश्यत्वानङ्गीकारेण निर्मोक्षप्रसङ्गाच्च परमतप्रवेशाच्च नद्वितीयः अनुपपन्नत्वात् तथाहि यथा बिम्बस्य सावयवत्वरूपवत्वादिना सजातीयसमसत्ताकोपाधौ प्रतिबिम्बननियमस्तथा ऽवच्छेदकस्याप्युपाधेः समसत्ताकस्यैवावच्छेदकत्वनियमः अन्यथा स्वप्नरज्ज्वा जाग्रदवस्थायां राजभटनिगृहीतचौरादीनां बन्धनापत्तेः मृगमरीचिकाजले सूर्यादेः प्रतिबिम्बनापत्तेश्च नतु तदस्ति दृष्टिश्रुत्यगोचरत्वात् किञ्च तत्त्वज्ञानाज्जीवोपाधिनाशे सति जीवो नश्यति नवा आद्ये स्वरूपनाशस्यैव मोक्षत्वापत्तेः द्वितीये ऽविद्यानाशे ऽप्यनिर्मोक्षप्रसङ्गात् ब्रह्मातिरिक्तजीवस्वरूपावस्थानात् नच दर्पणादिषूपलभ्यमानमुखमालिन्यादि-

वच्छुक्लादिव्यवस्थोपपत्तिरिति वाच्यम् आपातोक्तेः मालिन्यादय औपाधिका दोषाः कदा नश्येयुः दर्पणाद्युपाध्यपगम इतिचेत् किं तदा मालिन्याद्याश्रयः प्रतिविम्वास्तिष्ठति नवा आद्ये तत्स्थानीयस्य जीवस्यापि स्थितत्वादनिर्मोक्षप्रसङ्गः द्वितीये तद्वदेव जीवनाशात् स्वरूपनाश इव मोक्षः स्यात् किञ्च यस्याः पुरुषार्थरूपदोषप्रतिभासस्तदुच्छेदः पुरुषार्थः तत्र किमौपाधिकदोषप्रतिभासो विम्वस्थानीयस्य ब्रह्मण उत प्रतिविम्वस्थानीयस्य जीवस्य वा ऽभिप्रेतः तदितरस्य वा आद्ययोः कल्पयोर्दृष्टान्तासिद्धिः मुखस्य तत्प्रतिविम्वस्य वा मालिन्यादिदोषशून्यत्वात् नहि मुखं प्रतिविम्वं वा चेतयते उभयोर्जडत्वात् तदुभयेतरद्रष्टुरभावान्न तृतीयः किञ्चाविद्याकल्प्यस्य जीवस्य कोवा कल्पकः अविद्येति चेन्न अचेतनत्वात् नापि जीवः आत्माश्रयापत्तेः शुक्तिरजतवदविद्याकल्पितत्वाच्च जीवस्य ब्रह्मैव कल्पकमिति चेन्न ब्रह्मणि अज्ञानस्यैवापातात् किञ्च ब्रह्मण्यज्ञानानङ्गीकारे किं ब्रह्म जीवान्पश्यति नवा पश्यति चेदीक्षादिपूर्विका विचित्रसृष्टिर्नामरूपव्याकरणादि च ब्रह्मणो न

स्यात् अथ पश्यति चेदखण्डैकरसं ब्रह्म नाविद्या-मन्तरेण जीवान्पश्यतीति ब्रह्मण्यज्ञानप्रसङ्गः अत एव मायाविद्याविभागवादो ऽपि निरस्तः अज्ञानमन्तरेण हि मायिनो ब्रह्मणो जीवदर्शित्वा सम्भवात् नहि मायावी परानदृष्ट्वा मोहयितुमलं नापि माया मायाविनोर्दर्शनसाधनं दृष्टेषु परेषु तन्मोहनसाधनमात्रत्वात् तस्याः अथ ब्रह्मणो मायाजीवदर्शित्वं कुर्वती जीवमोहनस्य हेतुरिति चेन्न तर्हि परिशुद्धस्याखण्डैकरसस्य स्वप्रकाशस्य ब्रह्मणः परदर्शित्वं कुर्वती माया अपरपर्याया-ऽविद्यैव स्यात् ननु विपरीतदर्शनहेतुरविद्या माया तु मिथ्याभूतं ब्रह्मव्यतिरिक्तं मिथ्यात्वेन दर्शयन्ती न ब्रह्मणो विपरीतदर्शनहेतुः अथ तस्या अनादि-त्वमिति मैवम् एकत्वे ज्ञायमाने द्विचन्द्रदर्शनहेतो-रप्यविद्यात्वात् यदिच ब्रह्ममिथ्यात्वेनैव स्वव्य-तिरिक्तं जानाति तर्हि कथं तान्मोहयति न ह्युनु-मत्तो मिथ्यात्वेन ज्ञातान्मोहयितुमीहते अथा-पुरुषार्थपरमार्थदर्शनहेतुरविद्या माया तु दर्शने हेतुरतो ऽस्या अनादित्वमितिमतं तत्र द्विचन्द्र-दर्शनस्य दुःखहेतुत्वाभावेनापुरुषार्थत्वाभावे ऽपि

तद्धेतुरविद्यैव तन्निरसने प्रयासदर्शनात् यदिच नापुरुषार्थदर्शनकरी माया तर्ह्यनुच्छेद्यतया ब्रह्म-स्वरूपानुबन्धिनी स्यात् अस्तु को दोष इतिचेत् द्वैतदर्शनमेव दोषः "यत्र द्वैतमिव भवति तत्रेतर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि"त्याद्यद्वैतश्रुतिव्याकोपात् परमार्थविषयाः अद्वैतश्रुतयः मायायास्त्वपरमार्थत्वान्न विरोध इतिचेत् अपरिच्छिन्नानन्दैकरूपस्य ब्रह्मणो ऽपर-मार्थभूतमायादिदर्शनं तद्दर्शनं चाविद्यामन्तरेण नोपपद्यते तव मते ह्याविद्यकमेव ब्रह्ममायादि-दर्शित्वादिति तदसिद्धं ननु अनेन "जीवेनात्मना ऽनुप्रविश्ये"तिश्रुतेर्न जीवब्रह्मणोर्वास्तवो भेदः किन्तु कल्पितभेदाश्रयणेनैवेयं व्यवस्थोच्यते नच कस्य कल्पना न तावद्ब्रह्मणः तस्य परिशुद्धज्ञाना-त्मनः कल्पनाशून्यत्वात् नापि जीवानामन्योन्या-श्रयापत्तेः कल्पनाधीनो हि जीवभावो जीवाश्रया च कल्पनेति वाच्यम् अविद्याजीवत्वयोर्बीजाङ्कुर-न्यायेनानादित्वात् जीवानां भ्रमस्यानादित्वान्न तद्धेतुरन्वेषणीय इति चेन्न स्वकपोलकल्पनाविजृ-म्भितत्वात् तथाहि जीवस्याकल्पितस्वरूपेण-

विद्याश्रयत्वे ब्रह्मण एवाविद्याश्रयत्वमुक्तं स्यात् तदतिरिक्तेन तस्मिन् कल्पितेनाकारेणाविद्याश्रयत्वे जड़स्याविद्याश्रयत्वमुक्तं स्यात् नहि मायावादे तदुभयातिरिक्ताकारस्याङ्गीकारः नच कल्पिताकारविशिष्टेन स्वरूपेणैवाविद्याश्रयत्वमितिवाच्यं अखण्डैकरसस्वरूपस्याविद्यामन्तरेण विशिष्टत्वासम्भवात् किञ्च जीवाज्ञानाश्रयणे किं प्रयोजनमिति वाच्यं बन्धमोक्षव्यवस्थासिद्धिरेवेति चेन्न सातु तत्पक्षे ऽपि न सम्भवति अविद्याया विनाशो हि मोक्षस्तत्रैकस्मिन्मुक्ते ऽविद्याविनाशात् सर्वे मुच्येरन् अन्येषां ह्यमुक्तत्वादविद्या तिष्ठतीति चेत्तर्हि न कस्यापि मुक्तिः स्यात् अविद्याया अविनष्टत्वात् प्रतिजीवमविद्याभेदः कल्प्यते चेत् भेदः स्वाभाविको वोत कल्पितः नाद्यः अनङ्गीकारात् भेदसिद्धये विद्याकल्पनस्य वैयर्थ्यप्रसङ्गात् नद्वितीयः अन्योऽन्याश्रयात् जीवभेदसिद्धौ तासां सिद्धिस्तासु च जीवभेदसिद्धिरिति नच वीजाङ्कुरन्यायेन तस्या दोषत्वमुक्तमेवेति वाच्यम् उक्तन्यायस्यात्रानवसरात् तथाहि वीजाङ्कुरेषु तावदन्यदन्यद्वीजमन्यस्यान्यस्याङ्कुर-

स्योत्पादकं प्रत्यक्षादिप्रमाणसिद्धम् इहतु याभिर-
विद्याभिर्ये जीवाः कल्प्यन्ते तानेवाश्रित्य तासां
सिद्धिः अथ वीजाङ्कुरन्यायेन पूर्वपूर्वजीवाश्रया-
भिरविद्याभिरुत्तरोत्तरजीवकल्पनां मन्यसे उत
विज्ञानवादिवज्जीवोत्पत्तिम् आद्ये असम्भवः कल्प-
नायाः प्राक् कल्पकस्याभावात् द्वितीये जीवानां
भङ्गुरत्वं कृतनाशाकृताभ्यागमप्रसङ्गश्चेति अत
एव ब्रह्मणः पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तर-
जीवभावकल्पनमित्यपि निरस्तम् अविद्याप्रवाहे
ऽभ्युपगम्यमाने तत्कल्पितजीवभावस्यापि तद्वत्प्र-
वाहानादिता स्यान्न ध्रुवरूपता तथात्वे च आमोत्ता-
जीवभावस्य ध्रुवत्वमपि तवेष्टं न सिद्ध्येत् ननु
प्रसादनिगरणादिवदनुपपन्नैकवेद्यायामविद्याया-
मवस्तुभूतायां नेतरेतरादिदोषा अनवक्लृप्तिमाव-
हन्तीति चेन्न तथात्वे च सति मुक्तानामपि परं
ब्रह्म चाश्रयेदविद्येति मन्तव्यं पण्डितम्मन्यैः तेषां
शुद्धज्ञानरूपत्वादशुद्धरूपाविद्या न तत्र सज्जतीति
तर्ह्युक्तोपपत्तिभिर्जीवानपि माश्रयेत्तेषामपि स्वरू-
पतो ब्रह्माभिन्नत्वेन शुद्धत्वाविशेषात् अन्यथा तव
मते शुद्धस्य ब्रह्मणो विद्याश्रयत्वाङ्गीकारेण

मुक्तानां शुद्धानां पुनरविद्याश्रयत्वे ऽपि कियान्
दोषः तथोक्तं विवरणे "आश्रयत्वविषयत्वभागिनी
निर्विशेषचितिरेव केवले"त्यादिना परैरपि निरस्त-
त्वात्प्रतिबिम्बवादः पापीयानिति श्रेयोऽर्थिभिः
सर्वथोपेक्षणीयः श्रुत्यादिमानशून्यत्वात् ननु "एक
एव हि भूतात्मा भूते भूते व्यवस्थितः एकधा
बहुधा चैव दृश्यते जलचन्द्रवदि"तिश्रुतिसिद्धत्वा-
त्कथमश्रौतत्वमिति चेन्न उक्तश्रुतेरन्तर्यामिदोषा-
संस्पर्शप्रतिपादनपरत्वेन प्रतिबिम्बविषयकत्वा-
भावात् तस्मिन्वाक्ये प्रतिबिम्बशब्दादर्शनात्
काल्पनिकार्थस्य बुद्धिकौशल्यमात्रत्वात् श्रुत्यर्थस्तु
भूतात्मा भगवान्वासुदेव एक एव भूते भूते व्यव-
स्थित इति प्रथमभूतशब्दो देवतिर्यङ्मनुष्यादि-
चेतनवर्गपरः द्वितीयभूतशब्दो ऽचेतनवर्गपरः यद्वा
भूते कार्यवर्गे अभूते कारणवर्गे यद्वा भूते सृष्टि
गतेबद्धचेतनवर्गे अभूते सृष्ट्यनन्तर्गते नित्यमुक्त-
चेतनवर्गे विशेषेण सदैकरसानन्दरूपेणावस्थितः
तद्गतदोषासंस्पृष्टमाहात्म्य एव सर्वान्तरात्मत्वात्
एष सर्वभूतान्तरात्मे"तिश्रुतेः "अहमात्मा गुडा-
केश सर्वभूताशयस्थित" इतिस्मृतेश्च अमच्युत-

स्वरूपगुणादिभिः सच्चित्स्वरूपो महात्मभिर्दृश्यते तदनुग्रहभाजनैरुपनिषच्चक्षुषेत्यन्वयः ननु गुण-दोषसम्पृक्ते वस्तुनि वर्त्तमानस्य कथमिव तन्नि-र्लेपत्वमिति शङ्कां दृष्टान्तेन निराकरोति जलचन्द्र-वदिति यथा चन्द्रः श्रीगङ्गादिपुण्यजलेषु शूकरादि-विलोडितदुर्गन्धिगर्त्तादिजलेषु स्वकरनिकरव्याप्त्या वर्त्तमानोऽपि तद्गतगुणैर्दोषैर्वा न युज्यते एवं ब्रह्मादिःश्वपाकान्तेषु चेतनाचेतनेषु साम्येन स्वरू-पव्याप्त्या तिष्ठन्नपि परमेश्वरो न तद्गतगुणैर्दोषैर्वा-युज्यते ऽस्पृष्टस्वभावत्वात् "सूर्यो यथा सर्व-लोकस्य चक्षुर्न लिप्यते चाक्षुषैर्वाह्यदोषैः एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन वाह्य" इत्यग्रिमवाक्यात् "एतेनोपमा सूर्यकादिव"दित्य-धिकरणं व्याख्यातं वोध्यं तत्रैकधा समष्ट्यन्तरात्म-तया वहुधा व्यष्ट्यन्तरात्मतयेति सङ्क्षेपः अथ च तवाभिप्रेतं विम्वभूतं ब्रह्म उपाध्यन्तःस्थं तद-नन्तर्गतं वा नाद्यः जलान्तःस्थस्य मत्स्यकूर्मादेः प्रतिविम्वादर्शनात् नान्त्यः तव पक्षे ब्रह्मणो विद्या-वहिःस्थत्वासम्भवात् अन्यथा सदेशत्वापत्तेः परिच्छिन्नत्वप्रसङ्गाच्च तथात्वे च मिथ्यात्वं दुर्वारं

ब्रह्म मिथ्या सदेशत्वात् पृथिव्याकाशादिवत् परि-
च्छिन्नत्वाच्च घटादिवदित्यनुमानात् एवमवच्छेदवा-
देऽप्युक्तदोषा ऊहनीयाः विशेषाभावात् नाप्येक-
जीववादस्य सम्यक्त्वं पूर्वमेव निरस्तत्वात् प्रमाण-
शून्यत्वाच्च नच "पुरत्रये क्रीडति देव एकः एको
देवः सर्वभूतेषु गूढ" इत्यादिश्रुतीनां तत्र मानत्व-
मिति वाच्यं तासामेकजीवपरत्वाभावात् श्रुत्य-
र्थस्तु पुरत्रये जाग्रदाद्यवस्थावच्छिन्नदेहत्रये एक
एव जीवात्मा देवः प्रकाशरूपत्वात् क्रीडनशील-
त्वाद्वा नत्ववस्थाभेदाज्जीवभेदः अन्यथा कृतनाशा-
कृताभ्यागमप्रसङ्गात् इति प्रथमवाक्यार्थः "एको
देव" इत्यादिवाक्यं तु ब्रह्मपरं सर्वव्यापित्व-
सर्वभूतान्तरात्मत्वकर्माध्यक्षत्वसर्वसाक्षित्वादीनां।
ब्रह्मासाधारणलिङ्गाना जीवे कथमप्यसम्भवात्
तस्मादेकजीववादो ऽश्रौत एवेति सिद्धं "नित्यो
नित्यानां चेतनश्चेतनानां ॥ अंशो नानाव्यपदे-
शात् ॥ नत्वेवाहं जातु नासं न त्वं नेमे जना-
धिपाः ॥ वहवो ज्ञानतपसा पूता मद्भावमागता"
इत्यादिश्रुतिस्मृतिन्यायाविरोधात् शास्त्रे क्वचिदेक-
वचनोक्तिर्जातिपरा "ब्राह्मणो न हन्तव्य" इत्या-

दिवत् औपाधिकभेदवादेतु कायव्यूहस्थले यो-
गिनः सर्वदेहेषु भोग इवैकजीवस्य सर्वदेहेषु
तत्सुखाद्यनुभवापत्तेः ब्रह्मण एव जीवत्वे नित्य-
मुक्तत्वादिश्रुतिव्याकोपाच्च एकस्यानेकदेहेषु प्रत्य-
क्परावृत्तसम्भवाच्च नचान्तःकरणभेदस्यात्र नियाम-
कत्वमिति वाच्यं योगिनः कायव्यूहानामन्तः-
करणभेदेऽपि प्रत्यक्त्वादर्शनात् प्रत्युताहमित्येव
सर्वत्र प्रतीतिदर्शनाच्च अवच्छेदवादोक्तदोषाणाम-
त्रापि साम्यात् किन्तूपाधिसत्त्वमिथ्यात्वयोरेव
विशेष इत्यलं विस्तरेण सिद्धान्ते तु देहेन्द्रिय-
मनोबुद्धिप्राणादिजडवर्गभिन्नो ज्ञानस्वरूपो ज्ञातृ-
त्वादिधर्माश्रयः तत्र प्रथमविशेषणं देहेन्द्रियादि-
जडवर्गवादिबाह्यपक्षव्यावृत्त्यर्थं तेच पूर्वमेव
प्रमाणमुखेन निरस्ताः "एतस्मान्मनोमयाद-
न्योऽन्तरात्मा विज्ञानमय" इतिश्रुतेः "आकाश-
ाद्यग्निजलपृथिवीभ्यः पृथक् स्थिते आत्मन्या-
त्ममयं भावं कः करोति कलेवरे" इत्यादिस्मृतेश्च
[illegible]थ तार्किकादिपक्षव्यावृत्त्यर्थं द्वितीयविशेषणं
यथासैन्धवघनो ऽनन्तरो बाह्यः कृत्स्नो रसघन
एवं वा अरे अयमात्मा ऽनन्तरोऽबाह्यः कृत्स्नो

विज्ञानघन एव अत्रायं पुरुषः स्वयं ज्योतिर्भवती"त्यादिश्रुतेः तेषां मते स्वरूपस्य चेतनत्वानङ्गीकारेणोक्तश्रुतेर्व्याकोपादितिभावः अथ मायावादव्यावृत्तये चरमविशेषणं "अविनाशी वा अरे आत्मा अनुच्छित्तिधर्मा पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुष" इति "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् नहि श्रोतुः श्रुतेः नहि मन्तुर्मतेर्नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ऽविनाशित्वात् विज्ञातारमरे केन विजानीयात् जानात्येवायं पुरुष" इत्यादिश्रुतिभ्यः "ज्ञोऽत एव कर्त्ता शास्त्रार्थवत्त्वा"दित्यादिन्यायात् "एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विद" इतिस्मृतेश्च तन्मते-ज्ञातृत्वाद्यनङ्गीकारेण तत्प्रतिपादकशास्त्रबाधात् ननु स्यादेतद्यदि तवाभिमतं धर्मज्ञानं सिद्ध्येत नतु तदस्ति ज्ञानयोरत्यन्तसजातीयतया ऽऽधाराधेयभावो ऽसम्भवः जले निक्षिप्तजलवदिति चेन्न विषमदृष्टान्तत्वात् जलयोर्द्रव्यत्वेन तत्र भेदानुपलब्धिरिष्टापन्ना अत्यन्तसाजात्यात् परन्तु भेदस्य सावयवद्रव्यत्वेन तत्राप्यनुमानगम्यत्वात् अन्यथा

वृद्धिह्रासानुपपत्तेः प्रकृते तु धर्मत्वस्य धर्मित्वस्य चावच्छेदकस्य भिन्नत्वान्नोक्तदोषप्रयोगः मणिद्युमण्यादिष्वाधाराधेयभेदस्य प्रत्यक्षोपलब्धेः प्रकृष्टप्रभावान् सूर्य इत्यादिप्रतीतेः नच मण्याद्यवयवेष्वेव प्रभात्वव्यवहारः सूर्यस्यावयवा एव विशीर्यमाणा लोके प्रचरन्तीति वाच्यं कालान्तरे द्रव्यनाशप्रसङ्गात् नच तत्रावयवान्तरोत्पत्तिः कल्प्यते इति वाच्यं त्वद्गुराशेतरप्रमाणाभावात् प्रभा तद्वतोभेदस्य च प्रमाणसिद्धत्वात् "रामेणानुगता सीता भास्करेण प्रभा यथे"ति सर्वज्ञ वाल्मीक्युक्तेः अन्यथा रजतादिसम्पुटनिहितायाः कस्तूरिकाया अवयवनाशे कालान्तरे सर्वस्या अपि तस्या अनुपलब्धिप्रसङ्गात् तस्माद्यथा सूर्यतत्प्रभयोस्तैजसत्वाविशेषेऽपि सूर्यत्वप्रभात्वयोरवच्छेदकत्वेनाधाराधेयताप्रत्यक्षादिप्रमाणसिद्धा तद्वत्प्रकृतेऽपि उभयोर्ज्ञानत्वसाम्येऽपि धर्मत्वधर्मित्वावच्छिन्नतया तत्तासिद्धिः सूपपन्नेति सङ्क्षेपः एतेन बुद्धिवृत्तावेव ज्ञानत्वोपचार इतिनिरस्तं पूर्वमेव विस्तरेण निर्मूलितत्वात् किञ्च जडरूपया तया ऽज्ञानानिवृत्तेः अन्यथौपचारिकस्यापि कार्यकारित्वे "आदित्यो

यूप" इतिश्रुत्या सूर्यत्वेनोपचरितादपि यूपात्तमो-जाड्यादिनिवृत्तिप्रसङ्गात् नापि वृत्तिप्रतिबिम्बित-चेतनस्याज्ञानत्वमिति वाच्यं प्रतिबिम्बानुपपत्तीनां पूर्वमेव विस्तृतत्वादिति सङ्क्षेपः अथ तस्य स्वरूपमहमर्थ एव अहं जानामीत्यादिप्रतीतेः "अहं वै त्वमसि सोऽहं ब्रह्मास्मि यदात्मानमेवा-वेदाहं ब्रह्मास्मी"तिश्रुतिभ्यः अत्र विप्रतिपत्तयश्च प्रथमाध्याये विस्तरशो निरस्ता एव सच ज्ञातृ-भिन्नः "विज्ञानं यज्ञं तनुते" इतिश्रुतेः कर्त्रभिन्नश्च नच विज्ञानशब्दोऽत्र बुद्धिपर इति वाच्यं तस्या जडत्वात् करणत्वाच्च अन्यथा घटादौ दण्डादौ चातिप्रसङ्गात् जडत्वाद्यविशेषात् नन्वकर्त्तैवात्मा तथाच "न जायते म्रियते वे"ति तस्य जन्मादि-विकारं प्रतिषिध्य "हन्ता चेन्मन्यते हतं हतश्चे-न्मन्यते हतं उभौ तौ न विजानीतो नायं हन्ति न हन्यते" हननक्रियाया व्यापाराश्रयत्वं फलाश्रयत्वं वा मन्यमानोऽज्ञ इतिकठवल्युक्तेः "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः अहङ्कार-विमूढात्मा कर्त्ताऽहमिति मन्यते नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टाऽनुपश्यति कार्यकारणकर्त्तृत्वे

हेतुः प्रकृतिरुच्यते पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इत्यादिस्मृतिभ्यश्च तस्मात् प्रकृतेरेव कर्त्तृत्वेन पुरुषस्य भोक्तृत्वमात्रमेव निर्णायादिति चेन्न पूर्वमेव दत्तोत्तरत्वात् अन्यथा "यजेत् स्वर्गकामः मुमुक्षुर्वै शरणं व्रजेत् सो ऽन्वेष्टव्यः स विजिज्ञासितव्य" इत्यादिभोगमोक्षसाधनोपदेशशास्त्रबाधात् "नायं हन्ती"त्यादिश्रुतेरात्मनो नित्यत्वादिना हननक्रियाया व्यापाराश्रयत्वफलाश्रयत्वयोर्निषेधेन कृतार्थत्वात् नापि "प्रकृतेः क्रियमाणानि गुणै"रित्यादिस्मृतिबाधः शङ्कनीयः सांसारिकप्रवृत्तावस्य कर्त्तृत्वं प्राकृतगुणप्रयुक्तं न स्वरूपप्रयुक्तमितिविवेचनाय गुणेषु कर्त्तृत्वं तथाच "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इति "तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मति"रिति सांसारिकप्रवृत्तौ अधिष्ठानादिपञ्चकं हेतुर्न केवल आत्मेति तात्पर्यार्थः अन्यथा गुणानां कर्त्तृत्वे तेषामेव भोक्तृत्वापत्तेः कर्त्तृत्वभोक्तृत्वयोः सामानाधिकरण्यनियमात् नहि देवदत्तकर्त्तृककर्मणो यज्ञदत्तादीनां भोक्तृत्वं लोकवेदयोः प्रसिद्धं किञ्च

गुणकर्त्तृकप्रवाहस्य नित्यत्वेनानिर्मोक्षप्रसङ्गात् मुक्तानामपि पुनर्भोक्तृत्वप्रसङ्गो दुर्वारः इतरकर्त्तृकत्वप्रसङ्गात् किञ्च भोक्तृत्वमात्रस्वीकारे ऽपि भुजिक्रियाया व्यापाराश्रयत्वेनावश्यम्भावात् कथमकर्त्तृत्वमात्मन इतिपण्डितम्मन्यैर्विचारणीयमिति सङ्क्षेपः एतावता जीवेशयोः साधारण्ये उक्ते तदसाधारणलक्षणं किमित्यपेक्षायां तस्य भगवत्पारतन्त्र्यमेवेति श्रुत्यादिमानैर्गम्यते सर्वावस्थासु ज्ञानक्रियादौ च "तमेव भान्तमनुभाति सर्वम् एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्यो ऽधो निनीषते ॥ अज्ञो जन्तुरनीशश्च आत्मनः सुखदुःखयोः ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वे"त्यादिश्रुतिभ्यः "परात्तुतच्छ्रुते"रिति सूत्रात् अश्वमेधपर्वणि व्यासः "नहि कश्चिदयं मर्त्यः स्ववशः कुरुते क्रियाः ईश्वरेण प्रयुक्तो ऽयं साध्वसाधु च मानवः करोति पुरुषः कर्म तत्र का परिदेवने"ति भगवद्गीतायां च "बुद्धिर्ज्ञानमसम्मोह"इत्यारभ्य "भवन्ति भावा भूतानां मत्त एव पृथग्विधा" इत्यन्तेनेत्यादिस्मृतिभ्यश्च नचैवं

श्रीभगवति वैषम्यादिप्रसङ्गस्तत्तत्कर्मफलभोक्तृत्व-
प्रसङ्गश्च "शास्त्रफलं प्रयोक्तरी"तिन्यायादिति वाच्यं
वैषम्यादीनां कर्मसापेक्षत्वान्न तत्र योगः "वैषम्य-
नैर्घृण्ये न सापेक्षत्वादि"ति सूत्रात् "साधुकारी
साधुर्भवति पापकारी पापो भवती"तिश्रुतेः नापि
तत्तत्फलभोक्तृत्वप्रसक्तेः शङ्कावकाशः अस्पृष्टदोष-
स्वाभाव्यात् "सकारयेत्पुण्यमथापि पापं न तावता
दोषवानीशितापी"तिश्रुतेः तर्हि कर्मण एव प्रयो-
जकत्वात् किमीश्वरेण गौरवादिति चेन्न तस्य
जडत्वादन्यथा घटादावपि प्रसङ्गः तस्य सर्वज्ञ
सर्वशक्तिमत्त्वाङ्गीकारे परमेश्वर एव स्यादस्म-
दिष्टापत्तेः नतु तदस्ति तेषां क्षणिकत्वस्य त्वयाऽपि
स्वीकारात् नच कर्मणां प्रलये नाशात्कथं तत्सा-
पेक्षत्वमिति वाच्यं तेषामनादित्वात् अन्यथा
सृष्ट्यभावप्रसङ्गात् कृतनाशाकृताभ्यागमप्रसङ्गाच्च
"न कर्माविभागादिति चेन्नानादित्वादि"तिसूत्रात्
नचैवं शास्त्राचार्योपदेशवैयर्थ्यं प्रत्यगात्मनां प्रयो-
ज्यत्वाङ्गीकारादिति वाच्यं तस्यभगवत्प्रयोज्यत्व-
विषयकज्ञानशून्याधिकारिकत्वात् तस्मात्तस्य भग-
वत्पारतन्त्र्यस्वरूपप्रयुक्तमेवेति सिद्धम् अथ किं

परिमाणको ऽयं जीवात्मा मध्यमपरिमाणक इति चेन्न अनित्यत्वप्रसङ्गात् पूर्वं विस्तरेण निरस्तत्वाच्च नापि वैभवपरिमाणकः तत्र तत्र निरस्तत्वात् तस्मादणुपरिमाणक एव उत्क्रान्तिगत्या गतिश्रुतीनां सार्थक्यात् "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वे"त्युत्क्रमणश्रुतिः "ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव गच्छन्ती"त्यादिगतिश्रुतिः "तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मणा" इत्यागतिश्रुतिः विभुवादे तासां बाधादित्यर्थः "उत्क्रान्तिगत्यागतीना"मिति न्यायात् ननु "यो ऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति"रित्यादि जीवप्रस्तावे "एष महानज आत्मे"तिविभुत्वश्रवणविरोध इति चेन्न तस्याः श्रुतेर्ब्रह्मपरामर्शपरत्वात् "यस्यानुवित्तः प्रतिबुद्ध आत्मे"तिमध्ये ब्रह्मप्रतिपादनात्तस्यैव परामर्श इत्यर्थः "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारा"दिति सूत्रकारोक्तेः किञ्च "अणुर्ह्येष आत्मा चेतसा वेदितव्यः यस्मिन्प्राणः पञ्चधा सम्विवेशे"ति काठरवेणाणुत्वश्रवणात् "वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः स चानन्त्याय

कल्प्यत" इत्युन्मानश्रवणाच्च उन्मानत्वं च अणुसदृशं पदार्थमुद्धृत्य तन्मानत्वमित्यर्थः "स्वशब्दोन्मानाभ्यां चे"तिसूत्रात् ननु तर्हि सर्वावयवगतसुखदुःखाद्यनुभवयौगपद्यव्यवस्थाऽनुपपत्तिः स्वरूपस्याणुमात्रदेशवृत्तित्वादिति चेन्न धर्मिणोऽणुत्वेऽपि तद्धर्मभूतस्य ज्ञानस्य विभुत्वात् "अणुनश्चक्षुषः प्रकाशो व्याप्तो एवमेवास्य प्रकाशो व्याप्तो वै पुरुष" इत्यादिश्रुतेः "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत" इति सदृष्टान्तोपपत्तिस्मृतेः "तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवदि"तिसूत्राच्च "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ॥ आनन्दं ब्रह्मणो विद्वान्न विभेति कुतश्चने"तिश्रुतेः यथा प्राज्ञस्य ह्यपरिच्छिन्नः पूर्णज्ञानानन्दः सारभूतो गुणास्तद्वदस्य ज्ञानं सारभूतो गुण इत्यर्थः यावदात्मवृत्तित्वान्नित्यत्वाच्च "न दोषस्तद्दर्शना"दितिसूत्रात् नच तस्य नित्यत्वे सुषुप्त्यादौ विषयानुभवापत्तेरिति वाच्यं तत्रानभिव्यक्तत्वात् "पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगादि"तिसूत्रात् अन्यथा पुंस्त्वादेरागन्तुकतापत्तेः तथात्वेच पुंस्त्वक्लीवत्व-

विभागासिद्धेरित्यर्थः नचज्ञानादिधर्मस्य स्वाश्रयं विना व्याप्त्यसम्भव इतिवाच्यं दीपं विना तत्प्रभाया वह्निं विना तदौष्मादेः पुष्पं विना तद्गन्धस्य व्याप्तिः प्रत्यक्षागमाभ्यां प्रसिद्धतरा "गुणाद्वा लोकव"दितिसूत्रात् अणुनश्चक्षुष इत्याद्युक्तश्रुतिः स्मृतिश्चाप्यत्रानुसन्धेया धर्मिणां विना जाति-समवायादीनां व्याप्तिरन्यैरपि स्वीकृता च एतेन क्वचिद्विभुत्वपरं शास्त्रमपि व्याख्यातं विभुधर्मा-श्रयाणां तथात्वस्य शक्त्यैवावगमान्मुख्यत्वमेवे-त्यर्थः नत्वात्मनो ऽणुत्वाङ्गीकारे ऽपि सुखदुःखाद्यनु-भवव्यवस्थादुरुपपादा आत्मवृत्तिविभुपरिमाणक-धर्मभूतज्ञानेन स्वशिरः पादाद्विगतसुखाद्यनुभूति-वत्परशरीरगतसुखाद्यनुभवो ऽपि दुर्वारः ज्ञान-व्याप्तेस्तत्रापि सत्त्वात् सर्वजीवनिकायवृत्तिसुखादेः सर्वेषामप्यवश्यमनुभाव्यमेव विभुवादे च कल्पित-दोषाणां भोगसाङ्कर्यस्य च तवापि दुर्वारत्वात् व्याप्तिसाम्याद्विति चेन्न आपातोक्तेः तथाहि अस्मत्सिद्धान्ते "अज्ञानेनावृतं ज्ञानम् आवृतं ज्ञानमेतेने"त्यादिमानात् आत्मज्ञानस्य विभुत्वे-ऽपि बद्धावस्थायां कर्मात्मकाज्ञानावृतत्वेनेन्द्रिय-

सन्निकर्षसापेक्षत्वात् यत्रेन्द्रियसन्निकर्षस्तस्यैवानुभवो नान्यस्येति एवं देवदत्तस्य स्वशरीरगतसुखादिभिः स्वान्तःकरणसन्निकृष्टत्वात्तेषामेवानुभवो न यज्ञदत्तशरीरगतसुखादीनां स्वकरणसन्निकर्षाभावात् मोक्षावस्थायां तु तदावरकाज्ञानस्य ध्वंसात् सर्वविषयकानुभवस्येष्टापत्तेः "सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वश" इत्यादिश्रुतेः परपक्षे तु स्वरूपस्यैव सत्त्वादुक्तदोषोद्धारासम्भव इति सिद्धान्ते तु प्रतिदेहं स्वरूपभेदान्नोक्तदोषावकाश इति महद्वैलक्षण्यमितिविवेकः "अंशो नानाव्यपदेशात् ॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूना"मित्यादिशास्त्रात् एतेन परमात्मनो जीवानां च महद्वैलक्षण्यमप्युक्तं तस्यैकस्यैव सर्वत्र स्वरूपेण व्याप्तत्वात् जीवानां प्रतिदेहं भेदात् भोक्तृत्वतदभाववत्त्वाच्च "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाकशीति" श्रुतेः एतेनैव जीवानामितरेतरभेदो ऽपि स्पष्टं निरूपितो भवति "अजो ह्येको जुषमाणो ऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इत्यादिश्रुतेः एतेनैव नित्यमुक्तानां व्यवस्थाऽपि सिद्धा तत्र नित्यमुक्तत्वं नाम

त्रैकालिकसंसारदुःखत्वावच्छिन्नात्यन्ताभावाश्रयत्वे सति सदैव स्वभावतः परानुभावितत्स्वरूप-गुणादिविषयकानुभवानन्दवत्त्वम् मुक्तेष्वतिव्याप्ति-वारणाय प्रथमविशेषणं मुक्तानां मुक्तेः प्राक्-संसारदुःखात्यन्ताभावाभावात् ब्रह्मण्यतिव्याप्ति-वारणाय परानुभावितपदं तत्र परानुभावितत्वा-भावात् "सदा पश्यन्ति सूरय" इतिश्रुतेः तेच गरुड़-विष्वक्सेनशङ्खचक्रकौस्तुभकिरीटादिसङ्गा भगव-दीयनित्यधाम्नः परिकरभूताः अनादिकर्मात्मिका-ऽविद्याप्रयुक्तप्रकृतिसम्बन्धतत्कार्यदुःखात्तद्भोगोप-योगिदेहादिरूपबन्धविनिर्मुक्ताः सन्तो भगवद्भाव-मापन्ना वद्धमुक्ता उच्यन्ते "जहात्येनां भुक्तभोगा-मजो ऽन्य" इतिश्रुतेः "बहवो ज्ञानतपसा पूता मद्भावमागताः इदं ज्ञानमुपाश्रित्य मम साधर्म्य-मागता" इत्यादिस्मृतेश्च तेच शुकवामदेवादयो ज्ञेयाः "सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु च जगाम भित्त्वा मूर्द्धानं दिवमित्युपपपात हे"ति-भारतोक्तेः तत्र नित्येष्वतिप्रसङ्गवारणाय प्रथम-विशेषणं वृद्धेषु व्यभिचारवारणायोत्तरदलम् उभयदलात्मकं तेषां लक्षणमिति विवेकः अथ

बद्धो नाम अनादिकर्मात्मिकाविद्याजन्यदेवतिर्यङ्-मनुष्यादिदेहेष्वात्मीयाभिमानेन संसारचक्रभ्रमण-जन्यदुःखाद्यनुभूतिमान् सच भगवन्निर्हेतुककृपा-कृपाटाक्षावलोकनेनाचार्य्यदेवत्वापत्त्या तन्मुख-निर्झरितसच्छास्त्रसिद्धान्तसुधासंप्लावितो निरस्त-संसाररोगो भगवत्स्वरूपगुणादिविषयकध्यान-सन्ततिपरिपाकजन्यसाक्षात्कारनिरस्तकर्मबन्धो। भगवद्भावापत्तियोग्यो भवतीति भावः "पराभि-ध्यानात्तु तिरोहितं ततोऽस्य बन्धविपर्यया"-विति सूत्रात् "यमेवैष वृणुते तेन लभ्य" इति-श्रुतेः भगवदीयकृपाविर्भावोऽपि श्रवणादिसाधन-सम्पन्ने श्रीहरिगुरुभक्तिसम्पृक्ते ऽधिकारिविशेष-एवाविर्भवति नान्यत्र एवं साधनानां तद्विषयक-शास्त्रस्यापि सार्थक्यान्न विरोधः तथोक्तमाद्याचार्य-पादैः "कृपा ऽस्य दैन्यादियुजि प्रजायते" एव-मुक्तसाधनहीनः संसरतीति भावः ननु भगवदीया कृपा परिच्छिन्ना सर्वगता वा नाद्यः अस्मदीया-दिवदकिञ्चित्करत्वात् "नद्वितीयः सर्वमोक्षप्रसङ्गा-दिति चेन्न आपातोक्तेः न तावद्वस्तुसद्भावमात्र-मोक्षासाधारणं अपितु तद्विषयीभावः एवञ्च कृपाया

व्यापकत्वेऽपि तद्विषयीभूतस्यैव बन्धनिवृत्तिर्नान्यस्येति नोक्तदोषावकाशः अन्यथा ब्रह्मणः सर्वगतत्वे निर्विवादे सर्वेषां मोक्षः किं न शङ्क्येथा देवानांप्रियः नच तस्य सर्वगतत्वे ऽपि तद्विषयकसाक्षात्काराभावान्नोक्तदोषप्रसङ्ग इति वाच्यम् उक्तरीत्या प्रकृते ऽपि साम्यात् यथा हिरण्यादिनिधिः स्वीयैः पित्रादिभिः गृहे निखनितो विद्यमानो ऽपि तत्प्रजास्तदज्ञानेन तमप्राप्य दरिद्राः खिद्यमाना भ्रमन्ति तथा भगवदीयगुणानां सत्त्वे मोक्षासाधारणहेतुत्वे चापि लौकिका अज्ञानेन तदविषयीभूता संसरन्तीति न कश्चिद्विरोधः ननु भगवदीयानुग्रहादिगुणगणः साधनान्तरसापेक्षः स्वतन्त्रो वा नाद्यः अन्योऽन्याश्रयात् अप्राधान्यापत्तेश्च नद्वितीयः सर्वत्र व्याप्तिप्रसङ्गादिति चेन्न तस्यनिरपेक्षत्वेऽपि तत्र नैर्घृण्यादिदोषप्रसङ्गवारणाय साधनान्तरप्रतिपादकशास्त्रबाधानिवृत्तये च साधनान्तराणामपि व्याजमात्रेण स्वीकारान्नोक्तदोषप्रसक्तिः नहि व्याजमात्रस्य वस्तुस्वातन्त्र्यहानिकर्तृत्वशक्तियुक्ताऽतिप्रसङ्गात् तस्मात्साधनान्तरं व्याजीकृत्य स्वयमेव सर्वफलदानार्हो भगवदीयानुग्रहादिगुणगणा

इत्यलं प्रासङ्गिकेन ननु "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरो ऽपि दृष्ट" इतिश्रुतेः बुद्ध्युपाधि-परिमाणो ऽणुपरिमाण आत्मगुणेन त्ववरो विभु-परिमाणक इत्यणुश्रुतीनां औपाधिकपरिमाणपर-त्वादिति नात्मस्वरूपपरिमाणपरत्वमिति चेन्न श्रुते-रन्यार्थकत्वात् तथाहि बुद्धेरुपाधेर्गुणेन परिमाणे-नात्मगुणेन परिमाणेन चावरो भगवतोऽपकृष्टो जीवात्मा आराग्रमात्रअणुपरिमाणकः सूक्ष्मबुद्धि-भिर्दृष्ट इत्यर्थः "दृश्यते त्वग्रया बुद्ध्ये"तिश्रुतेः अव-रशब्दः परमेश्वरस्य परत्वबोधकः तस्यान्यसापेक्ष-त्वानियमात् तयोर्भेदः स्वाभाविक इत्युक्तम्भवति-"अस्तिखल्वपरो भूतात्मा यो ऽयं सितासितकर्म-फलैरभिभूयमानः सदसद्योनिना यस्य सम्मूढत्वा-दात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद्गुणैः सूच्यमानः कलुषीकृतश्चे"तिमैत्रेयोपनिषच्छ्रुतेः "यो ऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः जीवसंज्ञो ऽन्तरात्मा ऽन्यः सहजः सर्वदेहिनां येन चेतयते सर्वं सुखं दुःखं च जन्मस्वि"ति मनुस्मृतेः "क्षेत्रज्ञस्येश्वरज्ञानाद्वि-शुद्धिः परमा मते" ति याज्ञवल्क्यस्मृतेरिति

सङ्क्षेपः अथ जीवात्मनो जन्मादयः सन्ति नवा किं तावत्प्राप्तं सन्तीति कुतः देवदत्तो जात अस्ति मृत इत्यादिप्रतीतेः अत्र राद्धान्तः "चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" तस्य जीवस्योत्पत्त्यादिव्यपदेशो भाक्तः वाच्यैकदेशे भज्यते इति तथा औपचारिक इत्यर्थः तर्हि किं विषये को ऽयं मुख्यो व्यपदेश इत्याशङ्क्याह "चराचरव्यपाश्रय" इति चराचरशरीरमाश्रित्य जन्मादिव्यपदेशस्य प्रवृत्तिर्नात्मस्वरूपमुद्दिश्येत्यर्थः कुतस्तद्भावे शरीरभावे जन्ममरणयोर्भावित्वात् "सवा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः स उत्क्रामन्म्रियमाण" इतिस्थूलशरीरसंयोगवियोगयोरेव जन्मादि पदार्थत्वश्रवणात् नन्वग्निविस्फुलिङ्गादिदृष्टान्तैरात्मजन्मादेः श्रूयमाणत्वात्कथं भाक्तत्वमित्याशङ्क्य समाधत्ते "नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः" आत्मा जीवात्मा स्वरूपेण नोत्पद्यते कुतः अश्रुतेः सृष्टिप्रकरणेषु तज्जन्मादेरश्रवणात् श्रुतेः पूर्वोक्तरीत्या भाक्तत्वमेव किञ्च तस्य ताभ्यः श्रुतिभ्यो नित्यत्वावगमात् "न जायते म्रियते वा विपश्चित् नित्यो

नित्यानां चेतनश्चेतनानां अजो ह्येको जुषमाणो ऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥ अजो नित्यः शाश्वतो ऽयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यादिश्रुतिस्मृतिभ्यः नचैवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्ग इति वाच्यं तस्य तदात्मकत्वेन तदपृथक्सिद्धत्वाभ्युपगमात् स्वतन्त्रसत्ताना-श्रयत्वाच्चेति आकाश उत्पद्यते नवेति उभय-विधश्रुतेः संशयः नोत्पद्यते इत्याह "न वियद-श्रुतेः" छान्दोग्ये सृष्टि प्रकरणे तस्य वियत आका-शस्योत्पत्तेरश्रवणात् नच "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्युत्पत्तिश्रुतिरस्तीति वाच्यं तस्या गौणत्वात् "वायुश्चान्तरिक्षं चैतदमृत,, मित्यमृतत्वशब्दाच्च नन्वेकस्मिन्नेव वाक्ये सम्भूत-शब्दस्य आकाशाद्युत्पत्तौ गौणत्वं तेजः प्रभृत्यु-त्पत्तौ च मुख्यत्वमिति कथं सम्भावनार्हम् अर्द्ध-जरतीयन्यायप्रसङ्गादिति चेन्न तात्पर्यवशादुपपत्तेः यथा "तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मे,,-त्यत्र ज्ञानसाधने तपसि ब्रह्मशब्दस्य गौणत्वं जिज्ञास्ये ब्रह्मणि च मुख्यत्वं तद्वत्प्रकृते ऽपि सम्भाव्यमिति प्राप्ते राद्धान्तमाह "प्रतिज्ञा हानि-

रव्यतिरेकाच्छब्देभ्यः" ॥ येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात" मिति "आत्मनि खल्वरे दृष्टे श्रुते मते ज्ञाते सर्वं विदित"मिति प्रतिवेदान्तं प्रतिश्रुता या प्रतिज्ञा तस्याश्च प्रतिज्ञाया आकाशादि-सर्वप्रपञ्चस्य ब्रह्मोपादेयत्वेनोत्पत्त्यभ्युपगमे ऽहा-निरनुपरोधः स्यात् उपादेयस्योपादानाव्यतिरेकात् व्यतिरेके स्वतन्त्रसत्ताभावात् प्रतिज्ञाहानिः प्रतिज्ञा-नुपरोधान्यथाऽनुपपत्त्या ऽऽकाशाद्युत्पत्तिर्मुख्यैव प्रतिज्ञाहानौ वेदस्याप्रामाण्यप्रसङ्गादितिभावः नाप्युक्तदृष्टान्तः साधीयान् वैषम्यात् दृष्टान्ते ब्रह्म शब्दस्य पाठभेदादेकस्य मुख्यत्वं द्वितीयस्य च गौणत्वं सूपपन्नं प्रकृतेतु सम्भूत इतिशब्दस्य सकृत्पाठादुभयार्थकत्वं महद्विरुद्धमिति सिद्धं दृष्टान्तस्य वैषम्यमित्यर्थः किञ्च शब्देभ्यः "सदेव सौम्येदमग्र आसी"दितिसृष्टेः प्रागेकत्वमवधार्य "ऐतदात्म्यमिदं सर्व"मिति चेतनाचेतनवस्तुजा-तस्य तदात्मकतया तदपृथक्सिद्धताविधायक-शब्देभ्यः सर्वस्यापि कार्यत्वेन मुख्योत्पत्तेः सम्भ-वात् नन्वाकाशस्यामृतत्वश्रवणादुत्पत्त्यश्रवणा-च्चोत्पत्तिरनुपपन्नेति चेत्तत्राह "यावद्विकारं तु

विभागो लोकवत्" तुशब्दः शङ्काव्यावृत्त्यर्थः यावद्वि-
कारं प्रपञ्चमात्रस्य ऐतदात्म्यमिदं सर्व"मितिश्रुत्या
विभाग उत्पत्तिरवगम्यते लोकवदिति यथा लोके
देवदत्तस्यैते पुत्रा इति प्रतिज्ञाय तेषां मध्ये त्रयाणा-
मुत्पत्तिकथने सर्वेषामुत्पत्तिलाभस्तद्वदाकाशोत्पत्ति-
रपि अमृतत्वश्रुतेरपि अमरा देवा आयुर्घृतमिति
वद्गौणतया बहुकालावस्थितिपरत्वमिति सङ्क्षेपः
"एतेन मातरिश्वा व्याख्यातः" एतेनाकाशोत्पत्ति-
प्रतिपादनेन वायोरुत्पत्तिरपि प्रतिपादिता भव-
तीत्यर्थः "आकाशाद्वायु"रितिश्रुतेः अथाकाश-
वाय्वोरमृतत्वश्रवणे ऽपि यद्युत्पत्तिरभ्युपगता तर्हि
ब्रह्मणोऽप्युत्पत्तिः किं स्यादित्याशङ्क्याह "अ-
सम्भवस्तु सतो ऽनुपपत्तेः" तुशब्दः पक्षव्यावृत्त्यर्थः-
सतो ब्रह्मणो ऽसम्भवः जन्माभावः कुतः अनु-
पपत्तेः उत्पत्त्यश्रवणात् प्रत्युत "सकारणं कारणा-
धिपाधिपः नचास्य कश्चिज्जनिता नचाधिप" इति-
ब्रह्मणः सर्वकारणत्वमुक्त्वा तदन्यकारणस्य निषेध-
श्रवणात् अन्यथाऽनवस्थाप्रसङ्गात् सर्वश्रुतिव्या-
कोपाच्च।किञ्च "तेजोऽतस्तथा ह्याह" अतो वायोस्ते
जउत्पद्यते हि निश्चये कुतः श्रुतिस्तथैवाह "वायो-

रग्निरितिश्रुतेः "आपः" अत इत्यनुवर्त्तते अतस्ते-
जस आप उत्पद्यन्ते "अग्नेराप" इतिश्रुतेः "पृथिवी"
अद्भ्यः पृथिव्युत्पद्यते "ता अन्नमसृजन्त" इतिश्रुतेः
नन्वन्नशब्दस्यादनीये व्रीहियवादौ शक्तत्वात्
कथं पृथिवीवाचकत्वमित्याशङ्क्याह "पृथिव्यधि-
काररूपशब्दान्तरेभ्यः" अधिकारस्वरूपं च शब्दान्तरं
चैतेभ्यः हेतुभ्यः अन्नशब्दस्य पृथिवीपरत्वं निश्ची-
यते इत्यर्थः तत्र "तत्तेजो ऽसृजत तदपो ऽसृजते"
तिमहाभूताधिकारदर्शनात् क्रमप्राप्तां पृथिवीमेव
बोधयत्यन्नशब्दः "यत्कृष्णं तदन्नस्ये"तिरूपश्रव-
णात् कृष्णं रूपं पृथिव्या एव "यदग्ने रोहितं रूपं
तेजसस्तद्रूपंयच्छुक्लं तदपां यत् कृष्णं तदन्नस्ये"
ति रूपविभागश्रुतेरित्यर्थः "शब्दान्तराच्च अग्नेराप
अद्भ्यः पृथिवी"ति "यदपां शर आसीत्तत्समहन्यत
सा पृथिव्यभव"दितिश्रुतेः किञ्च पृथिव्या अन्नो-
त्पत्तिश्रवणादपि कार्यकारणयोरभेदविवक्षया ऽपि
तद्व्यपदेशः सूपपन्नः "पृथिव्या ओषधय ओष-
धिभ्यो ऽन्न"मितिश्रुतेः अथ वियदादीनि वाय्वादिकं
कार्यं स्वयमेव स्वतन्त्रत्वेन सृजन्ति उत परमेश्वर
एव तत्तदन्तरात्मतया सर्वं कार्यं सृजतीति संशये

स्वातन्त्र्येण स्वयमेव सृजन्ति "आकाशाद्वायु" रितिश्रुतेः परमेश्वराधिष्ठितत्वाश्रवणाच्चेति प्राप्ते राद्धान्तः "तदभिध्यानात्तु तल्लिङ्गात् सः" तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः "तदैक्षत बहु स्यां प्रजायेये" ति तदीक्षणबहुभवनसङ्कल्पस्तदभिध्यानपदार्थः ॥ तदेव तदसाधारणं लिङ्गं तस्मात् स परमेश्वर एव तत्तदन्तरात्मा तत्तत्कार्यस्य स्रष्टेति निश्चीयते "य आकाशे तिष्ठन्नि"तिश्रुतेः एतेन "तत्तेज ऐक्षत" इत्यादिश्रुतेरपि मुख्यार्थत्वं निरूपितं तत्र पूर्वोक्त-रीत्या परस्यैवेक्षणत्वविधानात् अथ लयप्रकार-माह "विपर्ययेण तु क्रमो ऽत उपपद्यते च" तुशब्दः कारणलयपूर्वककार्यलयवादिताार्किकादिपक्षव्यावृ-त्त्यर्थः उपादानलये उपादेयस्थित्यसम्भवात् सृष्टि-क्रमाद्विपर्ययेण प्रातिलोम्येन लयो बोध्यः तत्र हेतुः "अत उपपद्यते चे"ति अतः आप्यस्य हिमकर-कादेरब्भावापत्तेर्दर्शनात् उपपद्यते च यस्माद्यस्यो-त्पत्तिस्तथैव तस्य लयो नान्यथेति "अन्नेन सोम्य शुङ्गेनापो मूलमन्विष्ये"त्यादिश्रुतेः "जगत्प्रतिष्ठा-राजर्षे" इत्यादिस्मृतेश्च ३ अथेन्द्रियाणां सृष्टिवि-प्रतिपत्तिं परिहरति तत्र "एतस्मादात्मनः आकाशः

सम्भूतः तत्तेजो ऽसृजत" इत्यादिसृष्टिप्रकरणे प्राणोत्पत्त्यश्रवणात् "असद्वा इदमग्र आसीत्तदाहुः किं तद्सदासीदित्यृषयो वाव ते ऽग्रे सदासीत्त दाहुः के ते ऋषय इतिप्राणा वा ऋषय" इत्यत्र प्राणानां सत्त्वश्रवणाच्च यथा ऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणा इति "एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि चे"ति "सप्त प्राणाः सम्भवन्ति तस्मा"दिति "स प्राणमसृजत प्राणात् श्रद्धा"मित्यादिषूत्पत्तिश्रवणात् किं प्राणा जायन्ते नवेति संशयः किं तावत्प्राप्तं न जायन्त इति कुतः "असद्वा इदमग्र आसी"-दिति सर्वाभावकथनपूर्वकतत्सद्भावश्रवणात् अत्र राद्धान्तः तथा प्राणाः यथा ऽऽकाशादिभूतानामुत्पत्तिः तथा प्राणपदाभिधेयेन्द्रियाणामुत्पत्तिर्बोध्या उक्तश्रुतिभिः "स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीमिन्द्रियं मनो ऽन्न" मित्युत्पत्तिश्रुतीनां बाहुल्यात् ननु सद्भावश्रवणाविरोधादुत्पत्तिर्गौणीति चेदत्राह "गौण्यसम्भवात्" गौण्या असम्भवो गौण्यसम्भवस्तस्मात् प्राणोत्पत्तिश्रुतेर्गौणत्वं न सम्भवति

"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्सिद्धये इदमुच्यते "एतस्माज्जायते प्राण"इत्यादि साच प्रतिज्ञा प्राणादेः सर्वविकारजातस्य तदुपादेयत्वाङ्गीकारे एव सिध्यति नान्यथा उपादानापृथक्सिद्धत्वादुपादेयस्येत्यर्थः तथा "ऽऽत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदित" मित्याद्यन्यत्रापि श्रवणात् किञ्च तत्प्राक्श्रुतेश्च इतोऽप्याकाशादिवत्प्राणानां मुख्यैव जन्मश्रुतिः "एतस्माज्जायते प्राण,, इति सकृदुच्चरितो वहुभिः सम्वध्यमानो जायत इतिशब्दः क्वचिन्मुख्यं क्वचिद्गौण इति निर्णेतुमशक्यत्वात्-वैरूप्यप्रसङ्गात् तथा "स प्राणमसृजत आत्मनो व्युच्चरन्ति,, इत्यादावपि एष न्यायो वोध्यः किञ्च तेजोऽवन्नपूर्वकत्वाभिधानात् वाक्प्राणमनसां "अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागि,,त्यत्र भूताप्यायकत्वादपि मुख्यमेव जन्मेति निश्चीयते नहि स्वतः सिद्धं वस्तु परानुग्राहकत्वमपेक्षत इति भावः तस्माद्वागादीनां भूतानुग्राह्यत्वं वदन्ती श्रुतिः तत्सद्भावमयं वदतीति-

तात्पर्यार्थः अथ प्राणविषयकसङ्ख्याविप्रतिपत्ति-परिहारायेदमारभ्यते कतीतरे प्राणा इतिविशयः "अत्र सप्तप्राणाः प्रभवन्ति तस्मादिति अष्टौ-ग्रहाइतिसप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चाविति नव वै पुरुषे प्राणा नाभिर्दशमीति दशेमे पुरुषे प्राणा आत्मैकादशे,, त्यादिश्रुतिषु सप्तादिचतुर्दश-पर्यन्ताः प्राणसङ्ख्या दृश्यते अतः संशयः कती-तरे प्राणा इति किं तावत्प्राप्तं सप्तैव कुतः "गते"-रिति "सप्त प्राणाः प्रभवन्ति तस्मा,,दितिश्रुत्याव-गमात् नच "गुहाशया निहिताः सप्त सप्ते,, तिवीप्साश्रुतिविरोध इतिवाच्यं वीप्सायाःपुरुष-भेदाभिप्रायकत्वात् तथाच प्रतिपुरुषं सप्तेत्यर्थः नन्वेवमष्टत्वाद्यधिकसङ्ख्याश्रुतेर्व्याकोप इतिचेत्त-त्राह "विशेषितत्वाच्च सप्त वै शीर्षण्याः प्राणा,, इतितावन्मात्रेण श्रुत्या विशेषितत्वात् अधिकस्य चात्रैवान्तर्भावादित्यर्थः अत्र राद्धान्तः "हस्तादय-स्तु स्थिते ऽतो नैवम्" हस्तादयस्त्वन्ये प्राणाः सप्त-भ्यो भिन्नाः श्रुत्या पठ्यन्ते "हस्तो वै ग्रहः सकर्म-णाऽतिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोती" त्यादिश्रुतिषु स्थिते सप्तत्वातिविलक्षण सप्तानान्त-

दधिकसङ्ख्यायामन्तर्भावो युक्तो नत्वधिकसङ्ख्याया हीनसङ्ख्यायाम् अन्याय्यत्वात् अतो हस्तादीनां सप्तत्वातिरिक्तत्वादेव नैवं सप्तैवेति न मन्तव्यम् तथा चैवं व्यवस्था प्राणास्तावदेकादशसङ्ख्याका एव कार्यस्यापि तावन्मात्रत्वात् फलाभावे साधना-पेक्षाभावात् दशेमे पुरुषे प्राणाश्चात्मैकादशे,,ति अत्रात्मशब्दो ऽन्तःकरणरूपमनोवाचकः करणस्यै-वाधिकारात् तत्र शब्दस्पर्शरूपरसगन्धविषयकानि-पञ्च ज्ञानानि तत्करणानि पञ्च ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि वचनादानविहर-णोत्सर्गानन्दरूपाश्च पञ्चकर्मविशेषास्तत्करणानिच पञ्चकर्मेन्द्रियाणि वाक्हस्तपादपायूपस्थाख्यानि सङ्कल्पादिकं चान्तरं कर्म तत्करणं च मन "इन्द्रि-याणि दशैकं च पञ्च चेन्द्रियगोचरा" इतिश्री-मुखोक्तेः तव सप्तसङ्ख्यायाश्चान्तर्भावे दोषलेशाव-काशो ऽपि नास्ति अधिकसङ्ख्याश्रुतेस्तु मनोवृत्ति-भेदमादाय सामञ्जस्यं बोध्यं तथाहि मनस एव वृत्तिभेदेन चातुर्विध्यात् तस्यैव द्वित्वविवक्षया द्वादशत्वं त्रित्वविवक्षया त्रयोदशत्वं चतुष्कविव-क्षया च चतुर्दशत्वं श्रुतिभिरुच्यते तथात्वेच सर्व-

श्रुतीनां स्वार्थपरत्वे नैराकांक्ष्यात् सामञ्जस्यमेव अधिकसङ्ख्याकल्पनस्य वैयर्थ्यादेकादशैव प्राणा इतिसिद्धम् अथेन्द्रियाणां परिमाणविवादं परिहरति "अणवश्च" प्रकृताः प्राणा इन्द्रियाणि विभव अणवो वा किन्तावत्प्राप्तं विभव इति कुतः "ते एते सर्वे समा अनन्ता" इतिअनन्तत्वश्रुतेः अत्र राद्धान्तः "अणवश्च" प्रकृताः प्राणा अणवः एतत्-कुतः प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति उत्क्रान्त्यादिश्रवणात् तेषामुत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वाच्च न स्थौल्यमपीतिभावः नचानन्तविधायकवाक्यविरोधः शङ्कनीयः तस्याः सङ्ख्यातत्त्वविधानपरत्वात् यद्वा "अथ यो हैतानननन्तानुपास्ते" इति श्रुत्युक्तोपासनार्थत्वात् नच मनसोऽणुत्वे सर्वदेहगतसुखदुःखाद्यनुभवाभावप्रसङ्ग इतिवाच्यं तस्य सङ्कोचविकाशशीलत्वात् अन्यथाध्रुवादि विषयपर्यन्तानुभवानुपपत्तेः अन्येषां चक्षुरादीनां तेन विना ऽकिञ्चित्करत्वादितिभावः "श्रेष्ठश्च" प्राणसम्वादे शरीरधारणहेतुतया निश्चितो मुख्यः प्राणः श्रेष्ठशब्दाभिधेयः "प्राणो वा ज्येष्ठः श्रेष्ठश्चे"तिश्रुतेः स जायते नवेति

संशये न जायते कुतः "न मृत्युरासीदमृतं * न तर्हि रात्र्या अह्न † आसीत्प्रकेतः आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनासे"ति-श्रुतौ आनीदिति प्राणकर्मोपादानात् प्रागुत्पत्तेः प्राणस्य सद्भावावगमादितिप्राप्ते राद्धान्तः "श्रेष्ठ-श्चे"ति श्रेष्ठः मुख्यः प्राणोऽपि भूतादिवदुत्पद्यते कुतः "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि-चे"त्यत्र मनस इन्द्रियेभ्यश्च तस्य पार्थक्येनोत्पत्ति-श्रवणात् नचोक्तश्रुतिविरोध इतिवाच्यं तस्याः परमकारणब्रह्मपरत्वात् "नाप्यानीदितिपदं प्राण-सद्भावे मानम् अवातमिति विशेषणाश्रवणात् "अ-प्राणो ह्यमना" इतिश्रुत्यन्तरोक्तब्रह्मलिङ्गत्वादवा-तस्य अवातमप्राणमित्यर्थः अन्यथा ऽद्वितीयादि-श्रुतिव्याकोपादित्यर्थः "न वायुक्रिये पृथगुपदेशात्" प्राणः वायुतत्वान्तर्गतः इन्द्रियव्यापाररूपा क्रिया वा न भवति कुतः पृथगुपदेशात् नचैवं "यः प्राणः स "वायुः स एष वायुः पञ्चविधः प्राणो ऽपानो

---

* देवभोग्यम् ।

† प्रलयकाले रात्र्याः केताश्चिह्नरूपश्चन्द्रः अह्नः सूर्यः स्वधया-सह नास्तां स्वधा पितृभ्यो देयमन्नं तदेकं ब्रह्मानीत् आसीत् पूर्वपक्षे आनीत् प्राणचेष्टांकृतवदित्यर्थः ।

व्यान उदानस्समान इतिश्रवणाविरोध इतिवाच्यं "प्राण एव ब्रह्मणश्चतुर्थपादः स वायुना ज्योतिषा भाति च तपति चे"तिश्रुतेः नहि वायुरेव सन्वायोः पृथगुपदिश्येत इत्यर्थः तथा क्रियाख्यः करण-व्यापारो ऽपि पृथक्त्वेनोपदिश्यते "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणिचे"त्यत्र प्राणस्य कर-णेभ्यः पृथगुपदेशात् नहि सर्वेषां कारकानामेक-व्यापारत्वसम्भवः प्रत्येकं तेषां भिन्नव्यापारत्व-नियमात् अन्यथा सर्वेषामपि सर्व व्यापारकत्वापत्तेः नच "यः प्राणः स वायु"रित्यादिश्रुतिविरोधस्य तादवस्थ्यमिति वाच्यं वायुरेवायमध्यात्मभावा-त्मकावस्थापन्नः पञ्चरूपात्मना वर्त्तमानः प्राणा-ख्ययोच्यते न द्रव्यान्तरं नवा वायुमात्रमित्यविरोध उभयश्रुतेः एतेन "सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्चे"ति करणानां सामान्या वृत्तिः प्राणः इतिसाङ्ख्यपक्षो निरस्तः ननु "सुप्तेषु वागादिषुप्राण एको जागर्त्ति मृत्युना ऽनाप्तः सम्वर्गो वागादी-न्सम्वृङ्क्ते प्राण इतरान्प्राणानूक्षति मातेव पुत्रा-नि"तिप्राणस्य शरीरेन्द्रियादिं प्रति ॥ स्वातन्त्र्य-श्रवणात् स्वतन्त्रः प्राण इत्यभ्युपगन्तव्यमित्या-

शङ्क्य समाधत्ते "चक्षुरादिवत्तु तत्सहशिष्टतादिभ्यः" तुशब्दः पक्षव्यावृत्त्यर्थः यथा चक्षुरादीनि जीव-कर्त्तृत्वादिव्यापारं प्रति करणानि तथा मुख्यप्राणो ऽपि राजमन्त्रिवदुपकरणभूत एव न स्वतन्त्रः कुतः तत्सहशिष्ट्यादिभ्यः शिष्टिः शासनं चक्षुरादिभिः सह तस्यापि शासनश्रवणात् प्राणसम्वादे तत्-सजातीयत्वे हि तैः सह शासनं युज्यते प्राणशब्द-परिगृहीतकरणेष्वस्य विशिष्याभिधानमादिशब्देन ग्राह्यम् "अथ य एवायं मुख्यः प्राणः योऽयं मध्यमः प्राणः" इत्यादिषु विशिष्याभिधानाज्जीवं प्रतिचक्षुरादिवदुपकारकत्वमिति सिद्धं ननु यदि चक्षुरादिवदस्य जीवं प्रत्युपकरणत्वं तर्ह्यस्य विषयरूपकार्यमपि द्वादशमङ्गीकार्यं तथाचैकादश-सङ्ख्याककार्याभ्युपगमसिद्धान्तभङ्ग इत्याशङ्कायां समाधानमाह "अकरणत्वाच्च न दोषस्तथाहि दर्शयति" अत्र नोक्तदोषप्रसङ्गावकाशः चक्षुरादि-वत् मुख्यप्राणस्य अकरणत्वात् जीवव्यापारं प्रति तस्य करणत्वाभावात् तर्हि किमर्थो ऽस्याङ्गी-कारस्तत्राह "तथाहि दर्शयति" हीतिनिश्चयार्थः श्रुतिस्तस्य भिन्नमसाधारणं कार्यान्तरं दर्शयती-

त्यर्थः तथाहि प्राणसम्वादे "अथ प्राणा अहं श्रेयसे व्यूदिरे,, इत्युपक्रम्य यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इत्युक्ते वागादीनां प्रत्येकमुत्क्रान्तौ प्रवचनादिवृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा प्राणस्योच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसक्तिं च निरूप्य प्राणाधीनां देहादिस्थितिं प्राणासाधारणकार्यभूतां दर्शयति "तान्वरिष्ठः प्राण उवाच मा मोह मापद्य-थाहमेवैतत्पञ्चधा ऽऽत्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामी"ति किञ्च "प्राणेन रक्षन्नवरं * कुलाय" मिति चक्षुरादीनां लयङ्गते प्राणकृतदेहादिरक्षां दर्शयति किञ्च "कस्मिन् न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामी"ति- "स प्राणमसृजते" त्यादिना प्राणाधीनां जीवस्य स्थिति मुत्क्रान्तिं च दर्शयतीति ननु तथापि प्राण-स्यानेकत्वश्रवणात् तथाहि प्राणोऽपानोव्यानउदानः समानश्चेति तत्र प्राग्वृत्तिरुच्छ्वासादिकर्मानासादि-संचारी प्राणः अपानोऽर्वाग्वृत्तिः निःश्वासादि-कर्मा व्यानस्तयोः सन्धिर्वार्युवत् कर्महेतुः उदान-

---

* जीवः प्राणेनावरं नीचं कुलायं देहं रक्षन् स्वपितीतिश्रुत्यर्थः

ऊर्द्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः समानः समं सर्वेष्वङ्गेषु रसान्नयतीति एवं संज्ञासङ्ख्याकार्यभेदात् तत्त्वान्तरत्वमेव तेषामिति चेदत्राह "पञ्चवृत्ति मनोवद्व्यपदिश्यते" प्राणादिसंज्ञकाः पञ्च पञ्चवृत्तिः प्राण एव न तत्त्वान्तरं "एतत् सर्वं प्राण एवेति" वचनात् तत्र दृष्टान्तः मनोवदिति कामः सङ्कल्प इत्येतत्सर्वं मन एवेतिवत् यथासङ्कल्पादयो मनोवृत्तिविशेषास्तथा प्राणापानादयोऽपि प्राणवृत्तय इत्यर्थः स चाणुः "अणुश्चे"तिसूत्रात् व्याख्यातप्रायमिदम् इतरप्राणोक्तन्यायस्यात्रावतरणीयत्वात् ननु "समः प्लुषिणा समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण प्राणो सर्वं प्रतिष्ठितं प्राणेनावृत"मिति विभुत्वश्रवणाद्विभुत्वमेवान्यथोक्तशास्त्रविरोधो दुःपरिहर इतिचेन्न उक्तश्रुतेः समष्टिप्राण*परत्वेन विरुद्धत्वात् अथेन्द्रियाणि स्वतन्त्रतया स्वयमेव स्वकार्ये प्रवर्त्तन्ते स्वस्वाधिष्ठातृदेवताप्रेरितानि वा किन्तावत्प्राप्तम् स्वयमेव प्रवर्त्तन्ते इति कुतः तेषां तादृक्शक्तिमत्त्वात् अत्र ब्रूते "ज्योतिराद्यधिष्ठानं तु तदामननात्" ज्योतिरादिभिरग्न्यादिभिरधिष्ठा-

---

* आधिदैविक हैरण्यगर्भेत्यर्थः ।

नमधिष्ठितं वागादिकरणजातं देवताप्रवर्त्तितं सत्स्व-
कार्यार्थं प्रवर्त्तते न स्वातन्त्र्येण कुतः तदामननात्
"अग्निर्वाग्भूत्वा मुखं प्राविशत् वायुः प्राणो भूत्वा
नासिके प्राविशदादित्यश्चक्षुर्भूत्वा ऽक्षिणी प्राविश"
दित्यादिश्रवणात् अध्यात्माधिभूताधिदेवैः सर्व-
ज्ञानक्रियाव्यवहारसिद्धिरिति तात्पर्यार्थः तत्राध्यात्म
शब्दः करणपरः अधिभूतशब्दो विषयपरः अधि-
दैवशब्दश्च करणाधिष्ठातृदेवतावर्गवाचकः चक्षुर-
ध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतं श्रोत्र-
मध्यात्मं श्रोतव्यमधिभूतं दिशस्तत्राधिदैवतं नासा
ऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतं जिह्वा
ऽध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतं
त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवत"
मित्यादिश्रुतिभ्यः अत्र पृथिवीशब्देनाश्विनौ
लक्ष्येते शास्त्रान्तरविरोधपरिहारार्थं जड़ायां प्रेर-
कत्वासम्भवात् "वागध्यात्ममिति प्राहुर्ब्राह्मणास्त-
त्त्वदर्शिनः वक्तव्यमधिभूतं च वन्हिस्तत्राधिदैवत"
मित्यादिस्मृतेश्च उक्तहेतोराभासत्वं निर्णीतं भवति
रथादीनांशक्तिमत्त्वे ऽपि अनडुहादिकं विना प्रवृ-
त्त्यदर्शनादप्रयोजकत्वं जड़त्वेन सत्प्रतिपक्षत्वं च

इन्द्रियाणि न स्वातन्त्र्ययोग्यानि जड़त्वात् करण-त्वाद्वा रथादिवच्चेति" तस्माच्छास्त्रादिप्रमाणबलेन पराधिष्ठितत्वसापेक्षत्वमेवेति सिद्धं ननु यदि देव-ताधिष्ठितत्वमेव तेषामङ्गीक्रियते तर्हि तदधिष्ठातृ-देवतानामेव भोक्तृत्वमपि स्वीकार्यं चेतनत्वात् तथात्वे च शारीरभोक्तृत्वस्याप्रयोजकत्वापत्तेरित्या-शङ्क्य तत्परिहारमाह "प्राणवता शब्दात्" प्राणो ऽस्यास्तीति प्राणवांस्तेन प्राणवता प्राणोपलक्षित-देहेन्द्रियादिसमुदायस्वामिना शारीरेणैव प्राणानां सम्बन्धो न देवताभिः कुतः शब्दात् श्रुतिमुखेन तथैवावगमात् "अथ यत्रैतदाकाशमनुविषुणं चक्षुः सचाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्रा-णीति स आत्मा गन्धाय घ्राण"मित्यादिश्रुतिः शारीरणैव प्राणानां सम्बन्धं दर्शयति परमपुरुषे-णेन्द्रियाधिष्ठातृदेवानां द्वारि द्वारपालानामिव करणप्रवर्त्तकत्वे निरूपितत्वात् न भोक्तृत्वादिषु नहि स्वामिभोगे द्वारपालानामधिकारः सम्भवति तासां तद्भिन्नदिव्यभोगप्रदानाच्च तस्माद्भगवदाज्ञया शारीरकरणानि स्वस्वकार्ये प्रेरयन्त्यो दिव्यभोगं भुञ्जन्ति श्रीभगवदाज्ञाभङ्गभिया नान्यत्र भोगे

तासां प्रवृत्तिरितिभावः "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ एतदक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिना देवतानां परनियोज्यत्वश्रवणात् "सर्वस्य चाहं हृदि सन्निविष्ट" इत्यादिस्मृतेश्च किञ्च "तस्य च नित्यत्वात्" तस्य करणसम्बन्धस्य शरीरेणैव नित्यत्वान्न देवताभिरिति सूत्रार्थः उत्क्रान्त्यादौ तदनुवृत्तिदर्शनात् तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"तिश्रुतेः तस्मात्करणाधिष्ठातृदेवानां सत्त्वेऽपि शारीरस्यैव भोक्तृत्वं न देवतानामिति सिद्धम् अत्र कैश्चित् तदिदं जीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं किं स्वायत्तं परायत्तं वेतिविषये स्वायत्तमिति प्राप्तउच्यते "ज्योतिराद्यधिष्ठान"मिति प्राणवता जीवेन सह ज्योतिरादीनामग्न्यादिदेवतानां प्राणविषयमधिष्ठानं तदामननात् तस्य परमात्मनः सङ्कल्पादेव भवतीत्यर्थः कुतः शब्दात् इन्द्रियाणां साभिमानिदेवतानां जीवात्मनश्च परमपुरुषाममननाय तत्त्वं शास्त्रात् इतिसिद्धान्तितं तच्चिन्त्यं यद्यपि चेतनाचेतनस्वरूप-

स्थित्यादिकं परमेश्वरायत्तमिति सर्वसम्मतं अस्मा-
कन्तु अभीष्टतममेव श्रुतिप्रमाणसिद्धत्वात् तथापि
उक्तार्थस्य "परात्तु तच्छ्रुते" रित्याद्युक्तशास्त्रेणैव
सिद्धतया पौनरुक्त्यदोषस्यावश्यम्भावादिति मनी-
षिभिरनुसन्धेयं ननु यथाप्राणापानादयो मुख्य-
प्राणस्य वृत्तिविशेषास्तथेतरे प्राणाश्चक्षुरादयोऽपि
तद्वृत्तय एव न तत्वान्तराणि कुतः तथैव श्रूय-
माणत्वात् "हन्तास्यैव सर्वं रूपमसामेति त एतस्यैव
सर्वे रूपमभव"न्नित्यादिना किञ्च प्राणैकशब्द-
श्रवणादपि तत्त्वाभेदो निर्णीयते इत्याशङ्क्योत्तर-
माह "त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्"
वागादय इन्द्रियाणि तानि तत्त्वान्तराण्येव न
मुख्यप्राणस्य वृत्तयः कुतः तद्व्यपदेशादन्यत्र श्रेष्ठात्
श्रेष्ठादन्यत्र मुख्यप्राणं विना तद्भिन्नतयेति यावत्
तेषां वागादीनां श्रुतौ व्यपदेशात् "एतस्माज्जायते
प्राणो मनः सर्वेन्द्रियाणि चे"त्यादिना ननु तर्हि
मनसोऽपि नेन्द्रियत्वं पृथगुपदेशाविशेषादिति
चेन्न तस्य मनसः श्रुतिव्याख्यारूपस्मृतौ हीन्द्रिय-
त्वाभ्युपगमात् "इन्द्रियाणि दशैकं चे"तिश्रीमु-
खोक्तेः "दशेमे पुरुषे प्राणा आत्मैकादश"तिश्रुतेश्च

समानजातीयत्वे एकां जातिं क्रियां गुणं चाश्रित्य सङ्ख्याप्रयोगः प्रवर्त्तते यथाष्टौ ग्रहाः रूपादिज्ञानोत्पत्तिहेतुत्वाच्चेन्द्रियत्वं मनस इतिभावः ननु कथं तर्हि चक्षुरादौ प्राणशब्दप्रयोग इतिचेन्न प्राणाधीनप्रवृत्तिकत्वेनेन्द्रियाणां तत्तानिर्देशस्य गौणत्वेनाविरोधात् "तस्मादेत एतेनाख्यायन्त" इतिश्रुतेः मुख्यप्राणविषयस्यैव प्राणशब्दस्येन्द्रियेषु लाक्षणिकत्वावगमादित्यर्थः किञ्च "भेदश्रुतेः" मुख्यप्राणस्येन्द्रियाणां च भेदश्रवणादपि मुख्यप्राणादीन्द्रियाणां तत्त्वान्तरत्वमित्यर्थः "ते ह वाचमूचु" रित्युपक्रम्य वागादीनामसुरविध्वस्तानामुपन्यासं कृत्वा तत्प्रकरणोपसंहारे" "ऽथ हेममासन्यं प्राणमूचु" रित्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथक्त्वेनोपक्रमणात् अत्रैव हेत्वन्तरमाह "वैलक्षण्याच्च" मुख्यप्राणादितरेषां वैलक्षण्यादपि तत्त्वान्तरत्वमितिसूत्रार्थः तथाहि प्राणस्य वागादिषु सुप्तेषु जागरणं इन्द्रियाणां मृत्युव्याप्तत्वेन प्राणस्य मृत्युना नाप्तत्वं तेषां विषयग्रहणहेतुत्वं प्राणस्य तु देहादिधारणपातनहेतुत्वं च श्रुतिषु दर्शनाद्वैलक्षण्येन तत्त्वान्तरत्वमित्यर्थः इन्द्रियेषु श्रवणालोच-

नाद्यसाधारणावृत्तयः प्राणस्य तु सर्वेन्द्रियेषु परिस्पन्दरूपासाधारणावृत्तिरिति विवेकः अत्र प्रमाणभूताः श्रुतयस्तु पूर्वमेव पठिता अनुसन्धेया इति सङ्क्षेपः ननु "तत्तेजोऽसृजत ॥ तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ॥ एतस्माज्जायते प्राण" इत्यादिजगत्सृष्टिविषयश्रुतीनां परस्परविरुद्धसृष्टिक्रमत्वदर्शनात् इतरेतरवाध्यवाधकभावापत्त्या ह्येकतमस्यापि क्रमस्य प्रामाणिकत्वासिद्धेः सर्वेषामपि श्रौतत्वाविशेषादिति चेन्न गुणोपसंहारन्यायेन न्यूनाधिकसङ्ख्योपक्रमस्य पौर्वापर्यक्रमस्याविरोधेन सर्वस्यापि सामञ्जस्यात् तथाचोक्तं विवरणकारैः श्रीपुरुषोत्तमाचार्यचरणैः गुणोपसंहारन्यायेन सर्वस्य वाक्यजातस्य सामञ्जस्यमेवेत्यादिना एतदुक्तं भवति सृष्टिक्रमश्रुतीनां परस्परविरोधे कयाचिद्व्यवस्थयैव भाव्यम् अन्यथैकतमस्या अपि श्रुतेर्वाधायामर्द्धनास्तिकत्वापत्तेः तत्र प्रलयश्रुतेः प्रवलत्वात् तदनुसारेण सर्वास्वपिसृष्टिविषयिकासु श्रुतिषु गुणोपसंहारन्यायेन सृष्टिक्रमोपन्यासः कर्त्तव्यः तथात्वेतु न कश्चिद्विरोधलेशावकाशः तथैवाम्नायते

सुबालोपनिषदि लयक्रमः "पृथिव्यप्सु प्रलीयते आपस्तेजसि प्रलीयन्ते तेजो वायौ प्रलीयते वायुराकाशे प्रलीयते आकाश इन्द्रियेषु इन्द्रियाणि तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षर अक्षरं तमसि तमः परे देवे एकीभवती"त्यादिना व्याख्याता चेयं श्रुतिर्वैष्णवे श्रीपराशरेण "जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते" इत्युक्त्वा "प्रकृतिर्या मया ऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि परमात्मा च सर्वेषामाधारः परमेश्वरः विष्णुनामा स देवेषु वेदान्तेषु च गीयते" इत्यादिनेति, सङ्क्षेपः "संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्" छान्दोग्ये सत्प्रकरणे "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मना ऽनुप्रविश्य नामरूपे व्याकरवाणी"ति तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"तिनामरूपव्याकरणमाम्नातं तत्र संशयः एतन्नामरूपव्याकरणव्यापाराश्रयो जीवः परमात्मा वेति किं तावत्प्राप्तं जीव एवेति

कुतः अनेन जीवेनात्मने”तिविशेषोक्तेः यथा चारेणाहं परसैन्यमनुप्रविश्य सङ्कलयानीति प्रयोगे चारकर्त्तृकमेव परसैन्यप्रवेशकलनं हेतुकर्त्तृत्वेन राज्ञि उपचर्यते उत्तमपुरुषप्रयोगेणैव तथा जीवकर्त्तृकमेव तन्नामरूपव्याकरणं हेतुकर्त्तृत्वेन परमात्मन्युपचर्यते उत्तमपुरुषप्रयोगेणेति अत्र राद्धान्तः “संज्ञामूर्त्तिक्लृप्ति”रिति संज्ञाच मूर्त्तिश्च संज्ञामूर्त्ती तयोः क्लृप्तिः समर्थनं व्याकरणं साच त्रिवृत्कुर्वतः त्रिवृतिकर्त्तुः परमेश्वरस्यैव कर्म न जीवस्य कुतः उपदेशात् सेयं देवतैक्षतेत्यादिना व्याकरवाणीत्युत्तमपुरुषप्रयोगेण परस्यैव व्याकर्त्तृत्वोपदेशात् व्याकरणप्रवेशयोः समानकर्त्तृकत्वोपपत्तेश्चेति सूत्रार्थः ननु अनेन जीवेनात्मनेति विशेषश्रवणाज्जीवस्यैव कर्त्तृत्वं युक्तमिति चेन्न नामरूपव्याकरणात्प्राक् कर्त्तृत्वे जीवस्य सामर्थ्याभावात् अन्यथा प्रलये ऽपि तस्य कर्त्तृत्वसामर्थ्ययोगे प्रलयाभावप्रसङ्गात् एतेन समष्टिजीवाभिमानिचतुर्मुखस्यैव नामरूपव्याकरणं कर्मेति पक्षो ऽपि निरस्तः तस्यापि त्रिवृत्कृतनिर्मितब्रह्माण्डजन्मानन्तरोत्पत्तिकत्वात् “तस्मिन्नेवाभवद्ब्रह्मा सर्व-

लोकपितामह" इतिस्मरणात् किञ्च त्रिवृत्करण-
पूर्वकमेवेदं नामरूपव्याकरणमित्यवगम्यते प्रत्येकं
नामरूपव्याकरणस्य तेजोऽबन्नोत्पत्तिवचनेनैव निर्ण-
यात् नामरूपव्याकरणं विना तेजोऽबन्नमित्यादि-
नाम्ना निर्देष्टुमशक्यत्वात् तेजइत्यादिनामाद्यभावे
केन निर्दिशेत् यथा नामरूपव्याकरणात्प्राक् देव-
दत्तस्य पुत्रा इति सामान्यनिर्देशे सत्यपि देवदत्तस्य
त्रयः पुत्रा यज्ञदत्तो ऽग्निदत्तो ब्रह्मदत्तश्चेति निर्देशा-
सम्भवःनामादिव्याकरणोत्तरं तु सम्भवत्येव तथा
नामरूपव्याकरणात् प्राक् परमेश्वरसृज्यमिदं
जगदिति सामान्येन निर्देष्टुं शक्येऽपि तेजोऽबन्न-
मिति नामादिविशेषविभागेन वक्तुमशक्यत्वात्
व्याकरणेतु सम्भवतीतिभावः तच्च त्रिवृत्करणं
अग्न्यादित्यचन्द्रविद्युत्सु श्रुत्या दर्शितं "यदग्ने
रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं
तदन्नस्ये" त्यादिना तत्राग्निरिति रूपव्याकरणं
रूपप्रागभावे नामकरणासम्भवात् रूपाभावे तद-
नुपलब्धिप्रसङ्गात् रूपव्याकरणमेव विषयोपलब्धेर-
साधारणहेतुरित्यर्थः तथैवाग्निरिति वर्णसमुदाय-
रूपं नामव्याकरणमेवमादित्यादिष्वपि विवेचनीयं

एतेनैव पार्थिवाप्यतैजसेष्वपि पदार्थेषु त्रिवृत्करणं सूपपन्नम् उपक्रमोपसंहारसाधारण्यात्तत्रे"मास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवती"तिउपक्रमसामान्यात् यद्रोहितमिवाभूदिति तैजसरूपमित्युपसंहारसाम्याच्चेति संक्षेपः यच्चोक्तं चारेण परसैन्यं प्रविश्येत्यादि तत्तुच्छं दृष्टान्तवैषम्यात् राजचारयोरत्यन्तभेदेन पृथक्सिद्धत्वात् प्रकृते जीवस्य ब्रह्मात्मकत्वेन तदपृथक्सिद्धत्वात् ब्रह्माण्डान्तर्वर्त्तिनो जीवस्य तद्बहिर्भूतपदार्थानां नामरूपव्याकरणासम्भवात् चतुर्मुखादेः स्वसृज्यानां नामादिव्याकरणे शक्तिमत्त्वे ऽपि स्वस्य स्वप्राक्वस्तूनां च नामादिव्याकर्त्तृत्वेन शक्तिरिति ध्वन्यर्थः किञ्च जीवबुद्ध्यगोचररचनस्य जगतो नामादिव्याकृतौ परमेश्वरस्यैव समर्थत्वान्नान्यस्य "आकाशो ह वै नामरूपयोर्निर्वहिते"त्यादिनोपनिषत्सु तस्यैव तथात्वश्रवणात् श्रुत्यर्थस्तु इमाः साकल्येन करनिहितफलवत् परमेश्वरस्य श्रुत्यर्थाभिमानिदेवविशेषस्य प्रत्यक्षगोचरास्तेजोऽवन्नसंज्ञकास्तिस्रो देवताः अनेन जीवेन स्वात्मकसमष्टिजीवावच्छिन्नेन जीवनहेतुनाऽन्तरात्मना ऽनुप्रविश्य नामरूपे

व्याकरवाणी"ति देवतिर्यङ्मनुष्यादिविचित्रासङ्ख्येयस्वेतरगोचरव्यक्त्यात्मना विभज्य तत्तन्नामादिना संयोजयामीति एतत्सङ्कल्पविषयसंसिद्धये तासामन्योऽन्यासंसृष्टानां तत्तत्कार्यासमर्थानां संसर्गलक्षणसामर्थ्यं विधाय एकैकां त्रिवृतमकरोदिति यावत् ननु एवमनेन जीवेनात्मनेति सामानाधिकरणयस्य मुख्यताभङ्ग इतिचेन्न तत्त्वमस्यादिवाक्यव्याख्यानोक्तन्यायेन सामञ्जस्यात् अत्र येतु जीवब्रह्मणोरत्यन्ताभेदमभ्युपगच्छन्ति ते प्रष्टव्याः सृष्टेः प्राक् प्रलयसमये ऽनभिव्यक्तनामरूपकस्य जीवस्य जीवात्मना सद्भावो नवेति नाद्यः अद्वैतभङ्गात् ब्रह्मण एव जीवभावापत्त्या प्रवेश इतिसिद्धान्तभङ्गात् सजातीयविजातीयस्वगतभेदशून्यं निर्विशेषं ब्रह्म आसीदिति सदेव सोम्येति श्रुत्यर्थ इतिउपक्रमवाक्यार्थसिद्धान्तभङ्गाच्च नद्वितीयः जीवस्याजत्वानादित्वभङ्गाच्च तद्बोधकशास्त्रव्याकोपाच्च कृतनाशाकृताभ्यागमप्रसङ्गाच्च किञ्च सदेवतिवाक्यस्योक्तलक्षणनिर्विशेषपरत्वाङ्गीकारे "तदैक्षत वहु स्यां प्रजायेये"त्यादिश्रुतिप्रतिपादिततदीक्षणबहुभवनसङ्कल्पाश्रयस्य तत्पूर्वकसृष्टिकर्तुरभावेन

सृष्ट्यभावप्रसङ्गात् वाक्यस्य निर्विषयत्वापत्त्या वाधप्रसङ्गो नालोच्यते वैदिकाभिमानिभिर्देवानां-प्रियैः यच्च कैश्चित् अनेन जीवेनेत्येतदनुप्रविश्ये-त्यनेन सम्बध्यते आनन्तर्यान्न व्याकरवाणी-त्यनेनेति श्रुत्यक्षराणि योजितानि तदप्यपेशलं तदानीन्तनमते जीवस्याभावात् अन्यथा द्वैत-सिद्धान्तभङ्गात् किञ्च क्त्वाप्रत्ययेन समानकर्तृक-प्रतीतिवाधप्रसङ्गात् यत्तु चारेण परसैन्यं प्रविश्ये-त्यादि व्याख्यानं तन्महत् क्षुद्रं दृष्टान्तवैषम्योक्त्या पूर्वमेव निरस्तत्वात् अत्यन्तभेदपरत्वे ब्रह्मणो जगदुपादानत्वाभावप्रसङ्गात् तथात्वेच अवैदिक-तार्किकादिपक्षप्रवेशाच्च अन्यैस्तु अनेन जीवेने-त्यस्य जीवविशिष्टेनेति व्याख्यानमुक्तं तदप्यपे-शलं विशिष्टवादस्य पूर्वमेव निरस्तत्वादित्यलं विस्तरेण अथ त्रिवृत्कृतानां तेजोऽवन्नानां कार्य-विभागमाह "मांसादिभौमं यथाशब्दमितरयोश्च" भूमेस्त्रिवृत्कृतायाः पुरुषेण भुज्यमानाया इदं भौमं मांसादिकार्यं यथाशब्दं श्रुतिरूपशब्द-निरूप्यमवगन्तव्यम् "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो

मध्यमस्तन्मांसं यो अणिष्ठस्तन्मन एवे" तिश्रुतेः एवमितरयोः अप्तेजसोश्च कार्यमपि वोध्यं मूत्रं लोहितं प्राणश्चेत्यपां कार्यम् अस्थिमज्जावाक् तेजसः कार्यमित्यर्थः ननु सर्वं भूतभौतिकवस्तुमात्रं त्रिवृत्कृतमेव चेत्तर्हीदं भूमेः कार्यमिदमपामिदं तेजस इतिभेदनिर्देशासम्भवप्रसङ्गो दुर्वारः सर्वेषां सर्वत्र सत्त्वादित्याशङ्कां परिहरन्नाह "वैशेष्यात्तु तद्वाद स्तद्वादः" तुशब्दः शङ्कानिरासार्थकः विशेषस्य भावो वैशेष्यं भागभूयस्त्वमिति यावत् तस्य पृथिव्यादौ दर्शनात्तद्वादः सतेजोऽवन्नविशेषवादो भौतिकवस्तु विशेषवादश्च सूपपन्न इत्यर्थः ॥ अप्रतर्क्याय हरये रमाकान्ताय विष्णवे श्रीकृष्णाय नमस्ते ऽस्तु निर्दोषगुणशालिने ॥

इति श्रीमाधवमुकुन्दचरणेन विरचिते
परपक्षगिरिवज्राख्ये शारीरक-
हार्दसञ्चये ऽविरोधाख्यो
द्वितीयोऽध्यायः ॥ २ ॥



हरिः ॐ ।

श्रीमतेनियमानन्दायनमः ।

# परपक्षगिरिवज्रः ।



## तृतीयोऽध्यायः ।



इत्थं द्वितीये श्रुतिविरुद्धस्मृतीनां तर्काणां च भ्रममूलत्वं प्रदर्शयित्वा श्रुतीनामितरेतरविरोधाभासं निराकृत्य समन्वयाविरोधो निर्णीतः अथेदानीमस्मिंस्तृतीयाध्याये साधनानि निरूप्यन्ते श्रीभगवता सूत्रकारेण तानि च पूर्वाचार्यैर्विस्तरेणभाषितान्यत्र मुमुक्षुजनोपकारार्थं सङ्गृह्यन्ते तत्रेयं तावच्छ्रेयः साधनप्रक्रिया आदौ जन्मसमये पुंसि भगवतः श्रीमुकुन्दस्य कृपाकटाक्षो मुमुक्षोत्पादनासाधारणहेतुभूतः तथोक्तं नारायणीयाख्याने "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः सात्विकः सतु" विज्ञेयः स वै मोक्षार्थचिन्तकः

इति ततः सात्त्विकं मुमुक्षार्हजन्म मुमुक्षायां सत्यां तत्साधने स्वाधिकारानुरूपं प्रयतते तत्रादौ यथाधिकारं भगवदर्पितनिष्कामकर्मयोगात्ततो भगवदीयानुग्रहसहकृतेन संस्कृतमनस्कस्य मुमुक्षोर्वैराग्यादिपूर्वकजिज्ञासया श्रवणादिलक्षणया तत्स्वरूपादिविषयकं परोक्षज्ञानं ततो ध्यानपरिपाकजन्या परा भक्तिपर्यायरूपा ध्रुवा स्मृतिस्तया च तदनुग्रहेण तत्साक्षात्कारस्ततो मोक्ष इति "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दती"त्युपक्रम्य "बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहं विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति समः सर्वेषु भूतेषु मद्भक्तिं लभते परां भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर"मितिश्रीमुखनिर्णयात् तत्र कर्मयोगस्त्रिविधः नित्यनैमित्तिककाम्यभेदात् तत्र "अहरहः सन्ध्या-

मुपासीत ॥ यावज्जीवमग्निहोत्रं जुहोती"त्यादि-श्रुत्या नित्यतया विधीयमानं नित्यं तच्च सन्ध्योपासनाग्निहोत्रतर्पणादियज्ञाध्ययनादिरूपं च तत्र यज्ञदानाध्ययनानि त्रैवर्णिकद्विजातिसाधारणानि । याजनादानानि द्विजाद्यासाधारणानि तथाचाह मनुः "अध्ययनमध्यापनं यजनं याजनं तथा दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् प्रजानां रक्षणं दानमिज्याध्ययनमेव च विषयेष्वप्रसक्तिं च क्षत्रियाणां समादिशत् पशूनां रक्षणं दानमिज्याऽध्ययनमेवच वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव चे"ति तत्र यज्ञादयो नित्याः याजनादयस्तु निष्कामधिया नित्याः सकामतायोगेच वृत्तयः तत्रापि याजनाध्यापनयोर्देहमात्रतयैव स्वार्थत्वं अन्यथात्वे स्वरूपहानिः प्रतिग्रहे प्रवेशश्च पृथग्विधानाऽन्यथानुपपत्तेरेवात्र मानत्वात् इतरथा पृथग्विधानवैयर्थ्यात् शूद्रस्य त्वेकजातित्वान्नोक्तधर्माधिकारः "शूद्रश्चतुर्थो वर्ण एकजाति" रिति गौतमोक्तेः "एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् एतेषामेव वर्णानां शुश्रूषामनसूयये"तिमनूक्तेः अथाश्रमधर्माः त्रयो धर्मस्कन्धा यज्ञो ऽध्ययनं दानमिति प्रथमस्तप एव-

द्वितीयो ब्रह्मचर्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति सर्व एते पुण्यलोका भवन्ति "ब्रह्मसंस्थोऽमृतत्वमेती"त्यादिश्रुतेः अध्ययनं सेवाच ब्रह्मचार्यसाधारणां यज्ञो दानं च गृहिणः ॥ तपो वानप्रस्थस्य अनाशकं च हितमितभोजनं परिव्राजकस्येति "तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"तिश्रुतेः तत्र चतुर्थाश्रमे ब्राह्मणस्यैवाधिकारः "ब्राह्मणः परिव्रजेत् ब्राह्मणो व्युत्थाय ब्राह्मणो निर्वेदमाया"दित्यादिना ब्राह्मणस्य कराठरवेण पठनात् केचित्तु "यदि चेतरथा ब्रह्मचर्यादेव परिव्रजेत् गृहाद्वा वनाद्वे"ति सामान्यश्रुतेः "ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेद्गृहात् त्रयाणामपि वेदमधीत्य चत्वार आश्रमा" इतिस्मृतेश्च त्रयाणां वर्णानां न्यासेऽप्यधिकारः नच पूर्वोक्तश्रुतेर्विरोधं इतिवाच्यं तत्र ब्राह्मणस्येतीतरयोरुपलक्षणार्थत्वादविरोध इत्याहुस्तन्न श्रुतिषु सन्न्यासप्रकरणे क्षत्रियादेरनाम्नातत्वात् नच सामान्यश्रुतौ त्रयाणां ग्रहे न कोऽपि दोषो निषेधाश्रवणात् तदर्थभूतायां स्मृतौ त्रयाणामपि

कण्ठरवेण पाठात्तदुपबृंहणादुक्तार्थसिद्धेरिति वाच्यं सामान्यवाक्यस्य विशेषवाक्येन सङ्कोचात् विशेष-श्रुतिविरुद्धायाः स्मृतेरप्रामाण्येन तद्रूपबृंहणात्वा-योगात् तस्मात् सन्न्यासाश्रमे ब्राह्मणस्यैवाधि-कार उदाहृतजावालश्रुतौ सन्न्यासाधिकारब्राह्मण-शब्दाप्रयोगे ऽपि वहुवाक्यविरोधे तस्या अपि गतिसामान्यादित्यर्थः इतराश्रमेषु क्षत्रियवैश्य-योरप्यधिकारः फलकर्त्तृत्वाद्यभिमानशून्यैर्मुमुक्षु-भिरनुष्ठितानां तेषां मनःशुद्धिपरम्परया ज्ञान-भक्तिजनकत्वेन मोक्षसाधकत्वं विविदिषाश्रुतेः फलसङ्कल्पयोगे तु काम्यकोटौ प्रवेश इति विवेकः किञ्च शमदमदयाक्षमाहिंसातीर्थसेवनोपवास-फलाहारदेहशोषणान्नदानादीनि सर्ववर्णादिसाधा-रणानि तथाच विष्णुस्मृतौ "क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया आर्जवं लोभशून्यत्वं देव-ब्राह्मणपूजनं अनभ्यसूया च तथा धर्मः सामान्य उच्यते" इति भारतेच "सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमार्जवं ज्ञानं शमो दया ध्यानमेष धर्मः सनातन" इति पुनस्तत्रैव अनृशंसमहिंसा

वादः स्या"दितिसूत्रेण तत्र द्रव्ये फलश्रुतिः "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती"-त्याद्या संस्कारे फलश्रुतिः "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्याद्या कर्मणि फलश्रुतिश्च "वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते"-इत्याद्येति यथाऽन्ये द्रव्यादिषु पर्णमयीद्रव्ययजमानस्याञ्जनादिसंस्कारप्रयाजादिरूपेषु अपापश्लोकश्रवणादिश्रुतिरर्थवादस्तथाऽत्रापि पुरुषार्थश्रुतिरर्थवाद इत्यर्थः ब्रह्मज्ञानं कर्माङ्गं फलशून्यत्वे सति कर्माङ्गाश्रयत्वात् पर्णतादिवदित्यनुमानात् नच कर्मण्यात्मज्ञानस्याप्रयोजकत्वमिति वाच्यम् आत्मनो देहादिव्यतिरेकज्ञानमन्तरेण परलोकगामित्वानिश्चयात् ज्योतिष्टोमादौ प्रवृत्तिरेव न स्यात्तस्मात्क्रतुप्रवृत्त्यर्थमात्मज्ञानस्योपकारकत्वात् । कर्माङ्गत्वसिद्धिरित्यर्थः ननु कर्त्तुरात्मनोऽन्यो मुमुक्षुवेद्यो मुक्तोपसृप्यो वेदान्तैरुपदिश्यते इति वाच्यं वेदान्तेष्वेव ब्रह्मज्ञानस्य कर्मप्राधान्यं सूचयद्भिस्तदुपबृंहितसामानाधिकरण्यनिर्देशेन वेदान्ता एव देहातिरिक्तप्रत्यक्स्वरूपयाथात्म्यवेदनपरा इत्यवश्याङ्गीकर्त्तव्यः किञ्च "जनको ह वैदेहो बहु-

दक्षिणेन यज्ञेन यक्ष्यमाणो ह वै भगवन्तो ऽहम-
स्मी"त्यादिश्रुतिभ्यो जनककैकेयादीनां ब्रह्मविद्या-
वतां कर्माचारदर्शनात् किञ्च लिङ्गान्यप्यत्र प्रमा-
णानि "यदेव विद्यया करोति तदेव वीर्यवत्तरं
भवती"ति"तं विद्याकर्मणी समन्वारभेते" इति-
विद्याकर्मणोः समुच्चयश्रवणाच्च "आचार्यकुला-
द्वेदमधीत्य तथा विधानं गुरोः कर्मातिशेषेणाभि-
समावृत्य कुटुम्बी शुचौ देश" इत्यादौ वेदज्ञान-
वतो ऽपि कर्मसु विनियोगदर्शनात् "कुर्वन्नेवेह
कर्माणि जिजीविषेच्छतं समाः ॥ यावज्जीवमग्नि-
होत्रञ्जुहोती" त्यादिश्रुतेः आत्मवित्समाननिर्देश-
श्चेति चेन्न क्रतुकर्त्रात्मनः सकाशादत्यन्तविलक्षण-
स्यातिशयसाम्यशून्यस्य हेयगन्धास्पृष्टमाहात्म्यान-
न्ताचिन्त्यापरिमितसद्गुणार्णवस्य श्रीपुरुषोत्तमस्य
वैदान्तैः प्रतिपाद्यमानत्वात् "अधिकोपदेशात्तु-
बादरायणस्यैवं तद्दर्शना"दितिसूत्रकारसिद्धान्तात्
"एष सर्वेश्वरः एष भूतपाल एष भूताधिपतिः
सकारणं कारणाधिपाधिपो नचास्य कश्चिज्जनिता
नचाधिपः ॥ एतस्य वा अक्षरस्य प्रशासने गार्गि ॥
भीषा ऽस्माद्वातः ॥ यः सर्वज्ञः ॥ सत्यकामः सत्य-

सङ्कल्प" इत्यादिश्रुतिभ्यः "अहं सर्वस्य प्रभवः ॥ मत्तः परतरं नान्यत् तपाम्यहमहं वर्षं ॥ पिताऽहमस्य जगत"इत्यादिस्मृतेश्च एतैः सार्वज्ञ्यादिभिः स्वाभाविकाचिन्त्यानन्तकल्याणरूपधर्मैः श्रीपुरुषोत्तमस्याखिलाविद्याद्यस्पृष्टमाहात्म्यसीम्नः परब्रह्मभूतस्य प्रतिपाद्यमानत्वे सिद्धे तादृशधर्माणां कथमपि हेयसम्बन्धार्हे प्रत्यगात्मनि जीवेऽसम्भाव्यत्वात्तथाभूतस्य वेदान्तवेद्यपरब्रह्मज्ञानस्य कर्मण्यनुपयोगात् प्रकरणाद्यभावाच्च कर्माङ्गत्वं कल्पयितुमशक्यं "फलवत्सन्निधावफलं तदङ्ग"मितिन्यायात् परमात्मज्ञानस्य तु स्वप्रकरणगतेनैव "तन्महिमानमिति वीतशोक"इत्यादिश्रुतिप्रतिपादितेनैव फलेन नैराकाङ्क्ष्यान्नान्यशेषत्वं तत्र पठितन्यायासमन्वयादित्यर्थः नच तत्त्वमस्यादिना तस्यैव तत्ताविधानादस्मदर्थसिद्धिरिति वाच्यं तस्य तदात्मकत्वादिभिस्तदपृथक्सिद्धत्वादेकत्वोक्तिरविरुद्धा न स्वरूपतोऽभेद इतिपूर्वमेव प्रतिपादितत्वात् अखिलवेदान्तस्याशेषदोषास्पृष्टमाहात्म्ये ज्ञानैश्वर्यकारुण्यवात्सल्यगुणार्णवे ब्रह्मणि श्रीभगवति समन्वयेन ब्रह्मविद्यायां क्लेशकर्माद्यशेषहेयधर्मा-

अयस्य क्षेत्रज्ञस्य प्रत्यगात्मनो गन्धो ऽपि नास्ति तस्मात्तद्भावापत्तिरूपनिःश्रेय एकप्रयोजनमेवोपनिषद्ज्ञानमिति नाप्युक्तलिङ्गानां तत्र प्रामाण्यं तेषामन्यपरत्वेनोक्तार्थासाधकत्वात् तथाहि न तावद्विद्यावतां कर्मानुष्ठानस्य विद्यायाः कर्माङ्गत्वे लिङ्गत्वमनैकान्तिकत्वात् "किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध पूर्वे विद्वांसो ऽग्निहोत्रं न जुहवाञ्चक्रिरे" इत्यादिना तद्विपरीतश्रवणात् नापि "यदेव विद्यये"तिश्रुतिस्तत्परेति शङ्क्यं तस्याः प्रकृतोद्गीथविद्यामात्रपरत्वात् यदेवेत्यत्र यच्छब्दस्यानिश्चितविशेषस्यो "द्गीथमुपासीते"ति प्रस्तुतोद्गीथविशेषनिष्ठत्वात् नहि यत्करोति तद्विद्ययेत्यन्वय इतिभावः नाऽपि तं विद्याकर्मणी इतिश्रुतेस्तत्परत्वं सम्भाव्यं विभक्ताधिकारिकत्वात् शतवत् यथा शतमाभ्यां दीयते पञ्चाशदेकस्मै पञ्चाशदन्यस्मै तथा विद्या ऽन्यस्मै कर्म चान्यस्मै इत्यर्थः यद्वा विभक्तफलकत्वात् विद्यास्वफलार्थासमारभ्या कर्म च स्वफलार्थमारभ्यमितियावत् नाप्याचार्यकुलादित्यादिश्रुतिरुक्तार्थपरा वेदाध्यपनमात्रवतः पुंसस्तद्विषयत्वात् ननु परविद्या-

वतः अध्ययनशब्दस्याक्षरराशिग्रहणमात्रेणैव नैराकाङ्क्ष्यात् नापि यावज्जीवश्रुतिरुक्तार्थपरा तथा च विद्यायाः कर्माङ्गत्वं निर्णेतुं शक्यं विशेषाभावात् तस्या अङ्गाविद्वत्सामान्येन नियतविद्वद्विषयकत्वायोगादित्यर्थः ननु सामान्यविषयकत्वे ऽपि विदुषो ऽपि तदन्तःपातित्वेन तन्नियमस्य तादवस्थ्यादिति चेन्न ब्रह्मविद्यास्तुतये कर्मणामनुज्ञामात्रत्वात् यावज्जीवति ब्रह्मविद्यावति पुंसि कर्म कुर्वत्यपि विद्यासामर्थ्यात्कर्मलेपो नास्तीति तस्याः श्रुतेर्विद्यासामर्थ्यद्योतनार्थकत्वादित्यर्थः "यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवं विदि पापं कर्म न श्लिष्यते" इत्यादिश्रुतेः "सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः तत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् इति मां यो ऽभिजानाति कर्मभिर्न स लिप्यते ॥ ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः लिप्यते न स पापेन पद्मपत्रमिवाम्भसे"ति स्मृतेश्च "अथ किं प्रजया करिष्यामो येषा"मित्यादिना विदुषां कर्मत्यागस्यापि श्रवणात् विद्याया यदि कर्माङ्गत्वमभ्युपगतं स्यात्तर्हि तद्विरोधाद्गार्हस्थ्यत्यागविधानानु-

पपत्तेः संसारवीजस्य कर्मणो विद्योपमर्दकत्व-श्रवणाच्च न विद्याकर्माङ्गं "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर" इतिश्रुतेः "ज्ञानाग्निदग्ध-कर्माणं॥ ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते" इतिस्मृतेश्च ननु तथापि प्रत्यगात्मज्ञानं विना ऽदृष्टस्वर्गादिफलके यागादिकर्मणि प्रवृत्तेरेवासम्भ-वादन्यथा कर्मश्रुतेर्बाधस्तवापि वैदिकत्वादनिष्ट एव तस्माद् ज्ञानस्य कर्माङ्गत्वमवश्यमभ्युपेय-मिति चेन्मैवम् आपातोक्तेः तथाहि ज्ञानं तावद् द्विविधं देहादिव्यतिरिक्तप्रत्यगात्मत्वं पदार्थविष-यकं प्रत्यगात्मब्रह्मतादात्म्यविषयकं चेति तत्रा-द्यस्य देहात्मविवेकज्ञानस्य कर्माङ्गत्वेऽपि ततो ऽत्यन्तविलक्षणाद्वितीयज्ञानस्य न कथमपि परा-ङ्गत्वमिति राद्धान्तः "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुः अक्षरात्परतः पर" इत्यादिविवेचकश्रुतेः "यस्मात् क्षरमतीतोऽहमक्ष-रादपि चोत्तमः अतो ऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इतिस्मृतेः "अधिकं तु भेदनिर्देशात् सर्वोपेता च"त्यादिन्यायाच्च मोक्षफलकं स्वतन्त्र-मेव सर्वात्मपरमात्मज्ञानं परमात्मनश्च तत्फल-

दातृत्वमिति सिद्धं ननु स्यादेतत्परमेश्वरस्य कर्म-
फलदातृत्वं यदि कर्मनिरपेक्षं स्यान्नतु तदस्ति
तस्य कर्मसापेक्षत्वं त्वया ऽभ्यभ्युपगतं अन्यथा
वैषम्यादिप्रसङ्गात् तत्कर्मानुसारिफलदातुरीश्वर-
स्याभ्युपगमे गौरवमात्रत्वात् अन्वयव्यतिरेकाभ्यां
कर्मण एवैकान्तफलहेतुत्वदर्शनात् कर्माभावे
केवलेश्वरस्य फलदातृत्वाभावाच्चाप्रयोजक एवेश्वरो
दृश्यते च लोके कृष्यादिकर्मणः फलहेतुत्वं तथा
वैदिके ऽपि यागादौ तस्यैव स्वातन्त्र्यमनुमेयं यागा-
दिकं वैदिकानुष्ठानफलदानार्हं कर्मत्वात्कृष्यादि-
वदित्यनुमानात् नचाशुविनाशित्वात्तस्य कथं फल-
दातृत्वमिति वाच्यं तस्य विनाशित्वे ऽपि तज्जन्या-
दृष्टलक्षणसंस्कारस्य यावत्फलावाप्तिस्थैर्याभ्युप-
गमात् किञ्च "स्वर्गकामो यजेते" त्यादिविधि-
वाक्यमपि स्वर्गादिफलसिद्धये कर्मण एव विधान-
परन्नत्वीश्वरस्येति "धर्मं जैमिनिरत एवेति" सूत्रा-
च्चेतिचेन्न कर्मणो जड़त्वेनाकिञ्चित्करत्वादिति पूर्व-
मेवोक्तं किञ्च तज्जन्यापूर्वस्यापि जड़त्वाविशेषात्
नाप्युक्तानुमानमत्र प्रमाणम् आभासमात्रत्वात्
वृष्ट्याद्यभावेनोपलादिपातेन वा फलव्यभिचार-

दर्शनात् नापि यजेदित्यादिशास्त्रस्य कर्ममात्रविधायकत्वम् अपितु परदेवताराधनपरत्वमेव तथाच यजदेवपूजायामिति धात्वर्थादेव कर्मणः पराङ्गत्वोपलब्धेः "वायव्यं श्वेतमालभेत भूतिकामो ॥ वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती"त्यादिषु कामिनः पुंसः सिसाधयिषितफलसाधनत्वप्रकारोपदेशो ऽपि विध्यपेक्षितः न तत्प्रकारकत्वशङ्कायुक्ता एवमपेक्षिते ऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागमश्रुतापूर्वकल्पनं च न विदुषां सन्मानार्हम् अन्याय्यत्वात् श्रुतिविरुद्धत्वाच्च ननु तर्हि देवा एव पुण्यकर्माणः क्षेत्रज्ञविशेषाः कर्मफलदातारः सन्तु तेषामपि कर्मणा एव परम्परया हेतुत्वसिद्धेस्तेषां जीवजीवत्वसामान्ये ऽपि पुण्यकर्मवाहुल्यजन्यशक्त्यैव कर्मफलदातृत्वयोग्यत्वादिति चेन्न तेषां कर्मवश्यानां पारतन्त्र्याविशेषेण तादृक्शक्त्यसम्भवात्तदन्तर्यामिपरमपुरुष एव फलदो नान्य इत्यवगम्यते "इष्टापूर्त्तं वहुधा जायमानं विश्वं विभर्त्ति भुवनस्य नाभिः ॥ तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा"इत्यादिश्रुत्या तदा-

त्मकत्वेन सामानाधिकरण्योक्तेः "यो यो यां यां तनुं भक्तः श्रद्धया ऽर्चितुमिच्छति तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् स तया श्रद्धया युक्तस्तस्याराधनमीहते लभते च ततः कामान्मयैव विहितान् हितानि"त्यादिश्रीमुखगानाच्च "फलमत उपपत्तेश्चे"तिसूत्राच्चेति संक्षेपः ॥

इति कर्मस्वातन्त्र्यतत्समुच्चय-
गिरिनिपातः ॥ १ ॥

अथ वर्णाश्रमादिहीनानां धर्मास्तु पूर्वोक्ताः शमदमजपतपस्तीर्थयात्रादयः इयांस्तु विशेषः आश्रमादिहीना द्विविधाः आपद्वशाद्भ्रष्टाश्रमा अशक्ता विधुरादय एके असत्सङ्गात्पापवश्यावुद्धिपूर्वकस्वधर्मत्यागिनश्चान्ये तत्र पूर्वेषां तपोब्रह्मचर्यादिना ऽऽराधितो भगवाननुगृह्णाति "तपसा ब्रह्मचर्येण श्रद्धया ऽऽत्मानमन्विष्यादि"तिश्रुतेः "जप्येनैव हि संसिद्ध्येद्ब्राह्मणो नात्र संशयः कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" इतिस्मृतेश्च द्वितीयकोट्या द्विविधाः कुसङ्गादिना ऽऽश्रमादिविभ्रष्टा अपि शास्त्रश्रवणादिना भगवन्निर्हेतुकानुग्रहप्रबोधितपूर्वसुकृतसंस्काराः स्वदेशमाकल्प्य

स्वाधिकारानुरूपश्रेयउपायानन्विष्यमाणा एके तेषामनन्यभावेन भजनीयो भगवाञ्छ्रीकृष्ण एव अन्यत्रानधिकारात् तच्च स्वयमेव गीतं परमौदार्य-क्षमाकारुण्यादिगुणगणवशेन भगवता "अपि-चेत्सुदुराचारो भजते मामनन्यभाक् साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति कौन्तेय प्रति-जानीहि न मे भक्तः प्रणश्यति" इति अस्य व्याख्या श्रीवेदान्तरत्नमञ्जूषायां द्रष्टव्या अथ दुःकृतबाहुल्याद्धर्मभ्रष्टा अपि स्वदोषं गुणत्वेन बहु मन्यमाना मूर्खाः पण्डितमानिनश्चान्ये ते मनीषि-भिरुपेक्षणीयाः शास्त्रोक्तानधिकारित्वात् "नावि-रतो दुश्चरितान्नाशान्तो नासमाहितः नाशान्त-मानसो वापि प्रज्ञानेनैनमाप्नुया"दित्यादिश्रुतेः अग्रे वक्ष्यमाणमपि प्रसङ्गादुक्तं न विरुद्धम् इति कर्मयोगनिर्णयः ॥

अथोक्तलक्षणकर्मानुष्ठानव्याजप्रीणितपरमे-श्वरैः परिपक्वमनःकषायकैः शास्त्राधिकारिमुमु-क्षुभिः शास्त्रोक्तलक्षणसम्पन्नाचार्यसमाश्रितैर्यथा-श्रुताभ्यस्यमानं श्रवणमननादिजन्यं परब्रह्म-

स्वरूपगुणादिविषयकं चेतनाचेतनजगद्ब्रह्मात्मकत्वविषयकं ज्ञानं तत्प्रसादैकहेतुकसाक्षात्कारद्वारेण मोक्षासाधारणसाधनं "तमेव विदित्वा ऽतिमृत्युमेति नान्यः पन्था विद्यते ऽयनाय ॥ यमेवैष वृणुते तेन लभ्यः ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ यदा पश्यः पश्यते रुक्मवर्ण"मित्यारभ्य "निरञ्जनः परमं साम्यमुपैती"त्यादिश्रुतिभ्यः उक्तलक्षणज्ञानार्थं श्रवणादयो विधीयन्ते "आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यः भूमा त्वेव विजिज्ञासितव्य"इत्यादिश्रुतिभ्यः विधित्वं नाम प्रयोजनवदर्थविधानेनार्थवत्त्वं यथा "ऽग्निहोत्रं जुहुयात्स्वर्गकाम"इत्यत्र प्रयोजनवद्धोमरूपमर्थं विधत्ते सच द्विविधः अभिधानाभिधेयभेदात् तत्राभिधानविधिश्चतुर्विधः उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्च तत्रकर्मस्वरूपबोधको विधिराद्यः यथा "ऽग्निहोत्रं जुहोति सोमेन यजेते"त्यादिश्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामन्यतमसहायेनाङ्गताबोधको विधिर्द्वितीयः यथा "दध्ना जुहोति ॥ पशुना यजेते"त्यादि अङ्गत्वं च परोद्देशप्रवृत्तकृतिव्याप्यत्वं परार्थत्वं वा तत्र निरपेक्षो

रवः श्रुतिः शब्दस्य स्वार्थप्रकाशनसामर्थ्यं लिङ्गं समभिव्याहारो वाक्यं पदयोग्येतरपदाकाङ्क्षा वा अङ्गवाक्यसापेक्षं प्रधानवाक्यं प्रकरणम् उभयाकाङ्क्षारूपं वा देशसामान्यं स्थानं क्रमपठितानामर्थानां क्रमपठितैर्यथाक्रमसम्बन्धो वा स्थानं यथेन्द्राग्न्यादय इष्टयो दश क्रमेण पठिता दशमन्त्राश्चेन्द्राग्नीरोचनादिव इत्याद्यास्तत्र प्रथमेऽष्टौ प्रथममन्त्रस्य विनियोग इत्यादि संज्ञासाम्यं समाख्या यौगिकः शब्दः समाख्येति वा आधुर्यवसंज्ञकानां मन्त्राणामाध्वर्यवसंज्ञके कर्मणि विनियोग इति सङ्क्षेपः उत्पन्नस्य कर्मणः फलसम्बन्धबोधको विधिरधिकारविधिः यथा "ऽग्निहोत्रं जुहुयात्स्वर्गकामः ज्योतिष्टोमेन यजेत स्वर्गकाम" इत्यादिसाङ्गं कर्मण्यनुष्ठापको विधिः यथा "पौर्णमास्यां पौर्णमास्यां यजेते" त्यादिरितिविवेकः कृतिसाध्यत्वे सतीष्टसाधनत्वमभिधेयविधित्वमयमेव विधिलिङर्थः एतेन भावनानियोगवादो निरस्तो बोध्यः प्रमाणाभावात् एवं विधीनां प्रयोजनवदर्थपर्यवसायित्वं निर्णीतं सच विधिस्त्रिविधः अपूर्वनियमपरिसङ्ख्याभेदात् तत्रमानान्तरेणाप्राप्तस्यार्थस्य कर्त-

व्यतया बोधको ऽपूर्वविधिः यथा "व्रीहीन्प्रोक्षती"ति व्रीहीणां प्रोक्षणस्य संस्कारस्य मानान्तरेणा-प्राप्तत्वात्तत्कर्त्तव्यताबोधनपरो ऽयमपूर्वस्य लक्षणा-समन्वयात् साधनद्वयस्य पक्षे प्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमः यथा "व्रीहीनवहन्ति" तुषनिवृत्तिं प्रति एकत्र पक्षे ऽवघातः एकत्र पक्षे नखविदलनादिश्च प्राप्तः यदा नखविदलनादिः प्राप्तस्ततश्च तुषनिवृत्तिं प्रति पक्षप्राप्तस्यावघातादेरप्राप्तांशं पूरयति अवहनन-वाक्यं अवघातेनैव तुषनिवृत्तिः कार्येति नियमः नतु वैतुष्यकरणं विध्यर्थः तस्यान्वयव्यतिरेकाभ्यां सिद्धत्वात् अतश्च नियमविधावप्राप्तांशपूरको ऽयं नियम एवेत्यर्थः उभयस्य युगपत्प्राप्तावितरव्या-वृत्तिपरः परिसङ्ख्याविधिः यथा पञ्च "पञ्चनखा भक्ष्या" इति विधिवाक्यं न भक्षणपरं तस्य रागतः प्राप्तत्वात् नापि नियमपरं पञ्चनखापञ्च-नखभक्षणयोर्युगपत्प्राप्तत्वात् पक्षे प्राप्त्यभावात् किन्तु पञ्चनखभक्षणानिवृत्तिपरमिदं वाक्यं अपञ्च-नखा न भक्ष्या इतिवाक्यार्थः ॥ ननु नियम-परिसङ्ख्ययोः को विषय उभयत्रेतरव्यावृत्तेर-

विशेषादिति चेन्न नियमविधावितरव्यावृत्तिरार्थिकी परिसङ्ख्याविधौ सा विधेयेति विशेषस्य सत्त्वात् "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति तत्र चान्यत्रच प्राप्तौ परिसङ्ख्येति गीयते" इति-वचनात् तत्र "निदिध्यासितव्य" इतिह्यपूर्वविधिरेव ध्यानस्य वेदान्तमृते मानान्तरेणाप्राप्तत्वात् तदेवाङ्गि "ततस्तु तं पश्यति निष्कलं ध्यायमान" इत्यादिना साक्षात्फलवत्त्वश्रवणात् नच पुराणादिनापि तत्प्राप्तेः कथमुक्तार्थसिद्धिरिति वाच्यं तादृक्पुराणवाक्यानां वेदान्तवाक्यव्याख्यानरूपत्वेन भिन्नप्रमाणत्वाभावात् श्रवणमननयोर्भिन्नफलकत्वाभावेन तदङ्गत्वं तथाच दर्शनमुद्दिश्य तदन्तरङ्गसाधनं ध्यानमात्रं विधेयं श्रवणमनन-योर्ध्याने विनियोगः तादर्थ्यादिति श्रुत्यर्थः ननु श्रोतव्य इत्यादिवाक्ये श्रवणस्यैवाङ्गित्वमङ्गीकार्यं तथाहि तत्साक्षात्फलसाधनत्वेन श्रूयते तदेवाङ्गी-शेषी प्रधानमित्यादिसञ्ज्ञां लभते तत्सन्निधौ फलं विना यत्कर्त्तव्यतया श्रुतं तदङ्गं शेषः सहकारीति चोच्यते यथा "दर्शपौर्णमासाभ्यां स्वर्गकामो यजे-ते"ति विधिना दर्शपौर्णमासाग्नेयादयः षट् यागाः

साक्षात्फलसाधनत्वेन विहितत्वादङ्गिनः तत्प्रकरणे "व्रीहीन्प्रोक्षति समिधो यजती"ति प्रोक्षणादयः समिधादयश्च साक्षात्स्वर्गफलमन्तरेण कर्त्तव्यतया विहितत्वात्तदङ्गानि "फलवत्सन्निधावफलं तदङ्ग"मिति न्यायात् तत्राङ्गान्यपि द्विविधानि स्वरूपोपकारीणि फलोपकारीणि च तत्र प्रोक्षणादीनि स्वरूपोपकारीणि तान्येव सन्निपत्योपकारकसञ्ज्ञकानि प्रयाजादीनि तु फलोपकारीणि तान्येवारादुपकारीणीति शास्त्रीया प्रक्रिया सर्ववादिसम्मता तथा प्रकृते ऽपि वेदान्तश्रवणस्य प्रमाणविचाररूपत्वेन ब्रह्माऽनुभवं प्रति साधनत्वेन विहितत्वादङ्गित्वं विवेकादिगुरूपसत्त्यन्तानि तत्सन्निधौ विहितानि स्वरूपोपकारकाणि तेषां ज्ञानातिरिक्तफलान्तराश्रवणात् मननादीनि फलोपकार्यङ्गानि फलं विना तत्सन्निधौ विहितत्वात् तथाच मनननिदिध्यासनाभ्यां सह श्रवणस्यामाङ्गिविधेयं तथा चात्र प्रयोगः श्रोतव्य इत्यादिना श्रूयमाणं श्रवणमङ्गि साक्षाद्ब्रह्मप्रमां प्रति साधनत्वेन श्रुतत्वात् "दर्शपौर्णमासाभ्यां यजेत स्वर्गकाम"इत्यादिश्रुतदर्शादिवदिति चेत्सत्यम् उक्ताङ्गाङ्गिप्रक्रियायाः शास्त्री-

यत्वेनास्माकमप्यङ्गीकार्यत्वाविशेषात् तथापि यदुक्तं श्रवणस्याङ्गित्वं तत्प्रामादिकमात्रं तत्र साक्षात्फलसाधत्वेन श्रूयमाणस्याङ्गिलक्षणस्याव्यापनात् तत्फलश्रावकवाक्याभावात् एतेनोक्तानुमानस्य स्वरूपासिद्धहेतुकत्वादाभासमात्रत्वमपि दर्शितं भवति दृष्टान्तविकलत्वेनाप्रसिद्धसाध्यत्वेन चापि तथात्वं बोध्यं किञ्च प्रत्युत वेदान्तश्रवणसाक्षाद्ब्रह्मप्रत्यक्षानुभूतिसाधनत्वनिषेधश्रवणात् । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन शृण्वन्तो ऽपि बहवो यं न विद्यु"रित्यादिश्रुतिभ्यः किञ्चोक्तहेतोर्विरुद्धत्वयोग्यादप्याभासत्वं यत्र श्रवणं तत्र परोक्षज्ञानमिति साध्याभावरूपेण परोक्षज्ञानेन व्याप्तत्वात् ननु तत्त्वमस्यादिवाक्यजन्यं ज्ञानमपरोक्षमेव परोक्षज्ञानाभ्याससंस्कृते न मनसा ब्रह्मापरोक्ष्यासम्भवात् "तद्वास्य विजज्ञौ तमसः पारं दर्शयति ॥ वेदान्तविज्ञानसु* निश्चितार्थां" इत्यादावुपदेशमात्रादेवापरोक्ष्योक्तेः शाब्दज्ञानमपरोक्षमपरोक्षमात्रविषयकज्ञानत्वात्-

---

* शाब्दज्ञानस्य त्रिपदेन विशेषविषयत्वस्य लाभात् सुपदेनापरोक्षत्वोक्तेश्च ।

सुखादिज्ञानवत् अपरोक्षत्वं च वेदान्तजन्यज्ञान-
वृत्तिअपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात् ।
ज्ञानत्ववदित्यनुमानाच्चेति चेन्न विजज्ञावित्यादेः
परोक्षज्ञानेनाप्युपपत्तेः पारं दर्शयतीत्यादेश्च ग्रामो-
पदेष्टरि ग्रामं दर्शयतीतिवदुपपत्तेः "मनसैवानु-
द्रष्टव्य" इत्यादिश्रुतिविरोधाच्च सुपदस्याप्रामा-
ण्यशङ्कानिरासकत्वेनैवापारोक्ष्यजनकत्वाप्राप्तेश्च ।
शाब्दं ज्ञानं परोक्षं शब्दजन्यज्ञानत्वाज्ज्योतिष्टो-
मादिवाक्यजन्यज्ञानवत् शाब्दो नापरोक्षधीहेतुः
शब्दजन्यत्वात् ज्योतिष्टोमादिशब्दजन्यविचार-
वत् अपरोक्षत्वं न शब्दजन्यधीवृत्ति अपरोक्ष-
मात्रवृत्तित्वात् चाक्षुषत्वादिवदिति प्रतिरोधाच्च
नच दशमस्त्वमसीत्यादिशब्दजन्ये व्यभिचारः
तस्यापि परोक्षतुल्यत्वात् अत्र युष्मदर्थस्य प्रत्यक्ष-
प्राप्तत्वात्तमनूद्य तत्र दशमत्वविधानात् तथाच
धर्म्यंशे ऽपारोक्ष्ये ऽपि विधेयदशमत्वांशपरोक्षत्वात्
नच परोक्षेणापरोक्षभ्रमनिवृत्तिरनुपपन्नेति वाच्यं
धर्मवांस्त्वमसीतिवत्तस्या अपि सम्भवात् इन्द्रि-
यान्तरजन्येनोपदेशसहकृतेनापि तन्निवृत्त्युपपत्तेः
वाक्यश्रवणानन्तरं मनोयुक्तेन्द्रियेण व्यक्तयवच्छिन्न-

युष्मदर्थस्य प्रत्यक्षत्वाभ्युपगमादविरुद्धमित्यर्थः अन्यथा धर्मशास्त्रविचारेण धर्मादिज्ञानस्याप्यपरोक्षत्वापत्तेः नचापरोक्षार्थकशब्दस्यापरोक्षजनकत्वनियमः शब्दस्यापरोक्षज्ञानजनकत्वस्वाभाव्ये ह्यन्यविषयकापारोक्ष्यजनकताया अवश्यम्भावात् अन्यथा ऽर्द्धजरतीयन्यायप्रसङ्गात् विषयापरोक्षस्य तन्निमित्तत्वादिति चेन्न तन्निमित्तत्वे जीवेशाभेदानुमानादप्यपारोक्ष्यापत्तेश्च एतेन यं शाब्दबोधमादाय यस्य बोद्धव्यत्वं तदर्थस्य साक्षात्त्वं तदभिन्नार्थावगाहिनिमित्तकमित्यपि निरस्तं परमधर्मत्वांस्त्वमसीत्यादिशब्दादप्यपरोक्षत्वापत्तेः नच "तं त्वौपनिषदं पुरुषं पृच्छामी"त्यादौ "तत्र साधु" रिति तदन्यासाध्यत्वे सति तत्साध्यत्वरूपसाध्वर्थकतद्धितेनापरोक्षजनकत्वं शब्दस्येति वाच्यं परोक्षज्ञानविषयत्वेनाप्यौपनिषदत्वोपपत्तेः सामञ्जस्यात् नच धर्मादेरप्यौपनिषदत्वापत्तेः धर्मादेर्योगिप्रत्यक्षगम्यत्वात् नच "यन्मनसा न मनुते" इतिमनसः करणत्वनिषेधाच्छ्रुतिरेव ब्रह्मापरोक्ष्ये हेतुरिति वाच्यं "यतो वाचो निवर्त्तन्ते" इतिशब्दनिषेधस्यापि साम्यात् नचशक्त्या बोधकत्वपरं तदिति वाच्यं "मनसैवानु-

द्रष्टव्य"मिति तृतीयाश्रुत्यनुसारात् "तन्मनो न मनुते" इतिनिषेधस्यापक्कमनोविषयत्वेनापि सामञ्जस्यात् शक्त्या बोधकत्वे श्रुतत्यागाश्रुतकल्पनापत्तेः वेदान्तस्य मुख्यार्थत्यागाच्च तस्मादियत्तावच्छेदेन निषेधे एव श्रुतेस्तात्पर्यं कार्त्स्न्यागोचरतया यतः सकाशाद्वचसां निवृत्तिर्विवक्षिता तस्य ब्रह्मण आनन्दादीनां गुणानामनन्तत्वात् अन्यथा "ऽऽनन्दं ब्रह्मणो विद्वानि"ति मन्त्रोत्तरार्द्धविरोधो दुर्वारः सर्वथैवागोचरत्वे विद्वत्तासम्भवात् आनन्दं विद्वानित्युक्तेर्बाधात् एतदुक्तं भवति सन्निकृष्टविषये ऽपि वाक्यस्यालोकादिसहकृतचक्षुरादिक्लृप्तकरणद्वारेणैवापरोक्षज्ञानजनकत्वं न स्वातन्त्र्येण अन्यथाऽन्धकारे ऽपि अयं घट इतिवाक्यात्सन्निकृष्टघटस्यापरोक्षत्वप्रसङ्गात् एवं चक्षुरादेरेव प्रमाकरणत्वं नतु वाक्यस्य तथा श्रवणानन्तरं ह्यालोकस्थानीयश्रीभगवदनुग्रहसहकृतनिदिध्यासनेनैव ब्रह्मसाक्षात्कारपूर्वकश्रुतिनिर्णीतो ऽर्थः "यमेवैष वृणुते तेन लभ्यः ॥ ततस्तु तं पश्यति निष्कलं ध्यायमान"इत्यादिश्रुतिभिः तस्मात्साक्षात्फलसाधनत्वेन श्रूयमाणत्वं शेषित्वमिति लक्षणस्य निदिध्यासने एव समन्वयात्तस्यै-

वाङ्गित्वं श्रवणादेस्तुपरोक्षधीजनकत्वादारादुपकारकरूपाङ्गत्वमितिसिद्धम् श्रवणं न निदिध्यासनस्याङ्गि साक्षात्फलसाधनत्वेनाश्रूयमाणत्वात् "व्रीहीन्प्रोक्षती"ति श्रुतप्रोक्षणादिवत् वेदान्तवाक्यं न ब्रह्मसाक्षात्प्रमाकरणं परोक्षज्ञानजनकत्वात् शब्दत्वाच्च ज्योतिष्टोमादिवाक्यवत् श्रवणं न साक्षात्कारहेतुः "शृण्वंतोऽपि बहव" इति श्रुतिनिषिद्धत्वात् यन्नैवं तन्नैवं "ततस्तु तं पश्यती"ति कण्ठरवेण साक्षात्फलसाधनत्वेन श्रूयमाणनिदिध्यासनवदित्याद्यनुमानेभ्यः एतेन पूर्वोक्तशास्त्रीयप्रक्रियाप्रकारो दर्शितः श्रौतस्याङ्गिलक्षणस्य निदिध्यासने समन्वयात्तस्याङ्गित्वम् अङ्गलक्षणस्य च श्रवणादौ व्यापनात्तस्याङ्गत्वमिति राद्धान्तः ननु द्रष्टव्यः श्रोतव्य इतिदर्शनाव्यवधानपाठरूपसन्निधानाच्छ्रवणस्यापरोक्षानुभवजनकत्वेनाङ्गित्वमिति चेन्न उक्तहेतोरप्रयोजकत्वात् नतावत्सन्निधानमात्रं ह्यङ्गित्वे नियामकम् किन्तु तद्गतफलजनकत्वसामर्थ्यं तस्य पूर्वोक्तप्रकारेण श्रवणेऽसम्भवात् अन्यथा प्रोक्षणादीनामपि तथात्वप्रसङ्गात् क्लीवसान्निध्यादपि स्त्रियः प्रजोत्पत्तिप्रसङ्गाच्च अपिच श्रवणस्य

साक्षाद्ब्रह्मापरोक्षानुभूतिजनकत्वं निदिध्यासनस्य तदङ्गत्वं चेति यदुक्तं तत्तुच्छतरम् अत्यन्तासम्भवात् नह्ययं देवदत्त इतिवाक्यात् देवदत्तविषयक प्रत्यक्ष-प्रमायां जातायां पुनस्तदर्थं च ध्यानापेक्षा कस्य चिदनुन्मत्तस्य पुंसो जायते अदृष्टश्रवणात् अनु-पपत्तेश्चेति सङ्क्षेपः ॥

इति श्रवणाङ्गित्वगिरिनिपातः ॥ २ ॥

तत्र श्रवणं नाम वेदान्तवाक्यानां भगवत्स्व-रूपगुणादिसर्वान्तरत्वादिप्रतिपादनपरत्वं निश्चित्य तत्प्रतिपाद्यब्रह्मस्वरूपाद्यनुभवितुराचार्यस्य मुखा-सदनुभूतवाक्यार्थस्य ग्रहणं श्रुतस्य चोपदिष्टार्थस्य स्वानुभवविषयीकरणाय शास्त्रानुकूलयुक्तिभिर्वि-चारविशेषो मननं मननविषयस्यार्थस्यापरोक्ष-प्रमासाधारणोपायभूतमनवरतध्यानं निदिध्यासनं चेति केचित्तु शक्तितात्पर्यावधारणं श्रवणमित्याहु-स्तन्न सर्वशब्दावाच्ये ब्रह्मणि शक्त्यसम्भवात् संशयधर्मिणः प्रागेव निर्णीतत्वेन विशेषस्य तत्रा-भावेनावधारणीयत्वाभावात् नचावधारणं मनो-वृत्त्यन्तरं यत्र यत्र विधिः प्रतीयते तत्र सर्वत्र ज्ञान-भिन्नमनोवृत्तिरिति वक्तुं शक्यत्वेन ज्ञाने विधि-

नास्तीत्युक्तेर्निष्फलत्वापत्तेः तात्पर्यरूपे विषये उप-
क्रमादिरूपे च प्रमाणे सति जायमानस्य तस्य
ज्ञानवह्निर्भावानुपलब्धेरुपासनादौ प्रमाणवस्तुपर-
तन्त्रत्वादर्शनाच्चेति अलं विस्तरेण अथोक्तलक्षणा-
नवरतध्यानं भगवदनुग्रहासाधारणं कारणं तस्य
च सद्यो मोक्षासाधारणोपायत्वमिति राद्धान्तः
ननु श्रवणादेः साक्षान्मोक्षहेतुत्वमेवास्तु किमनु-
ग्रहाङ्गीकारेण गौरवादिति चेन्न तेषां व्यभिचारदर्श-
नात् अस्य त्वन्वयव्यतिरेकाभ्यामव्यभिचारित्व-
श्रवणादवश्याभ्युपगम इत्यर्थः "नायमात्मा प्रव-
चनेन लभ्यो न मेधया न बहुना श्रुतेन॥ यमेवैष
वृणुते तेन लभ्यः॥ तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीश"मित्यादिश्रुतेः ननु-
"ततस्तु तं पश्यती"त्यादिना ध्यानस्यैव साक्षा-
त्कारं प्रति प्रधानोपायत्वश्रवणात्तद्बाध इति चेन्न
अविरुद्धत्वात् ध्यानस्य करणत्वेन भगवत्प्रसादस्य
व्यापारत्वेनाङ्गीकारादुभयोस्सामञ्जस्यमित्यर्थः अ-
न्यथा प्रसादश्रुतेर्बाधप्रसङ्गादिति यावत्॥ अथ
विरागार्थं बद्धजीवानामुत्क्रान्तिगत्या गतयो जाग-
रणाद्यवस्थाविशेषाश्च निरूप्यन्ते तत्रायं जीवो

देहादुत्क्रम्य देहान्तरं लोकान्तरं वा गच्छन् सूक्ष्मदेहोपादानभूतैः सूक्ष्मैर्महाभूतैः पञ्चभिः परिष्वक्त एव याति तथैवाम्नायते पञ्चाग्निविद्यायां प्रश्नोत्तराभ्यां श्वेतकेतुमारुणेयं पाञ्चालः प्रवाहणः कर्मिणां गन्तव्यदेशादिविषये प्रष्टव्यान् पृष्ट्वेदमपि पृष्टवान् "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति तमिमं चरमप्रश्नं वदन् "द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चाग्निषु श्रद्धासोमवृष्ट्यन्नरूपाः पञ्चाहुतयस्तत्र चरमायां योषिद्रूपाया माहुतौ रेतोरूपाश्चापः पुरुषवचसो गर्भरूपाः पुरुष इति कथ्यन्ते" इत्युत्तरं दत्तवान् "द्युलोके ऽग्नित्वेन देवाः श्रद्धारूपामाहुतिं जुह्वते तस्याहुतेः सोमो राजा स भवती"त्यादिना अत्र-जीवस्य प्राणा देवपदार्थः जीवस्य प्राणा द्युलोकरूपे ऽग्नौ श्रद्धारूपं वस्तु प्रक्षिपन्ति साच श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमति तं चा ऽमृतमयं देहं त एव प्राणाः पर्जन्यरूपे ऽग्नौ प्रक्षिपन्ति सच देहस्तत्र प्रक्षिप्तो वर्षं भवति तच्च वर्षं त एव प्राणाः पृथिवीरूपाग्नौ प्रक्षिपन्ति तच्चान्नं भवति तच्च त एव प्राणाः पुरुषरूपे ऽग्नौ

प्रक्षिपन्ति तच्च तत्र रेतो भवति तच्च त एव योषि-
द्रूपाग्नौ प्रक्षिपन्ति तथाच पूर्वाहुतिषु हुतानामेवापां
गर्भरूपेण पुरुषसंज्ञा जायते इत्यर्थः ननु देहस्य
पञ्चभूतजन्यत्वादत्र जलमात्रश्रवणाविरोध इति चेन्न
अपां ऽयात्मकत्वात् अन्नतेजसोरपि परिग्रहः सूप-
पन्नः शुक्रशेणितेऽपां वाहुल्यात्तन्मात्रश्रवणमप्य-
विरुद्धं "त्रिवृतं त्रिवृतं करवाणी"तिश्रुतेः किञ्च तमु-
त्क्रामन्तं प्राणो ऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे
प्राणा अनूत्क्रामन्ति "मनः षष्ठानीन्द्रियाणि प्रकृ-
तिस्थानि कर्षति शरीरं यदवाप्नोति यच्चाप्युत्क्रामती-
श्वरः गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयादि"
त्यादिश्रुतिस्मृतिभिः प्राणाद्युत्क्रान्तिर्विधीयते साच
तेषां निराश्रयाणां नोपपन्ना अतो भूतसूक्ष्माणा-
मपि गतिः सूपपन्ना ननु "यत्रास्य पुरुषस्य मृतस्य
वागग्निमप्येति वा तं प्राणश्चक्षुरादित्य" मित्यादिना
प्राणादीनां मरणसमये ऽग्न्यादावप्ययश्रवणात्कथं
जीवेन सह गमनमिति चेन्न अग्न्यादावप्ययस्य
गौणत्वात् औषधीर्लोमानि वनस्पतीन् केशा
इत्यप्ययवद्भिर्लोमादिभिस्सह श्रवणात् यथा
लोमादिलयस्य भाक्तं तथा प्राणादीनामपि ज्ञेयं

अग्न्यादिगमनस्य तदधिष्ठातृत्वनिवृत्त्यर्थत्वेनौप-
चारिकत्वादित्यर्थः भाक्तं नाम भज्यते मुख्या-
वृत्तिर्यया गौणया सा भक्तिस्तत्र भवं तत्त्वं ननु
"प्रथमे ऽग्नौ द्युलोकाख्ये तस्मिन्नग्नौ देवाः श्रद्धां
जुह्वती"ति श्रवणादपामश्रवणाच्च कथमापस्तत्र
होम्या इति चेन्न अत्र श्रद्धाशब्दस्याऽब्वाचकत्वात्
"श्रद्धा वा आपः श्रद्धामेवारभ्य यज्ञेन यजत"
इतिप्रयोगदर्शनात् नन्वस्मिन् वाक्ये जीवस्याश्रव-
णात् श्रद्धादीनामेव होम्यत्वेन श्रवणाच्च कथं
जीवस्य भूतपरिष्वक्तस्योपलब्धिरिति चेन्न "अथ
ये इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभि-
सम्भवन्ती"त्युत्तरत्र कर्मकारिणां प्रतीतेः ननु "ते
धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपर-
पक्षाद्यान् षट् दक्षिणैति मासांस्तानेति सम्वत्सर-
मभिप्राप्नोति मासेभ्यः पितृलोकं पितृलोकादा-
काशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं
तं देवा भक्षयन्ति तस्मिन्यावत्सम्पातमुषित्वा ऽथै-
तमध्वानं पुनर्निवर्त्तन्ते यथेतमाकाशमाकाशाद्वायुं
वायुर्भूत्वा धूमो भवति धूमो भूत्वा ऽभ्रं भवति
अभ्रं भूत्वा मेघो भवति मेघो भूत्वा वर्षति इह

व्रीहियवा ओषधवनस्पतयस्तिला माषा इति जायन्ते" इत्यादिगतागतश्रुतयः तत्र देवा भक्षयन्तीति देवभक्ष्यत्वश्रवणात् सोमो राजेति शब्दो न जीवपरस्तस्य भक्षणीयत्वासम्भवादिति चेन्न अत्र भक्ष्यत्वश्रवणस्य गौणत्वात् इष्टादिकारिणामनात्मविस्वात्ते देवानामुपकरणत्वेन वर्तन्ते इहामुत्र तत्रेहेष्टादिना तदाराधनरूपमुपकारं कुर्वन्तितेन तद्दत्तफलं स्वर्गे प्राप्य तद्भोगोपकरणरूपाश्चामुत्रापि भवन्ति अविदुषां देवोपकारकत्वं दर्शयति श्रुतिः "पशुरेव स देवाना"मित्यादि "देवान् देवयजो यान्ती"ति स्मृतिश्च तस्माद्देवोपकारित्वमेव तद्भक्ष्यत्वेनोपचर्यते यथा राज्ञो विशोऽन्नं विशामन्नं पशव इत्यादिवदितिभावः "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्या" मित्यादिसूत्राण्यत्रानुसन्धेयानि एतेन यत्र फलमनुभूयते तत्रैव भूतानि लभ्यन्ते इति साङ्ख्यपक्षो निरस्तः "अथैनमेते प्राणाः समायन्ति अन्यन्नवतरं रूपं कुरुते" इत्यादिश्रुतिविरोधादिति सङ्क्षेपः एवमविदुषामारोहणप्रकारो निरूपितः अथेदानीमवरोहणप्रकारमाह "तस्मिन् यावत्सम्पातमुषित्वा ऽथैन-

मध्वानं पुनर्निवर्त्तन्ते" इत्यादिश्रुतेः सम्पातन्त्यने-
नेति सम्पातं कर्मेत्यर्थः "सचाविद्वान् सानुशय एवा-
वरोहति "तद्य इह रमणीयचरणा अभ्याशो ह्यते
रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रि-
ययोनिं वा वैश्ययोनिं वा य इह कपूयचरणा-
अभ्याशो ह्यते कपूयां योनिमापद्येरन् श्वयोनिं वा
शूकरयोनिं वा चाण्डालयोनिं वे"तिश्रुतेः चरणशब्द
आचरणीयकर्मपरः (१) ततः शेषेण (२) विशिष्ट-
देशजातिकुलरूपायुः श्रुतवित्तवृत्तसुखमेधसो जन्म
प्रतिपद्यन्ते" इतिस्मृतेश्च स्वर्गप्राप्तिहेतुभूतकर्मभ्यः
कर्मान्तरमनुशयपदवाच्यं तद्वानवरोहतीत्यर्थः तत्र
पितृयाने धूमाकाशयोर्निर्देशेनावरोहश्रवणारारोह-
णानुसार एवावरोहः तद्विरुद्धवाय्वादिश्रवणाच्चा-
न्यथा ऽपीति बोध्यं "कृतात्यये नुशयवान् दृष्ट-
स्मृतिभ्यां यथेतमनेवं चे"तिसूत्रात् अथ जीवस्य
गतिस्त्रिधा अर्चिरादिका धूमादिका यमवशगाच

---

(१) विशिष्टा देशादयो मेधान्ता दश गुणा येषु ते तथोक्ताः
श्रुतंज्ञानं वृतमाचारः ।

(२) भुक्तादन्येन कर्मणा ऽनुशयाख्येन पुनर्जन्मप्रतिपद्यन्ते
इतिसम्बन्धः ।

तत्र विदुषां मोक्षहेतुका प्रथमा साच फलाध्याये वक्ष्यते अविदुषां पुण्यकर्मणां च धूमादिका निरूपिता तदुभयविधुराणां तु नरकाद्यापत्तिश्चेदानीं निरूप्यते विद्याकर्मविहीनानां देवयानपितृयानगती न स्तः कारणाभावात् एतेन यदुक्तं केषाञ्चित्पापकर्मणा यमालयं गत्वा तत्र पापं यमयातनादुःखभोगेन क्षपयित्वा पुनरारोहावरोहौ स्त इतितन्निरस्तं प्रमाणशून्यत्वात् नन्वेवं तर्हि तेषां चन्द्रगमनाभावे शरीरयोगस्यैवासम्भवः पञ्चम्याहुत्यभावादिति चेन्न केवलपापकर्मणां न पञ्चम्याहुत्यपेक्षा तथैवश्रवणात् "केनासौ लोको न सम्पूर्यते"इतिप्रश्नस्य प्रतिवचने "अथैतयोः पथोर्न कतरेणाच न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते"इतिश्रुत्या ऽनपेक्षादर्शनात् नचैवं पञ्चम्याहुतिवाक्यबाध इतिवाच्यं तस्य पुरुषवचस्त्वप्रतिपादनमात्रेणोपक्षीणतया ऽन्यनिवारकत्वे मानं नास्ति अवधारणादर्शनात् अन्यथा वाक्यभेदप्रसङ्गात् पुण्यकर्मणां धृष्टद्युम्नद्रौपदीप्रभृतीनां स्वेदजोद्भिज्जादीनां निविडतमस्कानां

च पञ्चम्याहुतिनिरपेक्षत्वं जन्म श्रुतिषु दृश्यते अन्यथा तद्बोधकशास्त्रबाधात् त्रीण्येव वीजानि भवन्ति "अण्डजं जीवजमुद्भिज्ज"मितिश्रुतेः यद्य ऽप्यत्र त्रयाणामेव श्रवणं तथाप्युद्भिज्जशब्देन स्वेदजो ऽप्युपलक्ष्यते "तृतीयशब्दावरोधः संशोकजस्ये"तिसूत्रात् जीवजं जरायुजं संशोकजं स्वेदजमितिचातुर्विध्यमेव वोध्यं किञ्च "काशाद्वायुर्भूत्वा धूमो भवती"तिवर्षापर्यन्ते श्रुत्युक्ताकाशादिभावापत्तिस्तत्सादृश्यापत्तिरेव नतु मनुष्यादिभाववत्तत्त्वापत्तिः तेषु सुखदुःखोपभोगाभावात् "तत्स्वाभाव्यापत्तिरुपपत्ते"रितिसूत्रात् किञ्च यावद्व्रीहिप्राप्तिरवरोहो ऽल्पकालेन वोध्यः विशेषश्रवणात् "अतो वैखलुदुर्निष्प्रतर"मिति अस्मात् व्रीह्यादिभावादुत्तरं दुःखतरं निःसरणमितिवदन् सर्वत्र पूर्वत्राचिरकालं वोधयति व्रीह्यादावनुशायिनो वीह्यादिशरीरिजीवविशेषाधिष्ठिते एव संसर्गमात्रं नतु व्रीह्यादिशरीरित्वं पूर्वोक्ताकाशादिवत्तेषामपि कथनात् तत्कर्मजन्यत्वाभावात् न स्थावरयोनित्वमित्यर्थः एतेन कर्म द्विविधं शुद्धमशुद्धञ्च तत्र शुद्धमहिंसादि द्वितीयं ज्योतिष्टोमादिपशुहिंसावत्त्वात् अनुशायिनां

ज्योतिष्टोमादिकर्त्तृत्वेनाशुद्धव्यामिश्रकर्मफलभोगाय मुख्यमेव स्थावरं जन्मेति साङ्ख्यसिद्धान्तो निरस्तः सामान्यविधेर्विशेषविधिर्बलीयान् "न हिंस्यात्सर्वाभूतानी"तिसामान्यनिषेधस्य वाह्यहिंसाविषयकत्वेन सावकाशत्वात् क्रतुगतहिंसाविधेस्तु निरवकाशत्वेन वलीयस्त्वात्तेन सामान्यनिषेधस्य वाधो युक्त एव "अशुद्धमिति चेन्न शब्दादि"तिसूत्रात् किञ्च व्रीह्यादिभाववचनानन्तरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवती"ति श्रुतेः रेतः सिग्योगो यथा तद्योगमात्रं वक्ति तद्व्रीह्यादिभावो ऽपि तद्योगमात्र एव भूय एव भवति" तदाकृतिर्भवतीत्यर्थः मनुष्येण भक्षितो मनुष्यो जायते पश्वादिना भक्षितः पश्वादिर्भवतीतियावत् रेतःसिग्योगोऽथे"तिसूत्रात् किञ्च योनिप्राप्तेः पश्चादेवानुशायिनां देहप्राप्तिः तत्रैव सुखदुःखादिभोगस्य सत्वात् ततः पूर्वं ह्याकाशादिप्राप्तौ तद्योगमात्रमेवेति सिद्धं "योनेः शरीर"मितिसूत्रादिति सङ्क्षेपः इत्थं जाग्रदवस्थायां जन्ममरणस्वर्गनरकगमनादिदुःखजातं जीवस्य विरागार्थं प्रपञ्चितं एतेनात्मानात्मविवेको ऽपि सिद्धः अथेदानीं

तयोर्विवेकविरागयोर्दार्ढ्यार्थं स्वप्नाद्यवस्था निर्णीयते तत्र स्वप्ने सृष्टिः श्रूयते "न तत्र रथा न रथयोगा न पन्थानो भवन्ति "अथ रथान्रथयोगान्पथः सृजत" इत्यादिना सा सृष्टिः परमेश्वरनिर्मितैव न जीवकृता तस्य तत्रोपकरणाद्यभावात् जीवस्य तच्छक्तिशून्यत्वात् तज्जीवकर्मानुसारेण तत्तदेकैकजीवानुभवयोग्यमितरसकलपुरुषाननुभूयमानं रथादिकं श्रीपुरुषोत्तमेनैव निर्मीयते तस्य सर्वशक्तिसत्यसङ्कल्पादिस्वाभाविकधर्मयोगात् जीवस्य बद्धावस्थायां सत्यसङ्कल्पत्वादिधर्माणां तिरोधानात् किञ्च "यदा कर्मसु काम्येषु स्त्रियम् ॥ अथ यदा स्वप्नेषु पुरुषं कृष्णं कृष्णादन्त"मित्यादिना स्वप्नस्येष्टादिसूचकत्वश्रवणात् तच्च जीवकर्तृकत्वे न सम्भवति यदि जीवः सृष्टिकर्त्ता तर्हि शुभसूचकमेव स्वप्नं दृष्ट्वा सदा सुखमेवानुभूयेत न कदाऽपि दुःखी स्यात् नहि चेतनः स्वदुःखार्थं कोऽपि यतते इतिभावः किञ्च "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिंल्लोकाः श्रिताः सर्वे" इतिपरमात्मासाधारणधर्मश्रवणं तेषां जीवे कथमप्यसम्भवात् तस्मा-

जीवानामल्पतरकर्मानुसारिफलयोगाय तावन्मात्र-कालीनं तदेकतमेनानुभाव्यं रथादि परमेश्वर एव सृजतीति सिद्धं विशेषार्थस्तु पूर्वमेवोक्तः ननु जीवस्य सत्यसङ्कल्पादिकं कुतस्तिरोहितमिति-चेच्छृणु अनादितत्कर्मानुगुणपरमेश्वरसङ्कल्पा-देवेति ब्रूमः पुनश्च यदा तच्चरणोपसन्नश्चेत्तेनैव बन्धो निवार्यते बन्धमोक्षयोर्हेतुः परमेश्वर एवेति शास्त्रा-दवगम्यते "संसारबन्धस्थितिमोक्षहेतु"रितिश्रुतेः "बन्धको भवपाशेन भवपाशाच्च मोचक" इत्यादि-स्मृतेश्च "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ"वितिसूत्राच्च एतेन "सन्ध्ये सृष्टिराह हि निर्मातारं चैकेपुत्रादयश्चे"त्यादि शास्त्रं व्याख्यातं अत्रसन्ध्यशब्दः स्वप्नपरः "सन्ध्यं तृतीयं स्थान" मितिवचनात् अथ सुषुप्त्यवस्था श्रूयते "अथ यत्रैतत्सुप्तः समस्तसम्पन्नः स्वप्नं किञ्चन न विजा-नाति आसु तदा नाड़ीषु सुप्तं भवती"ति तथाच "अथ यदा सुप्तो भवति यदा न किञ्चन वेद तदा हि ता नाम नाड्यो द्वासप्ततिसहस्राणि हृदया त्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृत्य पुरीतति शेते"इति तथा "यत्रैतत्पुरुषः स्वपिति नाम सता

सोम्य तदा सम्पन्नो भवती"ति त्रिविधसुषुप्तिस्थान-
पराः श्रुतयो दृश्यन्ते तत्र नाड़ीपुरीततौ प्रासाद-
खट्वास्थानीयौ ब्रह्म पर्यङ्कस्थानीयं तत्र ब्रह्म-
साक्षात्सुषुप्तिस्थानं ज्ञेयं तस्मादेव प्रबोधश्रवणात्
"सत आगत्य न विदुः सत आगच्छामहे"इति
"तदभावो नाड़ीषु तच्छ्रुतेरात्मनि चे" त्यादिसूत्रात्
किञ्च यः सुप्तः प्रबोधकाले स एवोत्तिष्ठति नान्यः
योऽहमस्वाप्सं स एव जागर्मी"तिप्रत्यभिज्ञानात्
पूर्वेद्युरर्द्धं कृतं कर्मानुस्मृत्य परेद्युः समापये प्रकृति-
दर्शनाच्च "इह व्याघ्रो वा सिंहो वा वृको वा
वराहो वा दंशो वा मशको वा यद्यद्भवति तत्तथा
भवती"तिश्रुतेः अन्यथा ऽग्निहोत्रादिश्रवणादि-
भोगमोक्षसाधनश्रुतयो विधेयरूपा अनर्थकाः स्युः
कृतनाशाकृताभ्यागमप्रसङ्गश्च अहरहउत्पत्तिनाशौ
च स्यातां जीवानामितिभावः "सएव तु कर्मा
नुस्मृतिशब्दविधिभ्य"इतिसूत्रात् किञ्च मूर्च्छा-
वस्थाऽपि भिन्नैव जागरादौ तदन्तर्भावात् तथाहि
न तावत्स्वप्नजागरौ विशेषज्ञानाभावात् नापि
मरणं प्राणोष्मणोर्विद्यमानत्वात् नापि सुषुप्तिः
वैलक्षण्यात् सुप्तस्य मुखप्रसन्नत्वनेत्रनिमीलनश्वा-

समुञ्चनादीनामुपलम्भात् अथ मरणे सर्वप्राणा-
दिसम्बन्धोपरतिः परिशेषादर्द्धसम्पत्तिः सूक्ष्मप्राण-
देहसम्बन्धेनावस्थितिर्मूर्छेति विवेकः तस्माज्जन्म-
मरणस्वर्गनरकादिभोगेन स्वप्नादिदुःखभोगेन तेषु
दोषान्निश्चित्य तेभ्यश्च सर्वानात्मवर्गेभ्य आत्मानं
विविच्य ततः सर्वतो विरज्य श्रेयसे यतेतेति
तात्पर्यार्थः "परीक्ष्यलोकान् कर्मजितान् ब्राह्मणो
निर्वेदमायात् यथेह कर्मजितो लोकः क्षीयते"
इत्यादिश्रुतेः अथेदानीमुपासनाविशेषास्तासु गुणो-
पसंहारप्रकारश्च निरूप्यते ताश्च द्विविधाः प्रतीक-
रूपाहङ्ग्रहरूपभेदात् तत्र प्रतीकत्वं च तदितरस्मिं-
स्तद्दृष्टिमत्त्वं यथा "पुरुषो वाव गौतमाग्नि"रिति
अत्राग्निभिन्ने पुरुषादौ ह्यग्निदृष्टिरिति एवमाद्यु-
पासनोदाहरणं च बोध्यं अहंग्रहत्वं नाम तत्तदुप-
देशानुकूले ब्रह्मणि तादात्म्यसम्बन्धानुसन्धानं
यथा सत्यविद्यादयः "ऐतदात्म्यमिदं सर्वं ॥
तत्सत्यं स आत्मा ॥ तत्त्वमसी"त्यादिश्रुतेः
ताश्चोद्गीथविद्याशाण्डिल्यविद्यापुरुषविद्यादहरवि-
द्यादयः एकैका अनेकशाखासु पठिताः तासु
चेतरेतरगुणानामुपसंहारं कृत्वोपासनीयं तत्र गुणो-

पसंहारो नाम एकस्यामनेकशाखापठितायां विद्या-
यां तत्र तत्र पठितानां न्यूनाधिकानामितरेतरं
निष्कृष्य संयोजनं यथा वाजसनेयके ऽग्निरहस्ये
शाण्डिल्यविद्या श्रूयते "सत्यं ब्रह्मेत्युपासीत ॥
अथ खलु क्रतुमयोऽयं पुरुष" इत्यारभ्य "आत्मा
नमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्प-
माकाशमात्मान"मिति तथा बृहदारण्यकेऽपि
शाण्डिल्यविद्या श्रूयते "मनोमयः पुरुषो भाः सत्य"
मिति "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः
सर्वमिदं प्रशास्ती"ति उभयत्र वेद्याभेदाद्विद्यैक्यं
निश्चित्य सत्यसङ्कल्पत्वादीनां सर्ववशित्वादीनां
चोभयत्रेतरेतरोपसंहरणमेवमन्यत्रापि बोध्यं किञ्चा-
नन्दादीनामपहतपाप्मत्वादीनामस्थूलत्वादीनां च
सर्वास्वपि विद्यासूपसंहारः सर्वत्रोभयविधस्य ब्रह्मणो
वेद्यस्याभेदात् तथाचोक्तं भगवता सूत्रकृता "न
स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही"ति ब्रह्मणः
सर्वत्र चेतनाचेतनवस्तुमात्रे शुद्धाशुद्धपदार्थे स्वे-
च्छया प्रविष्टस्यापि स्थानतश्चेतनाश्चेतनादिस्थान-
भूतैः पदार्थैर्नापुरुषार्थभूतहेयधर्मसम्बन्धगन्धः हि
यस्मात्सर्वत्र सर्वास्वपि श्रुतिस्मृतिषूभयलिङ्गं

ब्रह्मास्नातं "य आत्मा ऽपहतपाप्मा ॥ सत्यकामः यःसर्वज्ञः सर्ववित् ॥ यस्य ज्ञानमयं तपः ॥ आनन्दं ब्रह्मणो विद्वान् ॥ स्वाभाविकी ज्ञानबलक्रियाच ॥ भीषास्माद्वातः पवते ॥ निष्कलं निष्क्रियं शान्तं अथात आदेशो नेति नेति ॥ अस्थूलमनणिव"त्यादिश्रुतयः "समस्तकल्याणगुणात्मको ऽसौ तेजोबलैश्वर्यमहावबोधःस्ववीर्यशक्त्यादिगुणैकराशिः परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥ यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥ मया ऽध्यक्षेण प्रकृतिः ॥ उत्तमः पुरुषस्त्वन्यः ॥ सर्वज्ञः सर्वकृत्सर्वशक्तिज्ञानबलादिमान् अन्यूनश्चापि वृद्धिश्च स्वाधीनो ऽनादिमान्वशी कामतन्द्राभयक्रोधकामादिभिरसंयुतः निरवद्यः परः प्राप्तेर्निरधिष्ठोक्षिरक्रम" इत्यादिस्मृतयश्च समस्तहेयलेशास्पृष्टमाहात्म्यमशेषकल्याणगुणसागरं परम्ब्रह्म प्रतिपादयन्तीत्यर्थः एतदभिप्रेत्योक्तं श्रीभगवताऽऽचार्येण वाक्यकारेण "स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशि" मित्यादिनो "भयलिङ्गं ब्रह्मे"ति तृतीयपादोक्तसूत्रार्थो ऽत्रानुसन्धेयः "आनन्दादयः प्रधानस्ये"तिसूत्रात् एतेन सर्व-

व्यावृत्तब्रह्मोपलम्भात् ब्रह्मासाधारणत्वादुभयलिङ्ग-
योरित्यर्थः किञ्चोक्तानामुपासनानां विकल्प एव
नतु समुच्चयः सर्वत्रोपास्यस्य परब्रह्मणस्तद्भावा-
पत्तिलक्षणस्य चैकैकया हि सिद्धेः सुकरत्वात्
"विकल्पो विशिष्टफलत्वा"दितिसूत्रात् किञ्च
तद्विपरीतानां काम्योपासनानां फलादिभेदात्स-
मुच्चयो ऽप्यविरुद्धः मोक्षफलकत्वहेत्वभावान्न
विकल्प इतिभावः "काम्यास्तु कामं समुच्चीयेरन्न
पूर्वहेत्वभावा"दितिसूत्रात् यथाकामं फलानुगुणम्
अधिकफलप्राप्तये ऽन्योपासनसमुच्चयस्तावन्मात्र-
फलाय नेत्यर्थः "अथच अश्व इव रोमाणि
विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा
शरीरमकृतं कृत आत्मा ब्रह्मलोकमभिसम्भवा-
मी"ति ताण्डिनां श्रुतिः तथाऽऽथर्वणे "तथाविद्वा-
न्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"ति-
श्रुतिः "तस्य पुत्रा दायमुपयन्ति सुहृदः साधु-
कृत्यं द्विषन्तः पापकृत्य"मितिशाट्यायनिश्रुतिः
"सुकृतदुःकृते विधुनुते तस्य प्रिया ज्ञातयः सुकृत-
मुपयन्ति अप्रिया दुःकृत"मितिकौशीतकिश्रुतिः
अत्रकचित्पुण्यापुण्ययोर्हानिमात्रं क्वचित्तयोर्वि

भागेन प्रियैश्चोपायने क्वचिदुभयहानोपादानञ्चेत्य-न्योऽन्यविरोधो नाशङ्कनीयः केवलायां हानौ श्रुतायां उपायने चेतरेतरसमुच्चयः कार्यः उभयो-रन्योन्यसापेक्षत्वनियमात् कौशीतकिश्रुत्युक्तोभय-ग्रहणस्यैवात्र निगमनात्वात् "हानौ तूपायनशब्द-शेषत्वात्कुशा छन्दस्तुत्युपगानं वत्तदुक्त"मिति-सूत्रात् अथ च विदुषो देहोत्क्रमणसमये एव सुकृतदुःकृते निःशेषं नश्यते देहत्यागानन्तरं ताभ्यां भोक्तव्याभावात् "अश्व इव रोमाणि तस्य पुत्रा दायमुपयन्ती"त्यादिश्रुतेः ननु "स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छती"त्यारभ्य स आ-गच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृत-दुःकृते विधुनुते" इतिकौशीतक्यां मार्गे तन्नाश-श्रवणात्तेन विरोध इति चेन्न अर्थानुपपत्तिवला-त्सुकृतदुःकृते विधुनुत"इतिवाक्यशेषस्य पूर्वत्रान्वे-तव्यत्वात् सुकृतदुःकृते उत्क्रान्तिसमये विधुनुते-ततश्च देवयानमासाद्याग्निलोकमागच्छतीत्यन्वयः "साम्पराये तर्त्तव्याभावात्तथाह्यन्ये"इतिसूत्रात् अन्यथा तत्फलभोगस्याप्यवश्यम्भावाद्विरोधः ननु "तस्य पुत्रा दायमुपयन्ती"ति परकीयस्य संक्रान्तिः

श्रुता सा विरुद्धा तथात्वादर्शनादिति चेन्न पर-सङ्कल्पात्तथात्वोपपत्तेः यो हि विदुषां शुभं वाञ्छति तस्य सुकृतापत्तिर्यस्तु द्वेषादहितं सङ्कल्पयति तस्य दुःकृतापत्तिरिति शास्त्रादेवावगतं तथाऽऽह भगवान्मनुः प्रियेषु तेषु सुकृतमप्रियेषु च दुःकृतं विसृज्य ध्यानयोगेन ब्रह्म याति सनातन"मिति-"शप्यमानस्य तत्पापं शपनीयं नियच्छति" इति-स्मृत्यन्तरात् एवमुभयश्रुत्योरविरोधः "छन्दत उभ-याविरोधा"दितिसूत्रात् तस्मा दुत्क्रान्तिकाले एव विदुषः सर्वकर्मक्षयः सूक्ष्मदेहानुवृत्तिस्तु गत्यन्यथा-ऽनुपपत्त्या स्वीक्रियते शास्त्रमानेनैव गमनानन्तरं च परदेवतायां तस्य लय इति तात्पर्यार्थः "भूय-श्चान्ते विश्वमायानिवृत्ति"रितिश्रुतेः अथ चोपको-शलदहरादिविद्यास्वेव गतिः श्रूयते नान्यासु मधु-विद्याशाण्डिल्यादिविद्यासु तस्मादुपकोशलादि-मतामेव गतिरुपपद्यते नान्येषामिति चेन्न सर्वेषा-मपि विदुषां गतिरविरुद्धा श्रुत्यादिमानात् तस्मा-न्नोपकोशलादिविद्यावतामेव गमने नियमः श्रुति-स्तावच्छान्दोग्ये वाजसनेयके च पञ्चाग्निविद्याया-मर्चिरादिना सर्वब्रह्मनिष्ठानां गमनमाह "एवमे-

नहिदुःयेचैते ऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिष-
मभिसम्भवन्ती"ति "तद्य इत्थं विदुर्ये चेमे ऽरण्ये"
इत्यादिना तत्र ये इत्थं विदु"रिति पञ्चाग्निविद्या-
निष्ठान् ये चेमे ऽरण्ये इतिश्रद्धापूर्वकं ब्रह्मोपास-
कांश्चोद्दिश्यार्चिरादिगतिरुपदिष्टा "सत्यं त्वेव
विजिज्ञासितव्यं सत्यं ज्ञान"मित्यत्रसच्छब्दो ब्रह्म-
परः तपःशब्दोऽपि तेनैकार्थतस्तत्पर एवेत्यर्थः
अग्निर्ज्योतिरहः शुक्लः षरामासा उत्तरायणं तत्र
प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना"इत्यादि-
श्रुतिस्मृतिभ्यः "अनियमः सर्वेषामविरोधः शब्दा-
नुमानाभ्या"मितिसूत्रात् ननु यदुक्तं विदुषामुत्क्र-
मणकाले एव सुकृतदुःकृतनाशोऽर्चिरादिका गति-
श्चे"तितदयुक्तं वशिष्ठादीनां साक्षयत्तरवतां दुःखादि-
योगस्य देहान्तरप्राप्तेश्च शास्त्रसिद्धत्वादिति" चेन्न
आपातोक्तेः नहि ज्ञानिमात्रस्य देहवियोगसमये
सर्वकर्मक्षयो विवक्षितः अपितु येषां देहपाता-
नन्तरमेवार्चिरादिगत्या ब्रह्मप्राप्तिस्तेषामेव वशिष्ठा-
दीनां तु प्रारब्धस्याधिकारस्यासमाप्तत्वात् कर्म-
विशेषेणाधिकारविशेषं प्राप्तानां यावदधिकारसमा-
प्तितदाधिकारकर्मक्षयाभावात् तद्भोगाय तेषां

स्थितिरविरुद्धेति भावः "यावदधिकारमवस्थिति-राधिकारिकाणा"मितिसूत्रात् अथोक्तोपासनानां-साधनान्याह श्रुतिः "शान्तोदान्तस्तितिक्षुः समा-हितो भूत्वा ऽऽत्मन्येवात्मानं पश्ये"दित्यादिना तानिच विद्यासिद्ध्यर्थं मुमुक्षुणा ऽनुष्ठेयानि अन्त-रङ्गत्वात्तेषां"शमदमाद्युपेतः स्यात्तथापि तद्विधेस्त-दङ्गतया तेषामवश्यानुष्ठेयत्वा"दितिसूत्रात् अथ च वाजिछान्दोगयोराम्नाये प्राणविद्यायां श्रूयते "नह वा अस्यान्नं जग्धं भवति नानन्नं परिगृहीतं भवति नह वा एवम्विदि किञ्चनानन्नं भवती"ति-प्राणविदः सर्वान्नभोजनानुमतिः सा सर्वान्नानु-मतिः प्राणविद्यावतां सर्वदा कर्त्तव्योत प्राणात्यया-पत्ताविति संशये विशेषाश्रवणात् सर्वदेतिप्राप्ते समाधत्ते भगवान्सूत्रकारः "सर्वान्नानुमतिश्च प्राणा-त्यये तद्दर्शनात्" चशब्दोऽवधारणार्थः प्राणात्यये एव सर्वान्नानुमतिः सर्वान्नभक्षणानुज्ञा न सर्वदा कुतस्तद्दर्शनात् ब्रह्मविदामपि प्राणात्ययापत्तौ तथा-त्वश्रवणात् "किं पुनः प्राणविदः उषस्तिः किल चा-क्रायणो ब्रह्मविदग्रेसरो मटाचिहतेषु कुरुषु दुर्भिक्ष-दूषितेषु कुरुषु इभ्यग्रामे वसन्ननशनेन प्राणसंशया-

पश्नो ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमा-
काङ्क्षमाण इभ्यं कुल्माषान् वा दत्तं भिक्षमाण-
स्तेनोच्छिष्टेभ्यो ऽन्ये न विद्यन्ते इतिप्रत्युक्तः पुन-
रप्येतेषां मे देही त्युक्त्वा तेन चेभ्येोच्छिष्टेभ्य आदा-
य दत्तान् कुल्माषान् प्रगृह्यानुपानप्रतिग्रहमिभ्ये-
नार्थितमुच्छिष्टं मे पीतं स्यादिति वदन् चाक्रायणः
किमेते कुल्माषा अनुच्छिष्टा इतीभ्येन पर्यनु-
युक्तो न वा आजीविष्य मिमा नखादन्कामो
मउदकपानमिति कुल्माषाखादने स्वस्य प्राणसं-
शयापत्तिस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्यो-
च्छिष्टोदकपानं कामचारं निषिद्धं स्यादित्युक्त्वा
स्वभुक्तशेषं जायायै दत्त्वा तयाच रक्षिता दिनान्तरे
च पुनः प्राणसङ्कटे भार्यया दत्तानिभ्योच्छिष्टान्
स्वोच्छिष्टांश्च चखादेति ब्रह्मविदां प्राणसङ्कट एव
सर्वान्नानुमतिदर्शनादत्राविशेषदर्शनेऽपि प्राणात्यये
एव प्राणविदो ऽपि तथात्वमिति सिद्धम् "आहार-
शुद्धौ सत्त्वशुद्धि" रितिश्रुतेः अन्यथा तद्बाधापत्तेः
"अबाधाच्चेति" सूत्रात् "प्राणसंशयमापन्नो यो
ऽन्न मत्ति यतस्ततः लिप्यते न स पापेन पद्म-
पत्रमिवाम्भसे"ति अत्र सामान्यपत्तच्छब्दप्रयोगो

ऽन्येषामपि स्मृतेर्बाधनाच्च कामचारप्रतिषेधकश्रुतेश्च तस्मात् ब्राह्मणाः सुरां न पिबन्ति पाप्मना नोत्सृजा" इतिकठाम्नायात् अपि स्मर्यते "शब्दश्चातो कामचारे" इतिसूत्रात् अथ चानाश्रमिणां ब्रह्मविद्याया-मधिकारोऽस्ति नवेति संशये किं प्राप्तं नास्तीति कुतः तेषां विद्यासाधारणाश्रमधर्माभावात् अत्राह "अन्तरा चापि तु तद्दृष्टेः" अन्तरावर्त्तमानाना-मनाश्रमिणामप्यधिकारोऽस्त्येव कुतः तद्दृष्टेः रैक्व-भीष्मसम्वर्त्तादीनां ब्रह्मविद्यानिष्ठत्वदर्शनात् नच तेषामनुग्राहकधर्माभाव इतिवाच्यं यज्ञहोमाद्य-नैकान्तिधर्माभावेऽपि जपोपवासदानदेवाराधना-दीनामेकान्तितामाश्रमानियतानां विद्यानुग्राहक-धर्माणां तेष्वपि सत्त्वात् "जप्येनापि च संसिद्ध्ये-द्ब्राह्मणो नात्र संशयः कुर्यादन्यन्नवे" तिस्मृतेश्च श्रूयते चानाश्रमधर्मैस्तेषां विद्यानुग्रहः "तपसा ब्रह्मचर्येण श्रद्धया ऽऽत्मानमन्विष्य" दिति "विशेषा-नुग्रहश्चे" तिसूत्रात् तथाप्याश्रमित्वानाश्रमित्वयो-राश्रमित्वस्यैव वैशिष्ट्यमित्याह "अतस्त्वितरज्ज्या-योलिङ्गाच्चे" ति इतरदाश्रमित्वमेव ज्यायो वरिष्ठं भूयोधर्मकाल्पधर्मकयोरतुल्यकार्यत्वात् "लिङ्गाच्च-

नैतिब्रह्मन्निःपुण्यकृत्तैजसश्चे"ति देवयानेन पथा गमनमाश्रमिणामेव दर्शयति ये चेमेऽरण्ये इत्यरण्यवासिनामेव ग्रहणात् चत्वारआश्रमा इतिनियमात् "अनाश्रमी न तिष्ठेत दिनमेकमपि द्विज"इतिनिन्दावचनाच्चाश्रमित्वेनैव भाव्यम् अपि च विनष्टदारा अकृतदारा वा विधुरादयः केनचिद्धेतुना ऽऽश्रमप्रतिपत्त्यसम्भवे तेषामप्यपवर्गो जपादिसाधारणधर्मैर्विद्यानुग्रहादवगम्यते तथा ऽऽह याज्ञवल्क्यः "नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः अतो यदात्मनो ऽपथ्यं परस्य न तदाचरे"दिति इतिहासे च "विद्यावृत्तिविनीतस्य निगृहीतेन्द्रियस्य च आर्जवे वर्त्तमानस्य आश्रमैः किं प्रयोजन"मिति अथ च नैष्ठिकवैखानसपारिव्राजिकाश्रमेभ्यः प्रच्युतानां ब्रह्मविद्याधिकारो ऽस्ति नवेति संशये अस्तीति विधुरादिवदनाश्रमधर्मैस्तेषामपि विद्यानुग्रहसम्भवादिति प्राप्ते आह "तद्भूतस्य तु नातद्भावो जैमिनिरपि नियमात्तद्रूपाभावेभ्यः" तुशब्दः पक्षनिषेधार्थः तद्भूतस्य नैष्ठिकादिधर्मनिष्ठस्य नातद्भावः अनाश्रमित्वं न सम्भवति कुतः तद्रूपाभावेभ्यो नियमात् तद्रूपाणां नैष्ठि-

कादिरूपाणामभावास्तेभ्यः शास्त्रैर्नियमात् नैष्ठिकादिबृहद्धर्मनिष्ठान् स्वाश्रमधर्मत्यागान्नियच्छन्ति शास्त्राणि "ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुले वासयन्निति अरण्यमीयान्न ततः पुनरेयादिति सन्न्यस्याग्निं न पुनरावर्तये"दित्यादिभिः अतो विधुरादिवत्तेषामनाश्रमित्वासम्भवान्न ब्रह्मविद्याधिकारः जैमिन्याचार्योऽपि तथैव मन्यते किञ्च "ब्रह्मचर्यं समाप्य गृही भवे"दित्यारोहणविधिवदवरोहणविध्यदर्शनादित्यर्थः नन्वधिकारलक्षणे ऽवकीर्णी पशुश्च तद्वदिति "ब्रह्मचर्यावकीर्णी नैर्ऋतं गर्दभमालभेते"त्यादिना प्रच्युतब्रह्मचर्यस्य प्रायश्चित्तविधानात् कृतप्रायश्चित्तो ऽधिकारो स्याद्ब्रह्मविद्यायामित्याशङ्क्याह "नचाधिकारिकमपि पतनानुमानात्तदयोगा"दिति आधिकारिकं कर्म अधिकारलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकधर्मच्युतानां न सम्भवति कुतः तेषां पतनस्मरणात् प्रायश्चित्तायोगात् "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महे"ति स्मृतेः अपिशब्द उपकुर्वाणविषयकत्वद्योतनार्थकः प्रायश्चित्तस्य एके-

त्वस्य महापातकविलक्षणत्वादुपपातकत्वात्प्राय-श्चित्तभावं मन्यन्ते यथा मध्वशनादिनिषेधस्त-त्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकानां च समानं तदुक्तं स्मृतिकर्तृभिः "उत्तरेषां चैतदविरोधीति" गुरु-कुलवासिनां यदुक्तं तत् स्वाश्रमाविरोध्युत्तरेषामप्या-श्रमिणां भवतीत्यर्थः तथाऽत्रापि ब्रह्मचर्यच्यवने प्रायश्चित्तसम्भवादित्यर्थः "उपपूर्वमित्येके भाव-मशनवत्तदुक्त"मितिसूत्रात् उपपातकत्वे महा-पातकत्वे वोभयथापि तेषां वहिर्भूतत्वात् "आरूढो नैष्ठिक"मितिस्मृतेः शिष्टैस्तेषां साहित्यभोजनादि-व्यवहारो नास्तीत्यर्थः प्रायश्चित्ते कृते ऽपि तादृश-शुद्ध्यनुरूपयोग्यताभावादधिकारासम्भव इतिभावः "वहिस्तूभयथापि स्मृतेराचाराच्चे"तिसूत्रात् तस्य जपादिना पारमार्थिकफलभाक्त्वे ऽपि व्यवहारयो-ग्यता नास्तीति सिद्धान्तः अथेदानीं विद्योत्पत्ति-प्रकारमाह "आत्मा वा रे द्रष्टव्य" इत्यादिना ब्रह्म-दर्शनाय विधीयमानानि श्रवणमनननिदिध्यास-नानि श्रूयन्ते तानि चासकृदावर्त्तनीयानि नैकावृत्ति-मात्रं निदिध्यासनपदप्रयोगात् तस्य निरन्तरध्यान एव शक्तत्वात् अयमर्थः "ततस्तु तं पश्यति

निष्कलं ध्यायमान"इतिब्रह्मापरोक्षासाधारणोपाय-त्वेन श्रूयमाणं ध्यानं सकृत्कृतं ब्रह्मदर्शनाय न क्षमं भवति किन्त्वसकृदेवेति । "आवृत्तिरसकृदुपदेशा"दितिसूत्रात् "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुन"रितिस्मृतेश्च अथ यस्य ध्यानं नैरन्तर्येण निर्णीतं सो ऽशेषदोषासंस्पृष्ट-माहात्म्यः सार्वज्ञ्याद्यसङ्ख्येयस्वाभाविकसद्गुण-शक्तिवैभवः सर्वात्मा परब्रह्माख्यः श्रीभगवान्म-मात्मैवा ऽहंव तदात्मक इतितादात्म्यसम्बन्धेनैव-ध्येयो न प्रतीकालम्बनतयेति राद्धान्तः कुतः "एष मे आत्मा एष सर्वभूतान्तरात्मे"तिमहद्भि-रभ्युपगमात् "एष ते आत्मान्तर्यामी ऐतदात्म्य"मिदं सर्वं तत्त्वमसी"त्यादिना शिष्येभ्यस्तथैवोप-देशाच्च "आत्मेति तूपगच्छन्ति ग्राहयन्तिचे"ति-सूत्रात् "अहमात्मा गुडाकेश क्षेत्रज्ञं चापि मां विद्धी"त्यादि"वासुदेवः सर्व"मिति"अखिलमिद-महं च वासुदेवइति वासुदेवात्मकान्याहु"रित्यादि-स्मृतेश्च प्रतीकोपासने तु "नाम ब्रह्मे" त्युपक्रम्य प्राणपर्यन्तोपासनेषु नामादिप्रतीकस्योपासनं नतु परब्रह्मणस्तस्य तत्र तत्तदृष्ट्याऽनुसन्धानमात्रत्वात्

उपासनतारतम्यात् तत्परिच्छिन्नफलतारतम्यश्रवणाच्च "नेदं यदिदमुपासते" इत्यादि निषेधश्रवणाच्च प्रतीकस्य विश्वात्मत्वाद्यसम्भवाच्च तादात्म्यविधानशास्त्रविरोधाच्च तच्च ध्यानमुपासीनएवानुतिष्ठेत् नतु शयानस्तिष्ठन् गच्छन्वा शयनादीनां लयविक्षेपहेतुत्वात् लयादौ ध्यानासम्भवाच्च "आसीनः सम्भवादि"तिसूत्रात् अन्यथा ध्यानासिद्धेः ध्यानं च विजातीयप्रत्ययशून्यत्वे सति ध्येयाकारैकस्मृतिरूपं तदेव परिपाकापन्नं ध्रुवास्मृतिपराभक्तिशब्दाभिधेयं "सत्त्वशुद्धौ ध्रुवा स्मृतिः ॥ मद्भक्तिं लभते परा"मितिश्रुतिस्मृतिभ्यां तथाच स्थितौ गमने च विक्षेपात् शयने लयाच्च दुःसाध्यमितिभावः "ध्यानाच्चे"तिसूत्रात् तच्च ध्यानं नैश्चल्यसापेक्षं तदभावे तदसिद्धेः "ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौःध्यायन्तीवापो ध्यायन्तीव पर्वता"इत्यत्राचलत्वमपेक्ष्य ध्यायन्तिप्रयोगः तथाभूतं नैश्चल्यमासीनस्यैव सम्भवति नान्यथेत्यर्थः "अचलत्वं चापेक्ष्ये"तिसूत्रात् "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरं तत्रैकाग्रं मनः कृत्वा

यतचित्तेन्द्रियक्रियः उपविश्यासने युञ्ज्याद्योग-मात्मविशुद्धये" इतिस्मृतेश्च अथ नात्र कश्चिद्देश-कालादिनियमः किन्तु यस्मिन्देशे च काले च चित्तैकाग्र्यं स्यात्तत्रैव ध्यानं कुर्यादित्यर्थः "यत्रै-काग्रता तत्राविशेषा" दितिसूत्रात् "समे शुचौ-शर्करा वह्निवालुकाविवर्जिते शब्दजलाश्रयादि-भिर्मनोऽनुकूलेन च चक्षुः पीडने गुहानिवाताश्रयणे प्रयोजये" दित्यादिश्रुतौ विशेषादर्शनात् तच्च मोक्षा-साधारणध्यानमामरणान्निरन्तर्येणानुष्ठेयं नत्वल्प-कालानुष्ठेयं तथैव श्रवणात् "स खल्वेवं वर्त्तयन् याव-दायुषं ब्रह्मलोकमभिसम्पद्यते अथ खलुक्रतुमयोऽयं पुरुषः स यावत्क्रतुरस्माल्लोकात्प्रैति एवं क्रतुं ह्यमुं लोकं प्रत्याभिसम्भवती" ति अत्र क्रतुशब्दो मानस-व्यापारपरः क्रतुमयो ध्यानप्रधान इत्यर्थः अथैवं-भूतेन ध्यानपरिपाकेन ध्रुवास्मृत्याख्यज्ञानाधिगमे सिद्धे सति तदुत्तरभाविनोः क्रियमाणयोः पुण्य-पापयोरश्लेषः तत्प्राग्भूतयोः सञ्चितयोश्च तयोर्ना-शश्च स्यात् "यथा पुष्करपलाशे आपो न श्लिष्यन्ते यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिश्रुतिभ्यः "तदधिगमे उत्तरपूर्वा-

ययोरश्लेषविनाशौ तद्व्यपदेशा"दितिसूत्रात् नचात्र पापस्यैवाश्लेषविनाशश्रवणात्पुण्यं तु विदुषा भोक्तव्यमेव तस्य शास्त्रीयत्वादिति वाच्यं शास्त्र-दृष्ट्या पुण्यस्यापि संसरणहेतुत्वाविशेषेण पाप एवान्तःपातित्वात् उभे सुकृतदुःकृते निर्दिश्य सर्वे-पाप्मानो निवर्त्तन्ते "तत्सुकृतदुःकृते विधुनुते" इतिश्रुत्यन्तरात् "इतरस्याप्येवाश्लेषः पाते"त्विति-सूत्रात् "उभे वै य एते तरती"तिश्रुतेः शरीरपाते तु मोक्ष इत्यर्थः तेच पुण्यपापरूपे कर्मणी अना-रब्धकार्ये एव नश्यतः शरीरपातविलम्बश्रुतेः तस्य "तावदेव चिरं यावन्न विमोक्ष्ये ऽथ सम्पत्स्ये"इत्या-दिअनारब्धकार्ये एव "पूर्वे तदवधे"रितिसूत्रात् ननु प्रारब्धे कर्मणि विद्यमाने कथं मोक्ष इत्या-शङ्क्याह "भोगेन त्वितरे क्षपयित्वा ऽथ सम्पद्यते" इति प्रारब्धकर्म तु भोगैकनाश्यं तद्भोगसमाप्तौ मोक्षइत्यर्थः प्रारब्धं कर्म यदिह्येकशरीरभोग्यं तर्हि तच्छरीरावसाने मोक्षः अनेकशरीरभोग्यं चेदनेक शरीरावसाने इति राद्धान्तः "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी"तिस्मृतिः प्रारब्धकर्मविषयैवेति सिद्धं अयंभावः विदुषो विद्यामाहात्म्यात्सञ्चित-

क्रियमाणयोरश्लेषविनाशौ प्रारब्धस्य तु कर्मणो भोगेन विनाशः तत्र प्रारब्धस्यैतच्छरीरेणेतरशरीरैर्वा भुक्त्वा विनाशान्मोक्ष इतिसङ्क्षेपः ॥

कृष्णप्रसादाद्धरिदर्शनेन मुक्तिर्नृणां वेदशिरोऽभिगीता श्रीसूत्रकारेण तदर्थकानि प्रोक्तानि सर्वाणि हि साधनानि ॥ १ ॥

मोक्षोपायाभियुक्तानां भजतां तत्पदाम्बुजं तनोति परमं श्रेयो यस्तं कृष्णमहं भजे ॥ २ ॥

इति श्रीमाधवमुकुन्दचरणेन विरचिते
परपक्षगिरिवज्राख्ये शारीरकहार्दसञ्चये
साधनाख्यो नाम तृतीयोऽध्यायः
समाप्तः ॥ ३ ॥



श्रीहरिः ॐ ।

श्रीमतेनिगमानन्दायनमः ।

# परपक्षगिरिवज्रः ।

## चतुर्थोऽध्यायः ।

सङ्गृहीतानि मोक्षस्य साधनानि तृतीयके ।
चरमेऽस्मिन्फलं प्राह भगवान्बादरायणः ॥ १ ॥

वेदान्तशास्त्रस्य फलं निःश्रेयोमोक्षरूपं भगवद्भावापत्तिलक्षणमस्मिंश्चतुर्थाध्याये निरूप्यते सूत्रकृद्भिः तत्रैकविंशतिप्रकारदुःखध्वंसो मोक्ष इति-गौतमीयानामभ्युपगमः तथाहि "तदत्यन्तविमोक्षोऽपवर्ग" इतिनैयायिकाः अत्र तच्छब्देन सूत्रोपात्तानामेकविंशतिप्रकारकदुःखानां परामर्शः तानि च शरीरंषडिन्द्रियवर्गः षट् विषयाः षड्बुद्धयः सुखं दुःखं चेति आत्यन्तिकत्वं च स्वसमानाधिकरण-स्वप्रागभावाधिकरणक्षणावृत्तित्वोभयसम्बन्धेन ॥

दुःखध्वंसवदन्यत्वमिति तत्र शरीरेन्द्रियविषय-
बुद्धीनां दुःखसाधनत्वाद्दुःखस्य स्वरूपतः पूर्वापर-
दुःखसम्वलितत्वात्सुखस्यापि दुःखत्वमिति "दुःख-
जन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तद-
नन्तरापायादपवर्ग" इतिसूत्रात् अस्यार्थः मिथ्या-
ज्ञानापाये गणारूपस्य दोषस्यापायः ततःप्रवृत्त्य-
पायः ततो जन्मापायः ततो दुःखापाय इतिचेन्न
तस्य पुरुषार्थत्वाभावात् पुरुषव्यापारासाध्यत्वात्
अतीतस्य स्वविरोधिगुणान्तरनाश्यत्वात् आगा-
मिनः स्वोपादाननाशाशक्यत्वाद्वर्त्तमानस्यापि स्वो-
त्पन्नगुणनाश्यत्वात् किञ्च नित्यसुखाभिव्यक्तिर्मुक्तिः
न दुःखप्रहाणिमात्रं नैतावन्मात्रमुद्दिश्य प्रवृत्तिः
सम्भवति प्रवृत्तिसामान्यं प्रति इष्टसाधनताज्ञानस्य
प्रवर्त्तकत्वात् नन्वनिष्टाभावसाधनताज्ञानमपि
प्रवर्त्तकमिति चेन्न अनिष्टाभावस्यापीष्टसिद्धावेव
नियोगात् कण्टकविद्धपादस्य कण्टकापनयने प्रवृ-
त्तिर्न केवलं कण्टकाभावोद्देशेन किन्तु यथेष्टप्रचार-
रूपेष्टसिद्ध्यर्थेति प्रसिद्धम् तस्मान्मुक्तौ नित्यसुखा-
नुभवो ऽप्यकामेन त्वया ऽभ्युपगन्तव्य इतिदिक्
अथ दुःखनिवृत्तिमात्रं मोक्षः आनन्दादिशब्दाश्च

दुःखाभावमात्रावलम्बिनो यदि च सुखरागेण वर्त्तेत ततो बन्ध एव स्यात् रागस्य बन्धहेतुत्वात् शरीरेन्द्रियमनसां निवृत्तौ विज्ञानोत्पत्तिहेत्वभावात् मुक्तो निःसंज्ञः पाषाणकल्पोऽवतिष्ठते इतिवैशेषिका आहुः तदयुक्तम् असम्भवात् तथाहि यदुक्तं रागो बन्धहेतुरिति तदयुक्तं शास्त्रादयं विभागो गम्यते यथा स्वदारगमनं धर्माय परदारगमनञ्चाधर्म्माय तथाविधविषयको रागो बन्धहेतुः निरतिशयानन्द परब्रह्मसर्वात्मविषयकश्च रागो मोक्षहेतुः तथा "ह्याहाप्रकाममीप्सितेन विशेषकःस्म" इति नाप्यानन्दादिशब्दो दुःखाभाववचनः शतगुणोत्तरक्रमेणोत्कर्षापकर्षौ प्रतिपाद्य निरतिशयस्य ब्रह्मानन्दस्योपदेशात् "यतो वाचो निवर्त्तन्ते ऽप्राप्य मनसा सह ॥ आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने" तिमन्त्रात् नहि निरुपाख्यस्याभावस्योत्कर्षापकर्षौ सम्भवतः लोके ऽपि दुःखतारतम्यं सुखतारतम्यं च परस्परविलक्षणं प्रत्यक्षेणानुभूयते किञ्च यदि पाषाणकल्प एव मोक्षस्तेऽभीष्टस्तर्हि पाषाणादीनामेव मुक्तत्वमभ्युपगन्तव्यं देवानां प्रियैस्तर्कनिपुणैः किं कल्पशब्दप्रयोगप्रयासेनेति सङ्-

क्षेपः साङ्ख्यास्तु चैतन्यस्वभाव आत्मा तस्य द्रष्टुः स्वरूपचैतन्यमात्रे ऽवस्थान मसंप्रज्ञातयोगनिष्पत्तौ मोक्ष इतिमन्यन्ते तच्चिन्त्यं ब्रह्मानन्दाभावेन निरतिशयानन्दापत्त्यभावात् पातञ्जलास्तु असतो ब्रह्मभावस्य योगानुष्ठानाज्जन्ममोक्ष इत्याहुस्तदपि चिन्त्यम् असतो योगात् शशशृङ्गादावतिव्याप्तेश्च "ब्रह्मैव सन् ब्रह्माप्येती"तिविरोधाच्च पञ्चक्लेशादिध्वंसश्चास्मत्पक्षे ऽपि समान एवेति सङ्क्षेपः जैमिनीयास्तु अपहतपाप्मत्वादिसत्यसंकल्पत्वावसानं सर्वज्ञत्वसर्वैश्वरत्वादिरूपब्राह्मचैतन्यसम्पत्तिर्मोक्षः "य आत्मा ऽपहतपाप्मे"त्यादिश्रुत्युपन्यासेन "स तत्र पर्यैति जक्षन् क्रीड़न्नममाणः स्त्रीभिर्वा यानैर्वे"तिश्रुत्यैश्वर्यावेदनात् "ब्राह्मेण जैमिनिरुपन्यासादिभ्य" इतिसूत्रात् "एवं वा अरे अयमात्मा ऽनन्तरो वाह्यः प्रज्ञानघनएवे"त्यादिश्रुत्या चैतन्यमात्रमेवात्मतत्त्वं तन्मात्रेणाभिनिष्पत्तिर्मोक्ष" इत्यन्येषां सिद्धान्तः "चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमि"रितिसूत्रात् अथ सिद्धान्तमाह "एवमप्युपन्यासात्पूर्वभावादविरोधं वादरायण"इतिपूर्वोक्तब्रह्मभावात् अपहतपाप्म-

त्वादिसम्पन्नविज्ञानस्वरूपाविर्भावादविरोधं मोक्ष-स्वरूपं भगवान्बादरायणो मन्यते इति सूत्रगताक्ष-रार्थः तथात्वे च न केनापि वाक्येन विरोधः ब्रह्म-भावश्च वाक्योक्तप्रकारो बहुविधः तथाहि "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति-वाक्यं यावदात्मवृत्त्यनवच्छिन्नब्रह्मानुभवितृत्वं ब्रह्म-भावपदार्थं वदति "स एव ज्योतिषां ज्योति" रिति श्रुत्यन्तरात् परञ्ज्योतिः श्रीभगवन्तं परब्रह्मपुरुषो-त्तमं उपसम्पद्य साक्षात्स्वात्मत्वेनानुभूय स्वेन रूपेण तत्स्वरूपगुणादिविषयकानवच्छिन्नानुभवि-तृत्वरूपेण तदात्मकतया ऽवतिष्ठते इतिश्रुत्यर्थः "निरञ्जनः परमं साम्यमुपैती" त्यत्र परमं साम्यं भावपदेनाभिधीयते परमसाम्यं च स्वरूपेण गुणा-दिना च सादृश्यं तथाच ज्ञानस्वरूपत्वात्स्वरूप-सादृश्यं अपरिच्छिन्नज्ञानधर्मकत्वात् गुणसादृश्यं च तत्त्वं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं नियन्तृत्वस्वतन्त्रत्वादिना ब्रह्मभिन्नत्वे सति सर्वज्ञा-पहतपाप्मत्वादिभूयोब्रह्मगतधर्मवत्त्वात् लक्षण-समन्वयः "सर्वं हि पश्यः पश्यती" "तिसर्वश्रुतेः जगद्व्यापारवर्ज" मिति भेदकसूत्राच्च नच "स-

स्वराड्भवती"तिश्रुतिविरोध इतिवाच्यं स्वाराज्य-राजनाम्यब्रह्मादिवन्दनीयत्वस्य तत्र सत्त्वात् नापि "नारायणो सायुज्यमाप्नोती"ति श्रुतिविरोध इति-वाच्यं तस्या अपि त्वदभिप्रेतार्थाभावात् सह युज्यते इति सयुक् सयुजो भावः सायुज्यं नित्य-सम्बन्ध इत्यर्थः भगवतस्तादात्म्यसम्बन्धो ऽत्र भावपदार्थः नतु स्वरूपैक्यमस्यार्थः सायुज्यस्य शक्यार्थाभावात् ननु "यथा नद्यः स्यन्दमानाः समुद्रे ऽस्तं गच्छंति नामरूपे विहाय तथा विद्वा-न्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैती"तिश्रुति-विरोध इति चेन्न भेदस्य सत्त्वात् नहि जले निक्षिप्तं जलान्तरं तत्स्वरूपैक्यं भजते किन्तु नित्ययोगमेव सावयवद्रव्यत्वात् नद्यादीनां प्रावृषादिऋतुविशेषे वृद्धिह्रासदर्शनाच्च नच समुद्रे वृद्धिह्रासादर्शनात्त-त्रैक्यमेवेति वाच्यं सावयवद्रव्यत्वेन नदीदृष्टान्तेन च तत्राप्यनुमातुं शक्यत्वात् तत्रापि तरङ्गभेददर्श-नाच्च "परं पुरुषमुपैती"तिकर्मकर्त्तृव्यपदेशादपि भेदसिद्धिः सुकरेति नच "ब्रह्म वेद ब्रह्मैव भवती"ति सावधारणश्रुतिविरोध इति वाच्यं बृहज्ज्ञानगुण-योगेन तत्तायास्तत्रापि सुवचत्वात् अन्यथा "ब्रह्म-

विदाप्नोति पर"मिति कर्मकर्तृबोधकश्रुतिबाधस्य तवापि साम्यात् ननु "ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप"इत्यादिवाक्येऽन्तःप्रवेशोक्तेः तथात्वेऽत्र भेदानुपलब्धेरितिचेन्न श्रीभगवतो विश्वरूपस्यान्तः प्रवेशविवक्षया ऽविरोधात् भिन्नस्यैव प्रवेशघटनाच्च "तत्रैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरं मम देहे गुडाकेशे"ति श्रीमुखोक्तेः "पश्यामि देवांस्तव देव देहे"इतिश्रोतुरर्जुनस्यानुभवपूर्वोक्तेश्च अयमभिप्रायः प्रवेशोऽत्र स्वस्य चेतनाचेतनरूपविश्वस्य च ब्रह्मात्मकत्वात् "ऐतदात्म्यमिदं सर्व"मितिश्रुतेः तत्तादात्म्यानुभवपूर्वकं विश्वरूपे भगवति तच्छक्त्यात्मना ऽवस्थानं तस्य सर्वात्मनो जगदाधारत्वाद्विश्वं जगत्सर्वदा तत्रावतिष्ठते परापरात्मकशक्तिरूपत्वाद्विश्वस्येति निर्विवादः "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूता"मिति श्रीमुखोक्तेः तथैव सर्वाधिकारिकाणामधिकाररूपाः शक्तयो ऽपि तस्यैव तत्रैवैकान्ततया तासामवस्थानात् सृष्टिसमये तदधिकारयोग्यतापन्नानां पुण्यात्मनां ब्रह्मरुद्रादिपदव्यारोहणार्हाणां जीवविशेषाणां तत्तद्भौतिकैकदेशकार्यरूपजगत्सृजनसंहरणादियोग्याभिः

स्वासाधारणशक्तिभिर्युनक्ति प्रलयसमये च नान्
विश्वाधिकारिणो ब्रह्मादींस्ताभिर्वियुनक्ति परन्तु
तासां शक्तीनां स्वाभाविकत्वनित्यत्वादिभिस्तत्र
नित्यावस्थानादव्यभिचारिणी अनपायिनी स्थिति
रिति विष्णुधर्मे "ब्रह्मा शम्भुस्तैथवार्कश्चन्द्रमाश्च
शतक्रतुः एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा
जगत्कार्यावसाने तु वियुज्यन्ते स्म तेजसे"त्यादि
तथैव मुक्तानामपि भगवति तदात्मकत्वस्वरूपाविर्भा-
वपूर्वकं तच्छाश्वत्यनुभूत्यवस्थानमप्यविरुद्धं तच्छ-
क्तित्वाविशेषादिति वेदान्तरत्नमञ्जूषायां श्रीपुरु-
षोत्तमाचार्यपादैस्तथैवोक्तत्वात् सर्वः श्रीभगवद्गीतै
कादशोऽध्यायो ऽत्र प्रमाणत्वेना नुसन्धेय इति तत्-
सिद्धं मोक्षावस्थायामपि भेदावस्थानं भेदज्ञानादपि
मोक्षश्रवणात् "जुष्टं यदा पश्यत्यन्यमीशं ॥ तन्महि-
मानमिति वीतशोकः ॥ पृथगात्मानं प्रेरितारं च
मत्वा जुष्टस्ततस्तेनामृतत्वमेती"त्यादिभिः तथैवोक्तं
सिद्धान्तसेतुकायां श्रीसुन्दरभट्टपादैः श्रीभगवदन
वच्छिन्नानुभूत्या स्थितिर्भगवत्प्राप्तिः सैव भग-
वद्भावापत्तिरिति तथाचाह पराशरः "निरस्ताति-
शयाह्लादसुखभावैकलक्षणा भेषजं भगवत्प्राप्ति-

रेकान्तात्यन्तिकी मते"तिभगवत्प्राप्तिर्भवजं पूर्वोक्त-संसारबन्धनभूतस्य रोगस्येतियोजना तामेव विशि-नष्टि निरस्तेति निरस्तोऽतिशयाह्लादो यस्मात्तथा-भूतेन सुखेन यो भावोऽवस्थानमेकमसाधारणं लक्षणं यस्याः सा कालादिपरिच्छेदरूपव्यभिचार-शून्यत्वं दर्शयन्नाह ऐकान्तात्यन्तिकीति तत्र प्रमाण-माह मतेति शास्त्रमुखेनेतिशेष इति सङ्क्षेपः केचित्तु प्रतिबिम्बो जीवः बिम्बस्थानीयोहीश्वरः उभयानुस्यूतं शुद्धं चैतन्यमिति मुक्तस्य यावत् सर्वमुक्तिसर्वज्ञत्वसर्वकर्तृत्वसर्वैश्वरत्वसत्यकामत्वा-दिगुणगणाढ्येश्वरभावापत्तिरिष्यते यथाऽनेकेषु दर्पणेष्वेकमुखस्य प्रतिबिम्बे सत्येकस्य प्रतिबिम्ब स्योपाधिविलये बिम्बभावापत्तिस्तथैकस्मिन्प्रति-बिम्बे विद्योदयेन तदुपाधिलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानमवश्यम्भावात् नच मुक्तस्या विद्याभावात्सत्यकामादिगुणविशिष्टसर्वैश्वरत्वानु-पपत्तिरितिवाच्यं तदविद्याभावेऽपि तदानीं बद्ध-पुरुषान्तराविद्यायाः सत्त्वात् नहीश्वरस्येश्वरत्वं सार्वज्ञ्यादिगुणवैशिष्ट्यं च स्वाविद्याकृतं तस्य निर्गुणनिरञ्जनत्वात् किन्तु बद्धपुरुषाविद्याकृत-

मेवेतिराद्धान्तः "एवमप्युपन्यासादि"तिसिद्धान्त-
सूत्रेण वस्तुदृष्ट्या चैतन्यमात्रत्वे ऽपि पूर्वोक्तगुण-
कलापस्योपन्यासाद्यवगतस्य मायामयस्य बद्ध-
पुरुषव्यवहारदृष्ट्या सम्भवात् न श्रुतिद्वयविरोध-
इतिसूत्रयामास भगवान् वादरायणः तथैव भग-
वान्भाष्कारोऽपि सूत्रत्रयमुक्तार्थपरत्वेन व्याकुर्व-
न्नीश्वरभावापत्तिं स्पष्टमनुमेने भामतीप्रबन्धप्रभृत-
यश्च श्रुत्युपबृंहितमिदं सूत्रजातंभगवद्भाष्यकार-
स्योदाहृतं वचनजातं च तथैवानुवर्त्तते तस्मान्मुक्ता-
नामीश्वरभावापत्तेरेवावश्याभ्युपेयत्वादसम्भव एव
प्रतिविम्वेश्वरवादे दोषस्तदाहुः कल्पतरुकाराः
"न माया प्रतिविम्वस्य विमुक्तैरुपसृप्यते इती"-
त्याहुस्ततुच्छम् असम्भवात् तथाहि न तावद्विम्व-
प्रतिविम्वभावः सम्भवति परेशजीवयोः पूर्वमेव
निरस्तत्वात् नापि मुक्तस्ययावत्सर्वमुक्तिसार्व-
ज्ञ्यादिसम्पन्नेश्वरभावेनावस्थानं पुनर्भावान्तराप-
त्तिरिति वक्तुं शक्यः असम्भवात् तथाहि मुक्तस्ये-
श्वरभावापत्तिः स्वरूपेण विवक्षिता सार्वज्ञ्यादि-
धर्मेण वा नाद्यः स्वरूपनाशापत्तेः "स्वेन रूपेणाभि-
निष्पद्यते"इतिश्रुत्या स्वरूपापत्तेरेव विधानान्नतु

स्वरूपनाशस्य एतदुक्तं भवति ईश्वरभावापत्तिः किं जले निक्षिप्तजलवदेकीभावेन पृथग्ग्रहणायोग्यत्व-मात्रं वा जीवस्वरूपवाधो वा आद्ये इष्टापत्तिः तवा-भिप्रेताद्वैतभङ्गश्च नान्त्यः स्वरूपनाशापत्तेरिति किञ्च विम्वप्रतिविम्वरूपौ जीवेश्वरौ वस्तुरूपौ मिथ्यानिर्वचनीयौ वा शशशृङ्गवत्तुच्छौ वा नाद्यः परपक्षप्रवेशात् नापि द्वितीयः वन्धमोक्षादिप्रति-पादनस्य वैयर्थ्याच्च वस्तुभूताद्वितीयनिर्विशेषस्य वन्धानर्हत्वेन वद्धस्य चावस्तुत्वेन को वद्धो मुक्त-श्चेति प्रश्नस्य निरुत्तरत्वात् अतएव नतृतीयः मे माता वन्ध्येतिवच्छास्त्रप्रणयनादौ वाक्यमूक-त्वापत्तेः नापि सार्वज्ञ्यादिधर्मेणेति द्वितीयः विकल्पा-सहत्वात् कोऽत्रात्र भावपदार्थः सार्वज्ञ्यकल्पाश्रयत्वं वा सार्वज्ञ्याद्याश्रयत्वं वा नाद्यः अनङ्गीकारादप-सिद्धान्तापत्तेः परपक्षप्रवेशाच्च नान्त्यः प्रमाणा-भावादसम्भवाच्च अन्यथा ऽनेकेश्वरत्वापत्तेः किञ्च नहि भगवदीयैश्वर्यस्य मायामयत्वे पुनर्निवृत्तौ च मानमस्ति यतस्तन्निवृत्त्या पुनर्भावान्तरापत्तिः सुवचा स्यात् नच "भूयश्चान्ते विश्वमायानिवृत्ति" रितिश्रुतिरेवात्रमानमित्याशङ्कनीयं तस्याः परमे-

श्वरभावापत्तिरूपमोक्षप्रतिबन्धकीभूतविश्वमाया-
निवृत्तिविधानपरत्वात् "मामेव ये प्रपद्यन्ते माया-
मेतां तरन्ती"तिश्रीमुखोक्तेः एताभ्यांश्रुतिस्मृति-
भ्यां भगवदनुग्रहसहकृतसाधनपरिपाकेन जीवा-
नामेव भगवन्मायातरणं प्रतिपाद्यते तत्रैव तयोः
प्रामाण्यं च सूपपन्नं नतु भगवतःस्वाभाविकनित्य-
सार्वज्ञ्यादिनिवृत्तौ तथात्वे ऽनाप्तत्वप्रसङ्गात् एतेन
यदुक्तं परमेश्वरस्यैश्वर्यं सार्वज्ञ्यादिसत्यसङ्कल्पा-
दिवैशिष्ट्यञ्च ॥ बद्धजीवाविद्याकल्पितं न स्वाभाविकं
तस्य निर्विशेषत्वात् नत्वीश्वराविद्याकृतं तस्य
निरञ्जनत्वादिति तदपि निरस्तं स्वबुद्धिपरिकल्पित-
त्वेन प्रमाणशून्यत्वात् प्रत्युत तत्प्रत्यनीकत्वश्रव-
णात् "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी"ति यदप्युक्तं सिद्धान्तसूत्रस्य वस्तुदृष्ट्या
चिन्मात्रत्वे ऽपि पूर्वोक्तगुणकलापोपन्यासाद्यव-
गतमायामयस्येत्यादिविवक्षितार्थपरत्वं तदपि
स्वकपोलकल्पितं सूत्रार्थस्य पूर्वमेवोक्तत्वात् किञ्च
यदि चैतन्यमात्रापत्तिरेव मोक्षस्वरूपमभिप्रेतं तर्हि-
पूर्वोक्तौडुलोमिपक्षानुगामित्वमेव भवतामभि
मत किं पुनः सूत्रकारसिद्धान्तेन सूत्रकृद्भिस्तु

कुत्रापि पारमेश्वरीयैश्वर्यादिधर्माणां मायिकत्वानभिधानात् अपितु "विवक्षितगुणोपपत्तेश्च ॥ सर्वधर्मोपपत्तेश्चे"त्यादिसूत्रैरुपपन्नतयाऽत्यादरेणाभ्युपगमात् नापि तस्य त्वदभिप्रेतनिर्विशेषत्वं ईशत्वनिर्विशेषत्वयोः सामानाधिकरण्यासम्भवात् अन्यथा सर्वप्रमाणाविषयत्वेन शशशृङ्गसाम्यापत्तेः प्रमाणविषयत्वेच सविशेषत्वस्यावश्यम्भावित्वाच्च सच मोक्षो भगवदनुग्रहैकलभ्यतत्साक्षात्कारैकलभ्यः "यमेवैष ॥ भिद्यते हृदयग्रन्थिः ॥ यदापश्यः पश्यते रुक्मवर्ण"मित्यारभ्य "परमं साम्यमुपैती"-त्यादिश्रुतेः तस्मिन्निति सर्ववेदान्तशास्त्रप्रसिद्धे ब्रह्मणि पुरुषोत्तमे द्रष्टे साक्षादनुभूते सति हृदयग्रन्थिः अनादिकर्मनिरूपितमायासम्बन्धः "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्वि"तिश्रीमुखोक्तेः भिद्यते ध्वंसमापद्यते स्वयमेवेति कर्मकर्तृप्रयोगः साधनान्तरनिरपेक्षत्वसौकर्यद्योतनार्थः सूर्यप्रकाशे तमोवत् तत्कार्यभूताः सर्वसंशयाः आत्मपरमात्मसाधनफलसम्बन्धादिविषयकाः स्वयमेव छिद्यन्ते तत्र हेतुमाह अस्य कर्माणि क्षीयन्ते इति अस्य भगवत्प्रसादैकविषयस्य चरमजन्मनो

विदुष स्साक्षाद्द्रष्टुः सञ्चितक्रियमाणप्रारब्धाख्यानि सर्वकर्माणि क्षीयन्ते पुण्यापुण्यरूपाणि क्षयमापद्यन्ते परमेश्वरं विशिनष्टि परावरे इति मनुष्यादिभ्यः परे उत्कृष्टा ब्रह्मरुद्रादयः अवरे निकृष्टा यस्मात् स तस्मिन्निति सङ्क्षेपार्थः किञ्च यदेति सामान्योक्त्योत्तरायणादिकालव्यावृत्तिः पश्य इति श्रीभगवत्साक्षात्कारानुभूत्याश्रयः ईशमिति चेतनाचेतनान्तर्यामिणं सर्वात्मानं पश्यते अपरोक्षेण स्वान्तरात्मतया ऽनुभवति तदेति अव्यवहितकाल एव तत्र हेतुमाह निरञ्जन इति त्रिविधकर्मतन्निमित्तकदेहेन्द्रियसूक्ष्मप्रकृतिसम्बन्धाख्यत्रिविधाञ्जनेन वियुक्तः सन् परमंसाम्यमुपैतीति योजना निर्द्धर्मवस्तुज्ञानात् मोक्षमभ्युपगच्छतान्दुराग्रहवतां वाग्विसर्गस्तम्भनार्थं विशेषणानि वक्ति भगवती श्रुतिः रुक्मवर्णमित्यादीनि तत्र रुक्मवर्णमिति विग्रहवत्त्वसूचकं विशेषणं सौन्दर्यलावण्यसौकुमार्यमाधुर्यमार्दवसौगन्ध्यसौरस्यानन्तकल्याणगुणाश्रयपरमयोगिध्येयध्यातृकर्मभर्जिष्णु सर्वपुरुषार्थसुरद्रुमसच्चिदानन्दमूर्त्तिकमित्यर्थः "यथा रजनं वासः यदात्मको भगवांस्तदात्मिका व्यक्तिः

किमात्मको भगवान् ज्ञानात्मक इत्यादि हिरण्यकेशः हिरण्यश्मश्रु आप्रणखात्सुवर्णः सर्वगन्धः सर्वरस" इत्यादिश्रुतिभ्यः अथ तल्लक्षणमाह कर्तारमिति जगज्जन्मादीनामितिशेषः अथोपादानभूतोऽपि स एवेत्याह ब्रह्मयोनिमिति ब्रह्मशब्दवाच्यप्रकृतिचतुर्मुखवेदादिरूपस्योपादानं योनिश्चेति न्यायात् "स्वयमात्मानमकुरुते"त्यादिश्रुतेश्च यद्वा ब्रह्मयोनिमितिविशेषणं प्रमाणपरं ब्रह्माख्यो वेदः योनिः कारणं ज्ञापको यस्य तत् "शास्त्रयोनित्वात् "तं त्वौपनिषद"मित्यादिशास्त्रात् किञ्च पुरुषमिति पूर्णं सर्वान्तरात्मानं वा अधिकारिविशेषणमाह विद्वानिति बृहज्ज्ञानाश्रयः सन्निति यावत् साक्षात्कारमाहात्म्येन ध्वस्तज्ञानावरणकत्वात् घटस्थदीपस्य ध्वस्तघटरूपावरणकप्रभावत् ज्ञानस्य व्याप्तत्वादित्यर्थः ननु "क्षीयन्ते चास्य कर्माणी" त्यत्र कर्मपदं प्रारब्धेतरद्विविधकर्मपरमेव नच बहुवचनविरोध इति वाच्यं एकैकस्यापि सञ्चितादिकर्मणो ऽसङ्ख्यत्वात् अन्यथा साक्षात्कारसमय एव विदुषो देहपातप्रसङ्गात् जीवन्मुक्तप्रभावप्रसङ्गाच्चेति चेन्न इष्टापन्नत्वात् नच

तथात्वे तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशा-
नित्यादिशास्त्रबाधस्तत्र प्रारब्धेतरस्यैव कर्मणो-
विनाशोक्तेरिति वाच्यं तस्य निदिध्यासनपरि-
पाकरूपध्रुवास्मृत्याख्यपरोक्षज्ञानविषयत्वेन पूर्व-
मेव व्याख्यातत्वात् नच परोक्षज्ञानेन तथात्वा-
सम्भवः श्रुतिप्रमाणसिद्धत्वात् "स्मृतिलम्भे सर्व-
ग्रन्थीनां विप्रमोक्ष"इतिश्रुतेः किञ्चापरोक्षज्ञाना-
न्मूलाज्ञाननिवृत्तिरभिप्रेता नवेति नाद्यः कारण-
नाशे कार्यस्थित्ययोगात् भावरूपकार्यस्य निरु-
पादानस्थित्ययोगात् सोपादानत्वं चेत् किमत्रो-
पादानं ब्रह्मैवान्यद्वा आद्ये ब्रह्मणोऽकारणत्वेन
तदुपादानत्वासम्भवात् अन्यथा कारणस्य
नित्यत्वेन कार्यस्यावश्यम्भावात् अनिर्मोक्षप्रसङ्गः
नद्वितीयः अविद्यातत्कार्याभ्यां ह्यन्यस्यासत्त्वात्
तस्मान्मूलाविद्यानाशे प्रारब्धस्याप्यवस्थातुमश-
क्यत्वात् तन्तुनाशे पटस्येव नच प्रारब्धजन्यभोग-
निर्वाहकतया कियत्कालमविद्याया अनुवृत्त्यङ्गी-
कार इतिशङ्कनीयं विद्याया अविद्योपमर्दकत्व-
स्वभावहानिप्रसङ्गात् यस्मिन् सत्यग्रिमक्षणे
यत्सत्त्वं यद्व्यतिरेकेच यस्याभावस्तत्तत्साध्यमिति

लक्षणोक्तेः ॥ तथाच यस्मिन्ब्रह्मापरोक्षज्ञाने ऽविद्यानिवृत्तेः सत्त्वं तद्व्यतिरेके चाविद्यानिवृत्त्यभाव इतिब्रह्मसिद्धकारसिद्धान्तभङ्गाच्च नच प्रारब्धोत्तरकाल एव तथाभूतस्वभावो ब्रह्मसाक्षात्कारस्येति वाच्यम् एकस्य स्वभावद्वयासम्भवात् नचावरणविक्षेपशक्तिमत्या मूलाविद्यायाः ब्रह्मसाक्षात्कारेणावरणशक्तिनाशे ऽपि प्रारब्धकर्मजन्यवर्त्तमानदेहनिर्वाहार्थ विक्षेपशक्त्यंशानुवृत्तिरिति वाच्यम् एकस्याह्यविद्यायाः युगपत्स्थितिनिवृत्त्योर्विरुद्धत्वात् नच शक्तिनिवृत्तिमात्रमेव विवक्षितं शक्तिशक्तिमतोरभेदात् भेदेच मूलाज्ञानानिवृत्ति प्रसङ्गः निवर्त्तकाभावात् नच प्रारब्धनिवृत्तिरेव तन्निवर्त्तिकेति वाच्यं कार्यनाशस्य कारणनाशकत्वायोगात् अतिव्याप्तिप्रसङ्गाच्च प्रमाणशून्यत्वाच्च नच पूर्वज्ञानमेव तन्निवर्त्तकमिति वाच्यं तस्य शक्तिनिवृत्तावेवोपक्षीणत्वात् नच स्वरूपज्ञानमेव तन्निवर्त्तकमिति वाच्यं तस्य तद्विरोधित्वानङ्गीकारात् अन्यथा ऽपसिद्धान्तापत्तेरिति सङ्क्षेपः द्वितीये ज्ञानेनाविद्यानिवृत्त्यनङ्गीकरणे ज्ञानस्यैव वैयर्थ्यात् अनिर्मोक्षप्रसङ्गाच्च "तमेव विदित्वा

ऽतिमृत्युमेती" त्यादिश्रुतिव्याकोपाच्च तदर्थशास्त्रा-
रम्भवैयर्थ्याच्च किञ्च विरोधिसाक्षात्कारोदये सर्वथा
लेशतोप्यविद्यानुवृत्त्यसम्भव एव वेत्यकामेनापि
त्वयाङ्गीकरणीयत्वात् अन्यथा कृतनिदिध्यास-
नस्य ब्रह्मसाक्षात्कारोदयेन सविलासाविद्यानिवृत्ति-
रिति सिद्धान्तभङ्गात् एतेन क्षालितलशुनभाण्डा-
नुवृत्तिलशुनवासनाकल्पाविद्यासंस्कारानुवृत्तिरिति
पक्षो निरस्तो दोषसाम्यात् नहि सूर्योदये लेशतो
ऽपि तमोऽनुवृत्तिः केनचिदनुन्मत्तेन दृष्टा श्रुता
चोपपन्ना वेति भावः ननु दग्धपटन्यायेनानुवृत्ता-
मूलाविद्यैवेति चेन्न अनिवृत्तिप्रसङ्गस्य पूर्वमेवोक्त-
त्वात् दृष्टान्तवैषम्याच्च दग्धपटस्याच्छादनादि-
कार्यासम्भवात् अस्यतु पूर्ववत्सर्वकार्यकारित्वस्य-
प्रत्यक्षप्रमाणसिद्धत्वात् नचान्यदृष्ट्यैव तस्य
कार्यकारित्वमिति वाच्यं तर्हि द्वैतस्य सत्त्वं तव
श्रीमुखेनैव सिद्धम् अद्वैतभङ्गात् शास्त्रप्रमाण-
शून्यत्वाच्च किञ्च का वा अविद्यानिवृत्तिरात्मस्वरूपैव
तदन्या वा नाद्यः तस्य पूर्वमेव सिद्धत्वेन ज्ञानस्य
वैयर्थ्यात् द्वितीये सती वा ऽसती वोभयात्मिका वा
ऽनिर्वाच्या वा नाद्या ऽद्वैतभङ्गात् नद्वितीया ज्ञान-

साध्यत्वायोगात् निवर्त्त्याभावात् निवर्त्तकस्य ज्ञानस्य दिवसे दीपस्येवान्धकाराभावाद्वैयर्थ्यमेव न तृतीया इतरेतरविरोधात् नापि चरमा अनिर्वाच्यस्य सादेरज्ञानोपादानत्वनियमेन मुक्तावपि तदज्ञानोपादानानुवृत्त्यापत्तेर्ज्ञानानुवृत्त्यापत्तेश्च नच प्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारेति आनन्दबोधोक्तेरितिवाच्यं पूर्वत्र विस्तरेण निरस्तत्वात् तस्माज्जीवन्मुक्तिरिति परिभाषामात्रैव जन्मान्धस्य कमलनयनसमाख्यावत् दरिद्रस्य लक्ष्मीनिध्यादिसमाख्यावच्चोपहासमात्रत्वात् प्रारब्धेन कर्मणा निवद्धमानानां तत्कार्यभूतकाममात्सर्यादिवह्निप्रज्वलतां सतां मुक्ता वयमित्यज्ञजनवञ्चकतामात्रत्वाच्च ननु "तस्य तावदेव चिर"मितिश्रुतिसिद्धत्वाज्जीवन्मुक्तेः कथमप्रामाण्यमिति चेन्न गतत्रपाणां किमप्यशोभनं नास्ति श्रुतौ यावन्नविमोक्ष्य इतिमोक्षाभावं चिरमिति कालव्यवधानं सम्पत्स्य इतिभविष्यन्निर्देशश्च कण्ठरवेणोच्चार्यमाणं ह्यपश्यतां यथाकामं प्रजल्पतां सिद्धान्ते किमप्याश्चर्यं नास्तीतिभावः ननु जीवन्मुक्त्यनङ्गीकारे उपदेष्टृभावेन वेदान्तसम्प्रदायो-

च्छेदापत्तिः साच तवाप्यनिष्टैवेति चेन्न पूर्वमेवोक्त- त्वात् किश्चोक्तलक्षणाध्रुवास्मृतिमत आचार्यस्यो- पदेष्टृत्वसम्भवान्नोक्तदोषावकाशः ननु तव मते ऽविद्यानिवृत्तिः किमात्मिका ऽभिप्रेतेति चेच्छृणु अनादिमायासम्बन्धो वा तत्प्रयुक्तानादिकर्मात्मको बन्धो वा वेदान्तसाध्यज्ञानप्रागभावो वा ऽविद्या- पदार्थः तस्य ध्वंसाभावः सच यावदात्मवृत्त्यन- वच्छिन्नैकरसब्रह्मसाक्षात्कारानुभूतिसमानाधिकर- णानिष्टभावरूपानन्दलक्षणो धर्मविशेषस्तदाश्रयो मुक्त इतियावत् अलं प्रासङ्गिकेन ॥

इतिपराभिमतजीवन्मुक्ति-
गिरिनिपातः ॥ १ ॥

किञ्च प्रकृते उक्तलक्षणानुभूतेरंशत्रयवत्त्वेऽपि कैनाप्यंशेनानित्यत्वादिकल्पनानवकाशः क्रियाज- न्यत्वाभावात् तथाहि क्रिया तावच्चतुर्विधा उत्पा- दनप्रापणसंस्कारविकारभेदात् तत्रोत्पादनं नाम प्रागभावप्रतियोगित्वे सति उत्तरकालीनसत्तायोगः यथा कटादेः प्रापणं च प्राप्तिक्रियायोगः यथा रूपादिसाक्षात्कारः संस्करणं च वस्तुनि योग्यता- विशेषसम्पादनं तद्विविधं गुणाधानं मलापकर्षणं च

तत्र गुणविशेषसम्बन्धरूपं गुणाधानं यथोपनयना-
दियोगः राज्याद्यभिषेको वा दोषध्वंसलक्षणं द्वितीयं
यथादर्पणादिमलनिराकरणं विक्रियाच्च परिणा-
मादिमत्त्वं यथा दुग्धादीनां दध्याद्यवस्थापत्तिरिति
विवेकः अंशत्रैविध्यश्च आश्रयविषयस्वरूपभेदात्
तत्र न तावदाश्रयतोऽस्याः क्रियाजन्यत्वं आश्रय-
स्तावत् प्राप्तः क्षेत्रज्ञः सच नोत्पाद्यः अजत्वात्
यन्नैवं तन्नैवं घटादिवदित्यनुमानात् "न जायते
म्रियते वा विपश्चि दित्यादिश्रुतेः "न जायते म्रियते
वा कदाचि"दित्यादिस्मृतेश्च "नात्मा श्रुते"रिति-
न्यायाच्च नापि प्राप्तिक्रियायोग्यत्वं स्वरूपत्वेन नित्य-
प्राप्तत्वात् स्वसमाप्तेः प्रमाणनिरपेक्षत्वाच्च आत्मा
नाप्यः नित्यप्राप्तत्वात् स्वस्वरूपत्वात् प्रमाणान्त-
रानपेक्षत्वाच्च यन्नैवं तन्नैवं रूपादिवदित्यनुमानात्
नहि कस्यचित् स्वप्राप्तौ प्रमाणापेक्षा संशयाद्य-
भावात् नायं विकारार्हः षड्विकारशून्यस्वरूपत्वात्
जीवात्मा न विकार्यः षड्विकारहीनत्वात् यन्नैवं
तन्नैवं दध्यादिवदित्यनुमानात् "अविकार्यो ऽय
मुच्यते" इतिश्रीमुखोक्तेश्च नाप्ययमात्मा संस्कार्यः
ज्ञानादिनित्यगुणाश्रयत्वात् गुणाधानानर्हत्वात्

राजादिवत् "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ऽविनाशित्वात् ॥ अविनाशी वा अरे आत्मा ऽनुच्छित्तिधर्मा ॥ ज्ञोतएवे"त्यादिशास्त्राच्च निर्दोषविज्ञानरूपत्वेन मलापकर्षणानर्हत्वात् यन्नैवं तन्नैवं दर्पणादिवदित्यनुमानात् "आत्मा ऽपहत-पाप्मे"त्यादिश्रुतेश्च नन्वात्मनो ऽनाद्यविद्यायोगो ऽभिप्रेतो न वा नाद्यः अविद्यासम्पर्के सति तथा-भूताया दोषापकर्षणसंस्कार्यतायाः अवश्यम्भा-वात् तथात्वे चासंस्कार्यत्वसिद्धान्तभङ्गात् नद्वितीयः वन्धमोक्षव्यवस्थाऽनुपपत्तेः तत्प्रतिपादकश्रुतिव्या-कोपाच्च वन्धमोक्षार्हत्वाभ्युपगमसिद्धान्तभङ्गाच्चेति चेन्न स्वरूपे पूर्वोक्तप्रकारेण सर्वदोषसंसर्गाभावेऽपि तद्धर्मभूतज्ञानमनादिकर्मात्मिकाविद्यया सङ्कुचितं घटस्य दीपप्रभेव सैव वद्धावस्थेति भण्यते "अज्ञा-नेनावृतं ज्ञान"मिति श्रीमुखोक्तेः भूयो भगवत्-प्रसादादुक्तलक्षणवन्धनस्य तत्साक्षात्कारेण ध्वंसे सतिपूर्वोक्तलक्षणो मोक्ष इति समञ्जसमितिभावः तस्मादाश्रयतो ऽस्याः क्रियाजन्यत्वासम्भवान्न तत्तार्हत्वमिति सिद्धं नापि विषयतो ऽस्या-स्तत्तायोगः विषयश्च परब्रह्मभूतो भगवान्वासुदेवः

तस्य क्रियाजन्यत्वाभावे विवाद एव नास्ति सर्वा-
स्तिकानां सम्मतत्वात्सर्वशास्त्रसिद्धत्वात् नापि
स्वरूपतो ऽस्याः तत्तायोगः सम्भावनार्हः तस्याः
शाश्वतत्वात् "नहि विज्ञातु"रितिश्रुतेः आत्मानिष्ठा
ब्रह्मविषयिकाऽनुभूतिः शाश्वती स्वाभाविकत्वात्
क्रियाजन्यत्वाभावाच्च आत्मवदित्यनुमानाच्च आ-
नन्दं ब्रह्मणो विद्वा"नितिमन्त्राच्च ननु ब्रह्मानुभूतिः
शाश्वती चेत्तर्हि सर्वैरप्युपलभ्येत नतु तदस्ति
तस्मान्न तथेति योग्यानुपलब्धिप्रमाणबाध्यत्वा-
त्साध्यस्य अन्यथा सर्वमोक्षप्रसङ्गात् किञ्च
तस्याः मानसक्रियारूपध्यानजन्यत्वेनोक्तहेत्वो-
रुभयोरप्याभासत्वं ब्रह्मानुभूतिर्नशाश्वती मानस-
व्यापारात्मकध्यानजन्यत्वात् वाह्यक्रियाजन्यस्वर्गा-
दिवदित्यनुमानादिति चेन्न शङ्काविषयासिद्धेः
तथाहि शङ्काविषयो ऽत्र नित्यमुक्तो वद्धमुक्तश्च
तयोर्नित्यानुभूतिलक्षणमोक्षस्य निर्विवादत्वात्
वद्धस्य त्वत्राविषयत्वात्कथमुक्तशङ्कागन्धावकाशः
अन्यथा ब्रह्मणो ऽपि सर्वस्य वाह्याभ्यन्तरव्याप-
कत्वेन प्राकृतैरनुपलब्ध्या ऽसत्त्वं किमिति न
शङ्क्यते देवानांप्रियैः नच ब्रह्मणः सत्यं ज्ञानं

"सदेव सोम्येदमग्र" इत्यादिशास्त्रसिद्धत्वान्नोक्त-शङ्कावकाश इतिवाच्यं प्रकृते ऽपि तुल्यत्वात् "सदा पश्यन्ति सूरय" इत्यादिना नित्यमुक्तानां "सर्वं हि पश्यः पश्यति" इत्यादिना बन्धमुक्तानां च ब्रह्मानुभूतेस्तथात्वश्रवणात् यदप्युक्तं मोक्षस्य मानसक्रियात्मकध्यानजन्यत्वेन हेत्वोराभासत्व-मिति तत्तुच्छं ध्यानस्य तत्प्रतिबन्धकनिवर्त्तनेनैवो-पक्षीणत्वात् न तज्जन्यत्वं मोक्षस्येति नोक्तदोषः प्रत्युत ध्यानजन्यत्वादिति त्वत्प्रयुक्तहेतोरेव स्वरूपासिद्धत्वेनाभासत्वसिद्धिः किञ्च त्वदुक्तहेतो-स्त्वत्पक्षे ऽपि व्याप्तेर्वक्तुं शक्यत्वेन दोषसाम्यात् तथाहि त्वत्पक्षेऽपि वृत्तेः प्रत्यक्षहेतुत्वेन तस्या अपि मानसव्यापारत्वसाम्यादिति "यत्रोभयोः समो दोष" इतिन्यायात् अलं विस्तरेण तस्मान्न केनाप्यंशेनात्र विकारित्वजन्यत्वादिशङ्कावकाश इतिसिद्धं ननु ध्यानस्य ब्रह्मसाक्षात्कारहेतुत्वे तस्योपास्यत्वप्रसङ्ग-स्तथात्वे च ब्रह्मत्वहानिप्रसक्तेः "यद्वाचा ऽनभ्यु-दितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदि-दमुपासत" इतिआदिनोपास्यस्य कण्ठरवेण ब्रह्म-त्वनिषेधश्रवणादिति चेन्न तस्य प्रतीकाद्युपासना-

विषयनिषेधपरत्वात् तथाहि लोकवेदयोरारोप्यस्यैव निषेधविषयत्वं ॥ न प्रमाणसिद्धस्य वस्तुन इति न्यायस्य सर्ववादिसम्मतत्वात् यथा नद्यादिजले गङ्गात्वमारोप्य नेयं गङ्गेतिनिषेधस्य सम्भवो नतु साक्षाद्भागीरथ्यां विष्णुपादोदकयां तस्याः प्रत्यक्षागमप्रमाणसिद्धत्वात् यथा वा "पुरुषो वाव गौतमाग्निर्योषिद्वाव गौतमाग्नि"रिति पञ्चाग्निविद्यायां पुरुषादौ ह्युपासनार्थमग्नित्वमारोपितं रूपकेण छान्दोगैस्तन्निषेधश्चेदनर्हत्वाभावात्सम्भवत्येव नतु-प्रत्यक्षप्रमाणसिद्धे हवनीयाग्नौ तत्स्पर्शावकाशो वक्तुं शक्यः प्रामाणिकत्वादेव तथाप्रकृतेऽपि अतद्वस्तुषु "नाम ब्रह्मेत्युपासीत मनो ब्रह्मेत्युपासीते"त्यादिश्रुत्योपासनार्थं नामादिप्रतीकेष्वारोपितस्यैव निषेधान्न सर्वेश्वरे साक्षाद्ब्रह्मणि श्रीवासुदेवे तत्स्पर्शावसरः सर्ववेदान्तसिद्धत्वात् तज्जिज्ञासार्थमेव शारीरकशास्त्रारम्भाच्च तच्च नेदं ब्रह्मेतीदंकारेणैव द्योत्यमानं नतु श्रुतत्यागाश्रुतकल्पनोद्भावनावकाशः इदंकारास्पदसर्वप्रपञ्चातीतं विलक्षणं ब्रह्मेति श्रुत्यर्थः इतरथा प्रमाणसिद्धस्यापि निषेधयोगे ब्रह्मस्वरूपस्यापि निषेधविषयत्वं शक्यते वक्तुं

तुल्ययोगक्षेमात् ननु ब्रह्मणा उपास्यत्वे मोक्षे सशरीरत्वप्रसङ्गः तथात्वे च "न ह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरम्वाव सन्तं न प्रियाप्रिये स्पृशत"इत्यन्वयव्यतिरेकश्रुतेर्मोक्षे ऽपि दुःखानुभवो दुर्वारइतिचेन्न उक्तश्रुतेः कर्मजन्य-प्राकृतशरीरविषयकत्वात् अप्राकृतशरीरस्य श्रुति-प्रमाणसिद्धत्वात् "जक्षन् क्रीड़"न्नितिश्रुतेः अन्यथा परमेश्वरेऽपि तत्सम्भावना कल्पनीया पण्डितम्मन्यैर्वैदिकाभिमानिभिः तथात्वेच सार्वज्ञ्यनित्यत्वा-नन्तत्वाद्यसम्भवेनेश्वरत्वस्यैव नाशात् "यः सर्वज्ञः एष सर्वेश्वरः सत्यकामः य आत्मा ऽपहतपाप्मे"ति श्रुतिकदम्बलक्षणं "सर्वज्ञः सर्वकृत्सर्वशक्तिज्ञान-बलाद्दिमान्न अन्यूनश्चाप्यवृद्धश्च स्वाधीनो ऽनादि-मान्वशी कामतन्द्राभयक्रोधकामादिभिरसंयुतः निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरः क्रमः "वेदाहं समतीतानि मत्तः परतरं नान्यत् अतोऽस्मि लोके वेदेच सर्वस्य चाहं हृदी"त्यादिस्मृतिकदम्ब-लक्षणं चतत्प्रतिपादकं सर्वमपि वेदान्तशास्त्रं दत्त-तिलाञ्जलि स्यात् तथात्वेच बाह्यपक्षात्को वा विशेषः शून्यस्य सत्तायास्तैरप्यङ्गीकृतत्वादित्यलं

विस्तरेण अथविदुषामुत्क्रान्तिगती मीमांसते तत्र तावदुत्क्रान्तिः श्रूयते "अस्य सोम्य पुरुषस्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवताया"मिति अत्र वाक्शब्दस्यैव लयो बोध्यते वागिन्द्रियउपरतेऽपि मनः प्रवृत्तिदर्शनात् नच वृत्तिग्रहेऽपि तथात्वोपपत्तिः शङ्कनीया वृत्त्युपरमे वागिन्द्रियस्य प्रमाणान्तरेणानुपलभ्यमानत्वात् साक्षाद्वाक्शब्ददर्शनाच्चेति "वाङ्मनसि दर्शनाच्छब्दाच्चे"तिसूत्रात् उक्तहेतुभ्यां दर्शनशब्दाभ्यामेव "वागनुसर्वाण्यपीन्द्रियाणि मनसि सम्पद्यन्ते को ऽसौ शब्दः प्रशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानै"रिति श्रुतेः दर्शनं च पूर्ववद्बोध्यं मनः प्राणे इतिवाक्यशेषात् इन्द्रियगणसहितस्य मनसः प्राणे सम्पत्तिर्बोध्या किञ्च "न्नमयं हि सौम्य मन आपोमयः प्राण" इतिश्रुत्याऽन्नादिना मनःप्राणयोराप्यायनस्य विवक्षितत्वान्नतु तदुपादेयत्वं मनसोऽहङ्कारोपादेयत्वात् प्राणस्य चाकाशोपादेयत्वान्न तत्र शङ्कान्तरस्यावकाशः प्राणश्च स्वाध्यक्षे जीवात्मनि लीयते नच "प्राणस्तेजसी"तिश्रुतिविरोध इति तस्या

जीवविशिष्टप्राणविषयकत्वात् यथा गङ्गायमुनयो-
र्वैशिष्ट्येन समुद्रलयेऽपि यमुनायाः पृथक्समुद्र-
लयोक्तावप्यविरोधस्तद्वत् अन्यथा "तमुत्क्रामन्तं
प्राणोनूत्क्रामती"तिश्रुतिविरोधात् "एतमात्मान-
मन्तकाले सर्वे प्राणाः अभिसमायान्ती"ति स्पष्ट-
श्रवणाच्च सजीवस्तेजःप्रभृतिभूतेषु लीयते तस्य
सञ्चरतो भूतमयत्वश्रवणात् पृथिवीमय आपो-
मयस्तेजोमय इत्यादिना "तन्मनः प्राणउत्तरात्सो-
ध्यक्षे तदुपगमादिभ्यः "भूतेषु तच्छ्रुते"रित्यादि-
सूत्राण्यत्रानुसन्धेयानि उत्क्रान्तेरेतावत्त्वं विदुषो
ऽविदुषश्च समानत्वं तत्र विद्वांस्तु हृदये वर्त्त-
मानः प्राप्तव्यं लोकं प्रद्योतेन पश्यति अविद्वांस्तु
पितृयानं प्रतिपद्यते नरकद्वारं चेति विशेषो
बोध्यः "शतं चैका हृदयस्य नाड्यस्तासां मूर्द्धान-
मभिनिःसृतैका तयोर्द्ध्वमायन्नमृतत्वमेति विष्व-
ङ्ङन्या उत्क्रमणे भवन्ती"तिनाडीविशेषेण गति-
श्रवणाद्विदुषउत्क्रान्तिरप्यावश्यकी पूर्वत्र समा-
नापि प्रवेशे विशेषः "तेन प्रद्योतेनैष आत्मा
निष्क्रामति चक्षुषो वा मूर्ध्नो वा शरीरदेशेभ्य"-
इतिश्रुतौ मूर्द्ध्न उत्क्रान्तिर्विद्वद्विषया चक्षुरादिभ्य

उत्क्रान्तिरितरान्निषयेतिविवेकः अमृतत्वमेतीति पदोक्तामृतत्वं च शरीरेन्द्रियसम्बन्धनाशाभावेनैव पूर्वोत्तराद्यविनाशाश्लेषमात्रमेव तन्नाशस्याग्रे भविष्यमाणत्वात् "यदा सर्वे प्रमुच्यन्ते कामा ये ऽस्य हृदि श्रिताः अथ मर्त्यो ऽमृतो भवत्यत्र ब्रह्म समश्नुते" इतिश्रुतेरुपासनसमये एव ध्रुवास्मृत्याख्यब्रह्मानुभूतिविषयकत्वं बोध्यं ध्रुवास्मृतेर्बृहत्त्वात् अन्यथा "ऽमृतत्वञ्चानुपोष्ये" तिविरोधात् "उष दाहे" इतिधातोरूपं अदग्ध्वेति यावत् लिङ्गशरीरदाहाभावे परमोक्षानुपपत्तेः तस्य हि देशविशेषं गत्वैव लयश्रवणात् "इमा षोड़शकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती" तिश्रुतेः किञ्च तस्य तावदेव चिर" मित्यादिना मोक्षविषयकभविष्यत्प्रयोगदर्शनाच्च "तदापीतेःसंसारव्यपदेशादि" तिसूत्राच्च मरणसमये लिङ्गशरीरदाह इतिभावः किञ्च देवयानेन गच्छतो विदुषश्चन्द्रमसा सम्वादलक्षणप्रमाणादपि सूक्ष्मशरीरस्य सद्भावोपलम्भादपि तथात्वं तं प्रति ब्रूयात्सत्यं ब्रूया" द्दितिश्रुतेःएवमुत्क्रान्तिं निरूप्य तद्विवादं निराकरोति प्रतिषेधादिति चेन्न शारीरात्स्पष्टोह्येकेषां ननु यदुक्ता विदुष-

उत्क्रान्तिः सानुपपन्ना निषेधदर्शनात् "अथ कामयमानो कामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणाउत्क्रामन्ती"त्यादिश्रुतेः प्रतिषेधदर्शनादितिप्राप्ते राद्धान्तः नेति ननिषेधो विदुषउत्क्रान्तेः कथं तर्ह्युक्तश्रुतेर्गतिरित्यत्राह शारीरादिति तस्याः श्रुतेः शारीरादुत्क्रान्तिनिषेधो विषयो न शरीरतो निषेधः तत्र हेतुः स्पष्टो ह्येकेषामिति हि यस्मादेकेषां माध्यन्दिनानां न तस्मात्प्राणा उत्क्रामन्तीति पञ्चमीप्रयोगाच्छरीरादुत्क्रान्तिनिषेधः स्पष्टः श्रूयते इत्यर्थः किञ्च न तस्येत्यत्रापि विदुषः सम्बन्धिप्राणोत्क्रान्तिनिषेधो युक्त एव नचोत्क्रमणस्यापादाननिरूप्यत्वनियमात् षष्ठीश्रवणाविरोधः अपादानञ्च शरीरमेवनशरीर इतिवाच्यं अपादानापेक्षायामश्रुताच्छरीरात्सम्बन्धितया ॥ श्रुतस्य शारीरस्यैव सन्निहितत्वेनापादानतया ग्रहणे ऽपि दोषायोगात् किञ्च जीवसम्बन्धितया ज्ञातानां प्राणानां सामान्यसम्बन्धवाचकायाः षष्ठ्या अपादानत्वरूपसम्बन्धविशेषपरत्वमपि समञ्जसं विशेषस्य सामान्यानतिरेकत्वात् नटस्य शृणोतीतिवत् अन्यथा श्रुतत्यागाश्रुतकल्पनापत्तेः

वस्तुतस्तु माध्यन्दिनाम्नाये श्रूयमाणापादानस्यै-
वात्र निगमनत्वान्न विवादावरः "यो कामो निष्काम
आप्तकाम आत्मकामो न तस्मात्प्राणाउत्क्राम-
न्ती"तिस्यष्टापादानश्रवणात् किञ्च विदुषः शरीर-
वियोगकाले प्राणवियोगस्यापि प्राप्तत्वात् तस्यैव
निषेधः अप्राप्तस्य निषेधायोगात् किञ्चेमाः षोड़श-
कला" इत्यादिना विदुषो गत्यनन्तरं देशान्तरे
प्राणवियोगश्रवणाच्च ननु पूर्वत्रार्त्तभागप्रश्ने ऽपि
विदुषउत्क्रान्तिनिषेधश्रवणात् "आपः पुनर्मृत्युं
जयती"ति विद्वांसं प्रस्तुत्य "याज्ञवल्क्येतिहोवाच
यत्रायं पुरुषो म्रियत उदस्मात्प्राणाउत्क्रामन्त्याहो
नेतीति पृष्टे "नेतिहोवाच याज्ञवल्क्यो ऽत्रैव
समलीयन्ते स उच्छ्वसत्याध्मायत्याध्मातो मृतः
शेते"इतिविदुष उत्क्रान्तिनिषेधश्रवणात् विद्वानि-
हैवामृतत्वं प्राप्नोति इतिचेन्न अन्यैरेव प्रत्युक्तत्वात्
तथाहि अत्रापि स प्रश्नो यदा विद्वद्विषयस्तदायमेव
परिहारः सत्वविद्वद्विषयस्तत्र प्रश्नप्रतिवचनयो-
र्ब्रह्मविद्याप्रसङ्गादर्शनात् तत्रहि ग्रहातिग्रहरूपेणे-
न्द्रियेन्द्रियार्थस्वभावो ऽपामग्न्यन्नत्वं म्रियमाणस्य
जीवस्य प्राणापरित्यागो मृतस्य नामवाच्येकीत्य-

नुवृत्तिस्तस्य च पुण्यापुण्यानुगुणगतिप्राप्तिरि-
त्येते ऽर्थाः प्रश्नपूर्वकं प्रत्युक्ताः तत्र "चापः पुन-
र्मृत्युं जयति इत्यत्रापामग्न्यन्नत्वज्ञानादग्निजय एव
मृत्युजयउच्यते नात्र विदुषः प्रसङ्गः अविदुषस्तु
प्राणानुत्क्रान्तिवचनं स्थूलदेहवत्प्राणान् मुञ्चन्ति
अपितु भूतसूक्ष्मवज्जीवं परिष्वज्य गच्छन्ती"ति-
प्रतिपादयतीति निरवद्यमित्यादि तस्मात्प्राणा-
द्यनुत्क्रान्तिस्तर्हि तत्प्राणादेः क्व समवलय इत्य-
पेक्षायां "तेजःपरस्यान्देवताया"मितिश्रुतेस्तेषां
परब्रह्मणि लयः तानि परे "तथाह्याहेति"सूत्रात्
तल्लयोऽपि पृथग्व्यवहारानर्हत्वेन नत्वपार्थक्येन
अविभागो वचना"दितिसूत्रात् "भिद्येते चासां
नामरूपे पुरुषइत्येव प्रोच्यते स एषो कालो ऽमृतो
भवती"तिश्रुतेः एवमुत्क्रान्तिं निर्णीय तस्य गति-
र्निरूप्यते देहादुत्क्रम्य शताधिकया सुषुम्णाख्यया
सूर्यरस्मिभिरेकीकृतया रश्मिभिरूर्ध्वमाक्रम्यार्चिष-
मभिगमनन्तदोकोग्रज्वलनं तत्प्रकाशितद्वारोविद्या-
सामर्थ्यात्तच्छेषं गत्यनुस्मृतियोगाच्च "हार्दानुगृही-
तशताधिकया रस्म्यनुसारी"त्यादिसूत्रात् किञ्च
निशि दक्षिणायने मृतस्य विदुषो ब्रह्मप्राप्तिरविरुद्धा

वोध्या ननु "दिवा च शुक्लपक्षश्च उत्तरायणमेव च मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हित"मिति-शास्त्राद्रात्रिदक्षिणायनयोर्मृतस्य कथं ब्रह्मापत्ति-रितिचेन्न विरोधाभावात् तथा "तदधिगमे उत्तर-पूर्वाघयोरिति "भोगेन त्वितरे क्षपयित्वाऽथ सम्प-द्यते"इति च सूत्रात् उत्तरपूर्वयोः पुण्यापुण्ययो-र्भगवदीयध्रुवास्मृत्याख्यज्ञानेनैवाश्रयविनाशात् ॥ विदुषः प्रारब्धकर्मसम्वन्धस्य यावद्देहभावित्वान्न तत्र कालादिप्रतीक्षापेक्षेति यावत् नन्वथ "यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छती"तिचन्द्रप्राप्तिश्रवणात् चन्द्रं प्राप्तानां चाथैतमेवाध्वानं पुनर्निवर्त्तन्ते पुनरा-वर्त्तेरावश्यकत्वात् किञ्च भीष्मादीनां ब्रह्मविद्यावद्-ग्रवर्त्तिनामप्युत्तरायणप्रतीक्षादर्शनात् कथं दक्षि-णायने मृतस्य ब्रह्मप्राप्तिरिति चेन्न ब्रह्मविद्या-विधुराणां पितृयानेन यथा चन्द्रं गतानामेव पुन-रावृत्तिर्न विदुषां तेषान्तु चन्द्रप्राप्तावपि "तस्मा-द्ब्राह्मणोमहिमानमाप्नोती"तिवाक्यशेषाद्दक्षिणाय-नमृतानां चन्द्रगतानामपि ब्रह्मप्राप्तिरविरुद्धा भीष्मादीनामुत्तरायणादिप्रतीक्षातु स्वस्य स्वच्छ-

न्द्रमरणाशक्तिप्रदर्शनार्थमेवेत्यविरोधस्तस्मादर्चि - णायनमृतस्यापि विदुषो ब्रह्मप्राप्तिरावश्यकीति सिद्धम् "तस्यैतस्य हृदयाग्रं प्रद्योतति तेनैष आत्मा निष्क्रामति तयोर्द्ध्वमायन्नमृतत्वमेती"त्यादिश्रुतेः तत्रार्चिषो ऽभिमानिना ऽतिवाहिकेन सन्मुखमेत्य निरतिशयसन्मानेनोपचारैः समभ्यर्च्यातिवाह्य दिवं नीतस्तेनापि पूर्वोक्तरीत्या शुक्लपक्षं नीतः तत- श्चोक्तरीत्या क्रमात् पक्षोत्तरायणासम्वत्सराभिमा- निभिर्वायुं देवलोकरूपं नीतः वायुना ऽपि सन्मानेन सभभ्यर्च्य स्वस्मिंश्छिद्रं दत्त्वा तन्मार्गेण सूर्य- मण्डलं नीतस्तथैव सूर्य्येण स्वस्मिंश्छिद्रं दत्त्वा तेन सूर्य्यमण्डलं भित्त्वा चन्द्रमसं तेन विद्युल्लोकं तदभि- मानिना देवविशेषेण वरुणलोकं तत इन्द्रलोकं ततः प्रजापतिलोकं ततः प्राकृतमण्डलं भित्त्वा सरिद्वरां विरजामेत्य तत्रामानवान्पुरुषान्स्वस्याति- वाहनार्थमागतान्पश्यति तद्दर्शनकरस्पर्शाभ्यां तैः सह सङ्कल्पमात्रेण तां तरति परधामसीमानं प्राप्य तत्र सूक्ष्मशरीरं परस्यां देवतायां हित्वा दिव्याप्राकृतानादिसिद्धामानवानीतब्रह्मालङ्कारैर - लङ्कृतो विष्णुलोकं परं पदं प्रविश्य ब्रह्मभाव-

मधिगच्छतीति यावत् "अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु नार्चिषमभिसम्भवन्ति अर्चिषो ऽहः अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङेति तान्मासान्मासेभ्यः सम्वत्सरं सम्वत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एतान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवावर्त्तं नावर्त्तन्त"-इतिछन्दोगाम्नाये आदित्यो यान्मासानुदङेति तान्मासानित्यन्वयः आरण्यकेच मासपर्य्यन्तपाठः पूर्वसमः "मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् वैद्युतान्पुरुषो मानव एत्य ब्रह्मलोकं गमयति यदा वै पुरुषो ऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्द्ध्वमाक्रमते सआदित्यमागच्छति तस्मै स तत्र विजिहीते यथा डम्वरस्य खं तेन स ऊर्द्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः ख"मित्यादि तस्यैव स्वलोकप्राप्ताय श्रीमुकुन्दपदाश्रिताय विदुषे तत्पदजिगमिषवे स वायुः तत्र स्वात्मनि विजिहीते छिद्रं करोति तेन छिद्रेण द्वारेणोर्द्ध्वमाक्र-

मत इत्यर्थः एवमुत्तरत्रापि बोध्यम् कौशीतक्या-म्नायेतु "स एतं देवयानपन्थानमासाद्याग्निलोक-मागच्छति स वायुलोकं सवरुणलोकं स आदि-त्यलोकं स चन्द्रलोकं स प्रजापतिलोकमित्यादि स आगच्छति विरजान्नदीन्ताम्मनसैवात्येती"-त्यादिश्रुतिभ्यः "अर्चिरादिना तत्प्रथिते"रित्यादि-सूत्रकृदम्वाच्च "सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतने षु वै जगाम भित्त्वा मूर्द्धानं दिवमित्युपपपात हे"ति श्रीशुकमोक्ते गतिस्मृतिः याज्ञवल्क्येच "ऊर्द्ध्वमेक-स्थितस्तेषां यो भित्त्वा ऽऽदित्यमण्डलं ब्रह्मलोक-मतिक्रम्य तेन याति परां गति"मित्यादिस्मृतेश्च एते ऽर्चिरादयो नेतारो ह्यातिवाहिकसंज्ञका देव-विशेषा एव नतु मार्गचिह्नविशेषा भोगभूमिवि-शेषा वा उपसंहारे "तत्पुरुषो मानव एनं गमय-ती"ति नेतृत्वश्रवणात् उपसंहारवाक्यानुरोधेनार्चि-रादीनामप्यातिवाहिकत्वमेवेत्यवगमात् "आति-वाहिकास्तल्लिङ्गा"दितिसूत्रात् अन्यथा ऽर्चिरादीनां देवविशेषत्वेन दिनपक्षादीनां च कालविशेषत्वेन मार्गचिह्नत्वं भोगभूमित्वंच वक्तुमशक्यमसम्भवात् अर्चिरादिगतिसंग्रहश्लोकाश्च "विद्वान् विनिष्क्रम्य

सुषुम्णाया तया नाड्या समारुह्य सवितृरश्मीन्
ततश्च वह्निं प्रथमं प्रयाति ततो दिनं पक्षमुपैति
शुक्लम् १ तथोत्तरं प्राप्य बुधो ऽयनं ततः सम्वत्सरं
देवनिवासवायुं सूर्यं च सोमं च ततश्च वैद्युतं जलेश-
मिन्द्रं च ततः प्रजापतिम् २ स तत्र तत्राखिललोक
पालैः समर्चितो याति समस्तलोकान् अतीत्य
देवैश्च समागतैरसौ ह्यमानवैर्य्यातिसरिद्वरां बुधः ३
विहाय लिङ्गं परदेवतायां सङ्कल्पमात्रेण तरेच्च तां
नदीं ततो ऽकृतं विग्रहमभ्युपेत्य ह्यलङ्कृतो ब्रह्मसमैश्च
भूषणैः ४ द्वाःस्थैः समागम्य परस्परं मुदा ह्यलौ-
किकं स्थानमसौ प्रपश्यन् समागतो भागवतैश्च
मार्गे समानशीलैर्भगवत्प्रपन्नैः ५ ततश्च पश्यन्माणि-
मण्डपे ऽसौ स्थूणासहस्रादिविराजमाने दिव्ये महा-
रत्नमये महात्मा सिंहासनस्थं पुरुषोत्तमं हरिम् ६
लक्ष्म्यादियुक्तं परमेशितारमादित्यवर्णं तमसः
परात्परं सुनन्दमुख्यैश्च सुदर्शनादिभिर्नमस्कृतं
स्वाञ्जलिसम्पुटैश्च ७ सहस्रसूर्यादिप्रभातिरस्कर-
द्युभिः किरीटादिसमस्तभूषणैः विभूषिताङ्गं जगतां
पतिं गुरुं वेदान्तवेद्यं द्रुहिणादिवन्द्यम् ८ मुक्तोपसृप्यं
च मुमुक्षुमृग्यं विश्वस्य हेतुं स्वजनैकजीवनं विज्ञान-

मानन्दस्वरूपकं च स्वभावतोऽपास्तसमस्तहेयम् ९ समस्तकल्याणगुणाकरं प्रभुं विज्ञानमूर्त्तिं परधामसंस्थं दृष्ट्वा मुकुन्दं भगवन्तमाद्यं कृष्णं सदाऽऽनन्दमयं वरेण्यम् १० दूरान्नमस्कृत्य पदारविन्दयोर्नमो नमो भूयउदाहरन्मुदा ततश्च कृष्णेन कृपार्द्रया दृशाऽवलोकितः श्रीमुखपङ्कजेन सः ११ गिरा परानन्दनिदानभूतया सम्भावितो याति हि ब्रह्मभावं पुनर्न संसारगतिं समेति वै विमुक्तमायार्गल एष मुक्तः १२ प्रदर्शितोऽयंश्रुतिभिः परा गतिः सङ्क्षेपतो मन्दधियां हिताय स्वसम्प्रदायानुगुणामयेरिता श्रुतिस्मृतिन्यायप्रमाणसङ्घैः १३ यया मतो याति परेशभावं हरेः पदं मुक्तसमस्तवन्धः मुमुक्षुभिः सा परिशीलनीया मुकुन्दपादाम्वुजगन्धलुब्धैः १४ "अथ स एतान् ब्रह्म गमयती"ति श्रुत्याऽर्चिरादिना ब्रह्मप्राप्तिर्विधीयते सा कार्यभूतहिरण्यगर्भब्रह्मविषयकापरब्रह्मविषया तत्र किं युक्तं कार्यब्रह्मविषयिकैव कार्यब्रह्मण एव देशविशेषवर्त्तित्वेन तत्रैव गत्युपपत्तेर्गन्तृगन्तव्यसम्भवात् ब्रह्मलोकान् गमयतीति वहुवचनेन विशेषितत्वाच्च नच ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात् कथं

कार्यब्रह्मोपस्थापकत्वमिति वाच्यं "यो ब्रह्माणां विदधाती"ति तस्य पूर्वजत्वेन ब्रह्मसामीप्याद्ब्रह्मत्वोक्तेः ननु नावर्त्तत इति कथमस्याः पुनरावृत्तिश्रवणं संगच्छतीति चेन्न तदध्यक्षेण हिरण्यगर्भेण सह मोक्षविवक्षया तस्याः श्रुतेरविरोधात् "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे परस्यान्ते कृतात्मानः प्रविशन्ति परम्पद"मितिस्मृतेरिति वादरेराचार्यस्य पक्षः "कार्यं वादरि रस्य गत्युपपत्ते"रिति सूत्रात् जैमिन्याचार्यस्य तु परब्रह्मैवात्र ब्रह्मशब्दाभिधेयं तस्यैव शक्यत्वेन तत्रैव वृत्तित्वादन्यथा गौणत्वप्रसङ्गः "यत्परः शब्दः सशब्दार्थ" इतिन्यायात् कार्यब्रह्मपरत्वेतु ब्रह्माणाङ्गमयतीति प्रयोगः श्रुतौ स्यात् "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्येति श्रुतौ परस्यैव स्पष्टदर्शनात् इति निर्णयः "परं जैमिनिर्मुख्यत्वाद्दर्शनाच्चे"ति सूत्रात् ननु "प्रजापतेः सभावेश्म प्रतिपद्यत" इति श्रुत्या कार्यब्रह्मपरत्वमेव पूर्वश्रुतस्य ब्रह्मशब्दस्येति चेन्न नायं कार्यब्रह्मविषयो हि प्रत्यभिसन्धिः किन्तु परब्रह्मविषय एव नामरूपयोर्निर्वहितेति परस्यैवाधिकारात् वाक्यशेषे "यशो ऽहं सम्भवामि

ब्राह्मणाना"मिति तस्याभिसन्धातुः सर्वाविद्या-
विमोकसर्वात्मभावाभिसन्धानात् "अश्व इव
रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवा
मीत्यभिसम्भाव्यमानस्य ब्रह्मलोकस्याकृतत्वश्रव-
णात् सर्वबन्धविमुक्तिश्रवणाच्च परब्रह्मैव प्राप्य-
मर्चिरादिना गतस्येति एतदुक्तम्भवति ब्रह्मश-
ब्दस्य परस्मिन्नेव मुख्यत्वात्प्रमाणान्तरावगतस्यैव
लाक्षणिकत्वं युक्तं नच गमनानुपपत्तिः प्रमाणं
परस्य ब्रह्मणः सर्वगतत्वे ऽपि विदुषो विशेषदेश-
गतस्यैव निःशेषाविद्यानिवृत्तिः शास्त्रात् यथा-
विद्योत्पत्तौ वर्णाश्रमादिधर्मापेक्षा विविदिषाश्रुतेः
तथा निःशेषाविद्यानिवृत्तिरूपविद्यानिष्पत्तिरपि
विशिष्टदेशगतिसापेक्षेति गतिश्रुतिभ्यो ऽवगम्यते
नच लोकशब्दबहुवचनाभ्यां हिरण्यगर्भस्यैव
प्रतीतिरिरिति वाच्यं निषादस्थपतिन्यायेन ब्रह्मैव
लोक इतिकर्मधारयसमासेनाविरोधात् बहुवचन-
स्याप्यदितिपाशानितिवदनुपपत्त्यभावात् यथा-
"ऽदितिपाशान् प्रमोमुक्त तानि"ति एकस्मिन्पाशे
बहुवचनप्रयोगस्तद्वदिति बोध्यं ननु निर्गुणब्रह्म-

विदो गतिर्नोपपद्यते ब्रह्मणः सर्वगतत्वान्न प्राप्तस्यैव प्राप्तिर्युक्ता किन्तु यः परिच्छिन्नो ग्रामादिः स गत्वा प्राप्यते तस्मात्सगुणब्रह्मविद एव सगुणासु विद्यासु गतिश्रवणादिति केचिदाहुः तदयुक्तमित्याहु रन्ये ऽसम्भवात् तथाहि यदि निर्गुणायां गतिरनुपपन्ना तर्हि सगुणास्वपि समानानुपपत्तिः तत्रापि ब्रह्मैवोपास्यते तस्यानेकत्वाभावात् सर्वगतस्य गुणाः सर्वगता एव यथा ऽऽकाशस्य परममहत्त्वं किञ्च संसारगतिनिवृत्तिहेतवो ऽपहतपाप्मत्वादयो यस्य गुणाः स परमात्मोच्यते यस्यैते न सन्ति स संसारी सत्त्वादि गुणयोगात् नहि सगुणं ब्रह्मोपास्यमानमब्रह्म भवति नच निर्गुणं वस्तु विद्यते नह्युष्णप्रकाशादिप्रत्याख्यानेऽग्निर्नाम भवति नापि द्रव्यप्रत्याख्याने गुणो नामास्ति उभयात्मकं तद्वस्तु "विज्ञानमानन्दं ब्रह्म॥ आनन्दो ब्रह्मे"ति शतगुणोत्तरक्रमेणानन्दप्रतिपादनात् यदि चैतन्यमात्रं ब्रह्म आनन्दगुणोपदेशो ऽनर्थकः स्यात् नचाकस्मादर्थवादकल्पना यथाश्रुतार्थग्रहणे किन्नामानुपपन्नमस्थूलादिश्रुतिस्तु प्रपञ्चास्तित्वनिराकरणपरा अयन्तु स एको ब्रह्मण आनन्द इत्यसाधारण उत्कर्षापकर्षरहितो

व्यपदिष्टो यदि च श्रुतन्नाद्रियते ऽपवर्गो ऽप्यर्थवादः किं न स्यादतएव सर्वज्ञत्वं सर्वशक्तित्वं सृष्टिकर्तृत्वमित्येते गुणाः परस्यासाधारणा न केन चित्प्रतिषेद्धुं शक्यन्ते गुणकृतं कार्यकृतं वा नानात्वं च दर्शितं तच्चास्माकं न दोषाय प्रत्युतालङ्कारो भिन्नाभिन्नात्मकवस्तुरूपावगमादतः सगुणब्रह्मविदोऽपि गतिर्नोपपन्ना तद्भावापन्ने नहि प्राप्तमेव प्राप्यते इति तदुक्तहेतुनैव तथात्वे गत्यादिश्रुतयः कूपे निवेशयितव्या वैदिकाभिमानिभिः किञ्च संसारिणोऽपि स्वरूपतो गतिर्नोपपन्ना तस्यापि लिङ्गशरीरगमनादेव गमनं ननु संसारी जीवो नाम परमात्माभासस्तस्य परिच्छिन्नत्वात्तद्विषयिका गतिरिति चेन्न विकल्पासहत्वात् आभासो ऽवस्तुभूतो वा नाद्यः अवस्तुनः　　शशशृङ्गादेरिवाधिकारित्वासम्भवात् नापि द्वितीयः तत्राणुमध्यमपरिमाणयोरनङ्गीकारेणौपाधिकाणुत्वमेवाभ्युपगतं स्यात्तथात्वे च लिङ्गशरीरस्यैव गतिर्न स्वरूपस्येति गतिश्रुतीनां बाध एव स्वरूपेण जीवस्य गत्यनुपपत्तेः शरीरस्यैव फलप्राप्तिप्रसङ्गाच्चेति किञ्च नेयं गतिरस्मत्कपोलकल्पिता अपितु श्रौतमानसिद्धा नापि सगुण-

विद्यायामेव श्रुता अपितु निर्गुणायां तथाच श्रुति-
मुखेनैव सिद्धा विदुषां गतिरिति ननु वाजसनेयके
"इह न पुनरावृत्ति"रितीहेतिविशेषणात्कल्पान्तरे
त्वावृत्तिः स्यादिति चेन्न असम्भवात् तथाहि
"राजसूये ब्रह्मणो ग्रहे महिष्या" इत्यादिना द्वादश-
हवींषि विहितानि कर्त्तव्यानि तत्र श्वोभूते निर्वपेदि-
त्युक्तमेकस्मिन्कृते पुनरपि श्वोभूते इत्युपतिष्ठते
"श्वोभूतवदनुवादा"दितिसूत्रात् तद्वदत्रापीह कल्पे
ऽनावृत्तिः कल्पान्तरे ऽपि बोध्या निर्देशस्य सर्वकल्प-
व्यापनात् किञ्च "ग्रहं सम्मार्ष्टी"ति सम्मार्जने वि-
धीयमाने सर्वग्रहेषु प्राप्तिः तत्रैकस्येति पुनर्विधीय-
माने वाक्यभेदात् एवं प्रकृतेऽपि बोध्यम् अन्यथा
तत्राप्यनावृत्तिर्न विधीयते तदानीमिहेति पदं किं
विशेषणं स्यात् तस्मादिह पदमनुवादोऽत एव-
कारवानामिह पदं न पठ्यते तस्मादर्चिरादिना
गत्वा परमात्मन लिङ्गप्रलयो नप्रागिति गतिश्रुति
सामर्थ्यान्निश्चीयते "परे ऽव्यये सर्व एकीभवन्ति
पुरुषायणाः पुरुषं प्राप्यास्तङ्गच्छन्ती"तिश्रुतिभ्यः
इत्यादिना तदपि न रमणीयं स्वोक्तिविरोधात्
तन्मते ऽपि न तावद्भेदःस्वाभाविकः किं त्वौपाधि

क्त एव मोक्षे भेदानङ्गीकारात् तथात्वेच उपाधेरेव गत्यादिसिद्धिर्न स्वरूपस्य तथैव मोक्षोऽपि विरुद्धः सच पूर्वमेव विस्तृतः सिद्धान्तेतु भेदस्यापि स्वाभाविकत्वेनाणुपरिमाणस्य च श्रुतिमानसिद्धत्वेन पारमार्थिकत्वात् वन्धमोक्षयोः उत्क्रान्तिगत्या गतीनां च सामञ्जस्यं विरोधाभावात् अपुनरावृत्तिरपि त्रिविधकर्मणो निःशेषनाशेन जन्म कारणाभावादेव निष्कारणमेव पुनरावृत्त्यङ्गीकारे मुक्तस्य पुनः संसारापत्तिस्तवापि समाना नच तस्यापि कर्मशेषोऽङ्गीकार्य इतिवाच्यं प्रमाणाभावात् "तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना" इत्यर्चिरादिना गतस्य ब्रह्मप्राप्तिविधानादित्यलं प्रासङ्गिकेन श्रीसूत्रकारराद्धान्तस्तु "नामब्रह्मेत्युपासीते" त्यादिश्रुत्युक्तप्रतीकोपासकान्वर्जयित्वा आत्मानं ब्रह्मात्मकत्वेनोपासतः पञ्चाग्निविद्यावतश्च तदुपासनानुसारेण परब्रह्मप्राप्तिरिति "अप्रतीकालम्वनान्नयतीति वादरायण उभयथाच दोषात्तत्क्रतुश्चे" तिसूत्रात् अस्यार्थः प्रतीकालम्वनान् वर्जयित्वा परब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतया विदुषः पञ्चाग्निविद्यावतश्चामानवः पर-

ब्रह्म नयतीति कुतः उभयथा दोषात् तत्र कार्यो-पासकान्नयतीति पक्षे "ऽस्माच्छरीरात्समुत्थाये" त्यादिश्रुतिविरोधः परब्रह्मोपासीनानेव नयतीति पक्षे "तद्य इत्थं विदुः ये चेमे ऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसम्भवन्ती"ति पञ्चाग्निविदो गतिविधायकश्रुतिगणाविरोधो ऽत उभयस्मिन्पक्षे दोष इत्यर्थः तस्मादुक्तलक्षणोभयविधान्नयती-त्याह तत्क्रतुश्चेति यथोपासीनस्तथैव नयतीत्यर्थः "यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति श्रुतेः ननु प्रतीकालम्वनोपासनास्वपि ब्रह्मोपासनस्य सत्त्वात्कथं गत्यभाव इति चेन्न तत्रा-पि यथोपासनं परिच्छिन्नफलविशेषस्य श्रवणात् यावान्नाम्नो गतिस्तत्रास्य कामचारो भवतीत्यादि-श्रुतिः नामादिप्राणपर्यन्तस्य प्रतीकोपासनस्य गतिनिरपेक्षं परिमितं च फलं दर्शयति "वाग्वाव नाम्नो भूयसी"त्यादिश्च श्रुतिरुपासनतारतम्यं च दर्शयति तस्मात्प्रतीकोपासकभिन्नान्पूर्वोक्तोभयवि-धानविदुषो "ऽमानवः पुरुषो नयति परं ब्रह्मे"तिग-तिश्रुतिभिस्तेषामेव गतिरपुनरावृत्तिश्च विदधा-तीति राद्धान्तः येतु दुराग्रहमाश्रित्य सगुणनि-

गुणाब्रह्मभेदं वदन्तो निर्गुणाब्रह्मविदो गत्यनुपपत्तिं सगुणाब्रह्मविदश्च गत्या कार्यब्रह्मप्राप्तिमभ्युपगच्छन्ति ते उपेक्षणीयाः बादरिपक्षान्तःपातित्वात् सूत्रकारपक्षविरोधात् श्रुतिहीनत्वाच्च नहि ब्रह्मभेदे कार्यब्रह्मप्राप्तौ च श्रुतिरुपलभ्यत इतिभावः एवमुत्क्रान्तिगतिगन्तव्या निर्णीता इदानीं प्राप्तस्वरूपं निर्णीयते "एवमेवैष सम्प्रसादो ऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यत्र स्वेनशब्दात् स्वरूपेणैवाभिनिष्पत्तिः नतु स्वर्गिवदागन्तुकरूपेणान्यथा स्वशब्दोक्तिवैयर्थ्यात् अभिव्यक्तिरेवात्राभिनिष्पत्तिः "सम्पद्याविर्भावः स्वेन शब्दादि" तिसूत्रात् ननु स्वरूपस्य नित्यप्राप्तत्वात् को ऽत्र विशेष इति चेन्न कर्मसंज्ञका विद्यासङ्कुचितज्ञानादिधर्मकस्य नित्यप्राप्तत्वे ऽपि तद्रूपबन्धविनिर्मुक्तस्याविर्भूतापहतपाप्मत्वादिगुणाकदम्बकस्य जाग्रदाद्यवस्थातीतस्य स्वरूपस्याप्राप्तत्वाद्दिहत्वपरिच्छिन्नज्ञानापहतपाप्मत्वादिगुणाश्रयस्य स्वरूपस्याभिनिष्पत्तिरिति विशेषस्य सत्वात् य आत्मेत्युपक्रम्य "एतं त्वेव ते भूयो ऽनु व्याख्यामी" ति भूयो भूय उक्ता एष

सम्प्रसाद" इत्यादिनिष्पद्यते इत्यन्तमभिधीयमा-
नात् "मुक्तः प्रतिज्ञाना"दितिसूत्रात् ननु सुषुप्ता-
वात्मस्वरूपस्यापुरुषार्थत्वदर्शनात्स्वरूपाविर्भावस्य
मोक्षस्वरूपत्वे मोक्षशास्त्रस्यापुरुषार्थविशेषत्वापत्ते-
रतो देवादिवदागन्तुकावस्थान्तरप्राप्तेरेवाभिनि-
ष्पाद्यपदार्थत्वं स्वीकार्यमिति चेन्न स्वरूपेणैवा-
पहतपाप्मत्वादिगुणको ऽयं नागन्तुकधर्मकः प्रक-
रणादवगतः "य आत्मा ऽपहतपाप्मे"त्यादिप्रजा-
पतिविद्यायां श्रवणात् अतो नोक्तदोषः सुषुप्तौ तु
कर्मणा ऽपहतपाप्मत्वादेस्तिरोभावेनात्मयाथा-
त्म्याप्रकाशादपुरुषार्थत्वं तथाचापहतपाप्मत्वादि-
गुणानां परं ज्योतिःसम्पन्नस्याविर्भावमात्रत्वान्न
जन्यत्वादिकल्पनावकाशस्तथाच स्मृतिः "यथा न
क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः दोषप्रहा-
णान्न ज्ञानमात्मनः क्रियते तथा यथोदपानखन-
नात् क्रियते न जलान्तरं सदेव नीयते व्यक्तिरसतः
सम्भवः कुतः तथा हेयगुणध्वंसादवबोधादयो
गुणाः प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि
त" इत्यादि तस्माज्ज्ञानानन्दादिगुणानां ब्रह्मापत्तौ
कर्मप्रतिबन्धकस्य नाशे आविर्भावो ऽविरुद्धः

"आत्मा प्रकरणा"दितिसूत्रात् नच भौतिकज्योतिरेवात्र श्रूयते इतिवाच्यं "स एव ज्योतिषां ज्योति"रितिश्रुत्यन्तरे ब्रह्मवाचकत्वदर्शनाज्ज्योतिःशब्दस्येति सङ्क्षेपः अथच स्वरूपाभिनिष्पन्नो मुक्तः "एतदात्म्यमिदं सर्वम् ॥ तत्त्वमसि ॥ एष सर्वभूतान्तरात्मे"त्यादिश्रुतिभ्यो ब्रह्मात्मकतया ब्रह्मपृथक्सिद्धमात्मानमनुभवतीति "अविभागेन दृष्टत्वा"दितिसूत्रात् नच तथात्वे ऽत्यन्ताभेद एव सिद्ध इति वाच्यं ब्रह्मात्मीयस्य तदात्मकत्वतदपृथक्त्वाद्यनुभवितृरूपस्यापि सत्त्वात् एतदात्म्यमिदमित्यत्र घटकश्रुत्योभयत्वस्य सूपपन्नत्वात् अथ मुक्तस्य श्रीपुरुषोत्तमसङ्कल्पादेव सर्वव्यवहारो न स्वतन्त्रस्वप्रयत्नसापेक्षः "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति"इत्यादिश्रुतेः "सङ्कल्पादेव तच्छ्रुते"रितिसूत्रात् अत एवास्य वासुदेवेतराधिपतित्वमपि नास्ति "स स्वराट् भवती"तिश्रुतेः स्वस्यात्मना परब्रह्मणा राजत" इतिस्वराडित्यर्थः नचात्राधिपतिसामान्यनिषेधदर्शनात्सङ्कोचे मानाभावाच्च कथमुक्तार्थसिद्धिरितिशङ्क्यम् अन्यपदसान्निवेशस्यैव सङ्कोचे दृढप्रमाण-

त्वात् अन्यथा ऽनधिपतिरित्येव सूत्रितं स्यादि-
त्यर्थःअथ मुक्तस्य देहेन्द्रियादियोगो ऽस्ति नवेति
संशये न सन्ति देहादयो ऽन्यथा दुःखादियोगस्या-
प्यनपहतिप्रसङ्गात् "नहवै शरीरस्य सतः प्रियाप्रिय-
योरपहतिरस्ति "अशरीरं वाव सन्तं न प्रियाप्रिये-
स्पृशत" इत्यन्वयव्यतिरेकश्रुतेरितिवादरिराचार्यो ।
मन्यते मुक्तस्य शरीरादिभावं जैमिनिराचार्यो
मन्यते स एकधा भवति त्रिधा भवति पञ्चधा भव-
ती"त्यादिश्रुतेरितिप्राप्ते राद्धान्तः "द्वादशाहवदुभय-
विधं वादरायणो ऽत" इति अतः "सङ्कल्पादेवे"ति
श्रुतेः मुक्तस्यशरीरादिभावाभावोभयविधं भगवान्
वादरायणो मन्यते तथात्वेचोभयश्रुत्याविरोधात् तत्र
दृष्टान्तमाह द्वादशाहवदिति यथा "द्वादशाहमृद्धि-
कामा उपेयुः "द्वादशाहेन प्रजाकामं याजये"दिति
उपैति यजिभ्यां सत्र महीनं च भवति तद्वत् शरी-
रादिमत्त्वं तदभावश्च भगवत्सङ्कल्पाधीनं मुक्तस्येति
ज्ञेयं तस्य सत्यसङ्कल्पत्वयोगेऽपि शरीरादिसर्जने
प्रवृत्त्यभावादित्यर्थः नच देहाद्यभावे कथम्भोग-
सिद्धिरिति वाच्यम्भगवत्सृष्टैः करणैरेव सर्वोपपत्तेः
स्वप्नवत् यथा स्वप्ने पूर्वोक्तरीत्या परमेश्वरसृष्टैः शरी-

रेन्द्रियैर्वद्धजीवो भुङ्क्ते तद्वत् मुक्तोऽपीत्यर्थः नच स्वप्ने जीव एव स्रष्टेति वाच्यं पूर्वमेव विस्तरशो निरस्तत्वात् तस्मात्परमेश्वरसृष्टैरेव पितृलोका-दिभिर्मुक्तस्यापि लीलारसास्वादः सूपपन्न इति-भावः "तन्वभावे सन्ध्यवदुपपत्ते"रितिसूत्रात् किञ्च स्वसृष्टपितृलोकादिभावे ऽपि जाग्रत्पुरुषवत्मुक्तस्य भोगोपपत्तिः यथेश्वरो लीलारसार्थं वसुदेवादि पितृलोकं सृजते तथा मुक्तानामपि तद्द्वारैः सृष्ट्वा स्वसृष्टैकदेशमुक्तपितृलोकादिकं तान्भोजयतीत्युभ-यथा ऽपि विरोधाभावात् "जाग्रद्वदि"ति सूत्रात् किञ्च स्वरूपेणाणुत्वे ऽपि स्वधर्मभूतचैतन्येनैवासौ स्वसृष्टानेकशरीरेषु व्याप्यतद्गतभोगादिकमनुभव-तीति न कश्चिद्विरोधः पूर्वमेव विस्तृतत्वात् "प्रदी-पवदावेशस्तथाहि दर्शयती"तिसूत्रात् ज्ञानसङ्को-चासङ्कोचाभ्यां वद्धमुक्तयोर्विशेषो वोध्यः तत्र वद्धस्य भोगे तत्तत्कर्मैव नियामकं मुक्तस्य तु पर-मात्मसङ्कल्पायत्तस्वेच्छैवेति भावः "सचानन्त्याय कल्पते"इतिश्रुतेः "न वाह्यं किञ्चन वेद नान्तर" मितिश्रुत्या ज्ञानसामान्यनिषेधात्कथं मुक्तस्य सार्वज्ञ्य"मितिचेन्न उक्तश्रुतेः सुषुप्तिमरणयोरन्य-

तरविषयकत्वान्न मुक्तपरत्वं "स्वाप्ययसम्पत्त्योरन्य-
तरापेक्ष"मितिसूत्रात् अस्यार्थस्य श्रुत्यैवाविष्कृत-
त्वात् "न खल्वयमेव सम्प्रत्यात्मानं जानात्ययमह-
मस्मीतिनो एवेमानि भूतानि विनाशमेवापीतो
भवति नाहमत्र भोगं पश्यामी"तिसुषुप्तौ विशेष-
ज्ञानाभावं निरूप्य तत्रैव वाक्ये मुक्तमधिकृत्य "स
वा एष एतेन दिव्येन चक्षुषा पश्यति मनसैवै-
तान्कामान्पश्यन्रमते एते ब्रह्मलोक" इति सार्वज्ञ्य-
माह "सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वश"
इतिश्रुत्यन्तरात् अथ मुक्तस्यैश्वर्यं जगद्व्यापारेतर-
मेव बोध्यं सृष्ट्यादिनिर्णयेषु परस्यैव प्रकरणात्
"सदेव सोम्येदमग्र आसीत् ॥ तदैक्षत बहु स्यां
प्रजायेय॥ यतो वा इमानि भूतानि जायन्ते तद्ब्रह्मे"
त्यादिश्रुतेः किञ्च जगद्व्यापारप्रकरणे मुक्तस्या-
सन्निहितत्वान्न सृष्ट्यादिकर्त्तृत्वं मुक्तस्येति "जग-
द्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्चे"ति न्यायात्
ननु "स स्वराड् भवती"त्यादि श्रुत्या जगद्व्यापार
उपदिश्यते इति चेन्न हिरण्यगर्भाद्यधिकारिमण्ड-
लस्थविषयकत्वात्तस्याः हिरण्यगर्भादिसर्वाधि-
कारिमण्डलानां भोगा मुक्तानुभवविषया इति तर्हि-

बद्धमुक्तयोः को वा विशेष इति चेन्न जन्मादि-विकारशून्यं निखिलदोषास्पृष्टमाहात्म्यं निरति-शयकल्याणगुणाब्धिं सविभूतिकं ब्रह्म मुक्तोऽनु-भवति तद्विभूत्यन्तर्गतत्वेन हिरण्यगर्भादिभोगानु-भवो ऽप्यविरुद्धस्तदाश्रितत्वात्सर्वस्येति भावः "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये निरुक्ते ऽनिल-नये ऽभयं प्रतिष्ठां विन्दते सो ऽभयं गतो भवति रसो वै स रसं ह्येवायं लब्ध्वा ऽऽनन्दी भवती"त्यादि-श्रुतिभ्यः ब्रह्मानुभवितृत्वेनैव सर्वानुभवितृत्वा-न्मुक्तस्येत्यर्थः "विकारावर्त्तिच तथाहि स्थिति-माहे"तिसूत्रात् परब्रह्मणो जगत्कारणत्वसर्वनिय-न्तृत्वादिव्यापारस्वातन्त्र्यं श्रुतिस्मृतिसिद्धम् "एष सर्वेश्वरः एष भूताधिपतिरेष भूतपाल एष सेतु-र्विधरण एषां लोकानामसम्भेदाय ॥ एतस्य वा अक्षरस्य प्रशासने गार्गी"त्यादिश्रुतेः "अहं सर्वस्य प्रभवः ॥ मत्तः परतरं नान्य"दितिस्मृतेश्च "दर्शयतश्चैवं प्रत्यक्षानुमाने" इतिसूत्राच्च अथच यथा सर्वज्ञत्वसर्वशक्तिमत्त्वादिसद्गुणाश्रयत्वा-तिशयसाम्यशून्यत्वसच्चिदानन्दरूपत्वजगज्जन्मादि-

कारणत्व सर्वनियन्तृत्व मुक्तोपसृप्यत्वादिधर्मा-श्रयस्य परमात्मनः स्वविभूत्यनुभवानन्दरूपभोगः सदैकरसस्तन्मात्रभोगस्य मुक्तानामपि साम्यात् तथाभूतब्रह्मानुभवानन्दस्य भोगस्य तेष्वपि सत्वात्तेन लिङ्गेन तेषां परायत्तस्वरूपकत्वेन जग-द्व्यापारवर्जं मुक्तानामैश्वर्यमिति निश्चीयते "ब्रह्म-विदाप्नोति पर"मित्युपक्रम्य सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते"ति "परमं साम्यमुपैती"-त्यादिश्रुतिभ्यः "भोगमात्रसाम्यलिङ्गाच्चे"तिसूत्रात् मात्रपदान्मुक्तगम्यैश्वर्यस्य स्वतन्त्रताव्यावृत्तिर्बो-ध्यत इति राद्धान्तः तत्र पुनरावृत्तिशङ्कां निवर्त्त-यति "एतेन प्रतिपद्यमाना इमं मानवावर्त्तं नावर्त्तन्ते श्रद्धया विद्यया ऽऽत्मानमन्विष्यादित्यभिजायते एतद्वै प्राणानामायतनमेतदमृतमयमेतत्परायण-मेतस्मान्न पुनरावर्त्तन्ते" इतिप्रश्ने मुण्डकेच "सूर्य-द्वारेण ते विरजाः प्रयान्ती"तिकठवल्लीषु च पर-विद्याप्रकरणे "शतं चैका हृदयस्य नाड्य" इतिपर-विद्यायामेव च ऐतरेयकेच "अमुष्मिँल्लोके सर्वा-न्कामानाप्त्वा ऽमृतः समभवदिति सखल्वेवं वर्त्त-यन्यावदायुषं ब्रह्मलोकमभिसम्पद्य नच पुनरा-

वर्त्तेत" इत्यादिश्रुतिभ्यः तत्र मानवावर्त्तं नाम मानवानां पुंसामावर्त्तो भ्रमणं गत्यागतिरूपं यत्र तत्संसारचक्रमित्यर्थः "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतं नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना" इत्यादिस्मृतिभ्यश्च "अनावृत्तिः शब्दादनावृत्तिः शब्दादि" तिसूत्रात् भगवद्भावसम्पत्तिं मुक्तिं श्रुतिमुखेरितां ॥ फलं वेदान्तशास्त्रस्य प्रावोचद्बादरायणः १ सर्ववेदशिरोगीतस्तर्कातीतश्च यो हरिः ध्यानेन मुक्तिदः कृष्णस्तं मुकुन्दं समाश्रये ॥ २ ॥

इतिश्रीमाधवमुकुन्दचरणेन विरचिते
परपक्षगिरिवज्राख्ये शारीरकहार्द-
सञ्चये फलाख्यो नाम चतुर्था-
ऽध्यायहार्दः समाप्तः ।



समाप्तश्चायं ग्रन्थः ।



# परिशिष्टः ।

---

प्रकरणप्रतिपाद्यस्याद्यन्तयोः प्रतिपादनमुपक्रमोपसंहारौ ॥ १ ॥
तस्यैव पुनः पुनः प्रतिपादनमभ्यासः ॥ २ ॥
तस्यैव मानान्तराविषयता ऽपूर्वता ॥ ३ ॥
तस्यैव श्रूयमाणं तज्ज्ञानात्तत्प्राप्तिप्रयोजनं फलम् ॥ ४ ॥
तस्यैव प्रशंसनमर्थवादः ॥ ५ ॥
तस्यैव दृष्टान्तैः प्रतिपादनमुपपत्तिः ॥ ६ ॥

श्लोकः ।

आदौ श्रद्धा ततः साधुसङ्गो ऽथ भजनक्रिया ।
ततो ऽनर्थनिवृत्तिः स्यात्ततो निष्ठा ततो रुचिः ॥ १ ॥
अथासक्तिस्ततो भावस्ततः प्रेमाभ्युदञ्चति ।
साधकानामयं प्रेम्णः प्रादुर्भावे भवेत् क्रमः ॥ २ ॥
धन्यस्यायं नव प्रेमा यस्योन्मीलति चेतसि ।
अन्तर्वाणिभिरप्यस्य मुद्रा सुष्ठु सुदुर्लभा ॥ ३ ॥

ननूपमन्यूपाख्याने "ब्रह्मत्वं केशवत्वं वा तुष्टो रुद्रः प्रयच्छति तथा तेजो मरीचिभ्यः शङ्खचक्रगदाधराः प्रादुरासन् हृषीकेषाद्दशा-तशो ऽथ सहस्रशः" इतिरुद्राद्विष्णुजन्म हरिवंशे च "अवध्यस्त्वमजेयश्च मत्तः शूरतरस्तथा भविता ऽसीत्यवोचं यत्तत्तथा न ततोऽन्यथे" त्यादिना विष्णवे वरप्रदानं द्रोणपर्वणि च शतरुद्रीये नारायणस्य शिवाद्वरप्रार्थनं लिङ्गपुराणे च श्रीनृसिंहं निगृह्य चर्मणा प्रावरणं शैवे काशीखण्डे च वीरभद्रेण विष्णुर्जितः अन्यत्र महादेवेन विष्णवे चक्रदानं तच्च वीरभद्रेण दधीचिना च विष्णोः सङ्ग्रामे विष्णु

ना प्रेषितं मालाकारमभूदित्यादिभिस्तत्र तत्र रुद्रस्यैव परत्वस्मरणात् विष्णोस्तु तज्जन्यतदनुग्राह्यत्वतद्दत्तवरसम्प्रदानत्वचक्रलब्धत्वादिभ्यो ऽवरत्वावगमात्कुतः प्राधान्य"मितिचेन्न अश्रौतत्वेन तुच्छतरत्वात् श्रुतिषु विष्णोः सकाशादेव रुद्रस्य जन्मप्रसिद्धेः यत्तूक्तमवध्यस्त्वमित्यादि विष्णवे वरप्रदानं तत्तुच्छं विरुद्धत्वात् मत्तः शूरतरस्तथा अपि नः समरं गत्वा भविष्यति ममाधिक"इति-तदाधिक्यस्य पूर्वमेव सिद्धत्वात्तदनुवादमात्रं न कश्चिदपि देव उपास्यो भूत्वा स्वस्मादधिकं वरं प्रयच्छति अशक्तत्वात् प्रसाद-काष्ठाङ्गतश्चेत्तुल्यवरं तत्रापि किञ्चिन्न्यूनमेवेतिनियमात् आधिक्योक्तिस्तु वादत्वाद्विरुद्धैव वरप्रार्थनादिस्तु लोकसङ्ग्रहार्थः श्रीनृसिंहस्य चर्मणावेष्टन मप्यवैदिकत्वेन श्रुतिविरुद्धत्वात्तुच्छतरं विश्वाधारस्य व्यापकस्य तदसम्भवात् यच्चोक्तं वीरभद्रेण विष्णुर्जित इति तत्तुच्छं तत्स्वामिनो रुद्रस्यैव विष्णोः सकाशाद् हरिवंशादौ पराजयस्मरणात् यत्तूक्तं महादेवेन विष्णवे चक्रं दत्तं तदपि वाग्विलासमात्रं विष्णुधर्मे चक्रस्य भगवद्रूपत्ववर्णनात् किञ्च यदि तद्धारणे समर्थो ऽभविष्यत्तर्हि बाणरक्षार्थं किमिति श्रीकृष्णः प्रार्थितः यदप्युक्तं वीरभद्रदधीचिकण्ठे चक्रस्य मालाकारभवनं तत्तुच्छं वामने तद्विपरीदर्शनादित्यलं पल्लवितेन "स्थित्यादये हरिविरञ्चिहरेतिसंज्ञाः श्रेयांसि तत्र खलुसत्त्वतनोर्नृणांस्यु"रिति श्रीभागवतोक्तदिशाविष्णुशिवयोरैक्यमेव "भिन्नरुचिर्हि लोक" इतिन्यायेन यस्य यस्मिन्रुचिस्सतस्यैवोत्कृष्टत्वं वदतीत्यन्यदेतदितिशम् ॥

---

अष्टटीका समन्वितम् ।

## श्रीमद्भागवतम् ।

---

यथा — श्रीधरस्वामी, दीपनी, वीरराघव, विजयध्वज, क्रम-सन्दर्भ, सुबोधिनी, चक्रवर्ती, सिद्धान्तप्रदीप, तथा हिन्दी भाषानु-वाद सहित महिना २ प्रकाशित होता है. प्रथमस्कन्ध तक प्रका-शित भया. समग्र ग्रन्थ का अग्रिम मूल्य ५०) रुपया है, वार्षिक १२) रुपया. प्रतिखण्ड १) रुपया, डाक महसूल अलग देने होगा॥

---

## श्रीजगन्नाथवल्लभ नाटकम् ।

महाकवि श्री रामानन्द राय कृत जगन्नाथ वल्लभ नाटक श्री राधाकृष्ण क्रीडा का वर्णन रूप मूल संस्कृत हिन्दी भाषानुवाद सहित प्रकाश भया है इसके पांच अङ्क हैं तिसमें प्रथमाङ्क में पूर्व राग निरूपण है १ दूसरे में भाव परीक्षा है २ तीसरे में भाव प्रकाश है ३ चतुर्थ में श्री राधिका जी का अभिसार है ४ पञ्चम में श्री राधिका तथा श्री कृष्ण का सम्मेलन पूर्वक विहार का वर्णन है ५ इसमें गीतगोविन्द के तरह से गाने के लायक नाना राग रागिणी पद भी हैं मूल्य ॥।) आना ॥

श्रीनित्यस्वरूप ब्रह्मचारी ।

श्रीदेवकीनन्दन प्रेस, वृन्दावन,